# उपसर्गार्थचन्द्रिका

(A THESAURUS
OF
SANSKRIT PREPOSITIONAL VERBS)

सेयं

वाक्यपदीयस्य सँस्कर्त्रा श्रीगान्धिचरिताऽनुवादकला-प्रस्तावतरङ्गिणी-शब्दाप-
शब्दविवेक-वाक्यमुक्तावली-व्याकरणचन्द्रोदय-वाग्व्यवहारादर्शादीना-
मनेकेषां ग्रन्थानां निर्मात्रा व्याकरणमहाभाष्यस्य विवरीत्रा
श्रीरामकृष्णतनुजनुषा
श्रीचारुदेवेन शास्त्रिणा प्रणीता

तत्रायं तृतीयः खण्डः
(वि————————अधि)



स एष

भारतीय-विद्या-प्रकाशनस्य
दिल्ली-वाराणसीस्थस्था-
ध्यक्षेण स्वेन व्ययेन प्राकाश्यं नीतः ।

प्रकाशक :

**भारतीय विद्या प्रकाशन**

१. १ यु० बी० बंगलो रोड, जवाहर नगर
दिल्ली—११०००७

२. पो० बा० १०८, कचौड़ी गली
वाराणसी— २२१००१

प्रथमं संस्करणम् । तृतीय. खण्डो मईमासे १९७९ वत्सरे प्रकाशितः ।

मूल्यं तृतीयखण्डस्य : ३०.००

मुद्रक : अमर प्रिंटिंग प्रेस (शाम प्रिंटिंग एजेन्सी) ८/२५ विजय नगर, दिल्ली-९

# निवेदना

अयमिदानीं तृतीयः खण्डः प्राकाश्यं यातीति खेदसम्भिन्नो मे हर्षः। प्रतनुतनूकस्यास्य साग्रेण संवत्सरेण प्रकाशनमभूदिति खेदः। असिद्धेः सिद्धिः श्रेयसी व्याक्षिप्तापि चेदिति हर्षः। व्याक्षेपस्य च नाहं प्रतिभूरिति न मे परिमर्षिष्यन्ति वस्तुस्थितेः कोविदाः सूरयः। जानेऽतियत्सु वत्सरेषु भृशायते कृत्यां मेऽस्यां समुत्सुकता शास्त्रं जुषमाणानां गालोडिते प्रवृत्तानां लब्धवर्णानाम्। परं परवानहं तत्र किं करिष्ये। परा च परवत्ता मे। मुद्रकश्च प्रकाशकश्चेत्युभावपि समं मन्दायेते। अस्तु। अलमतीतोपालम्भेन। इदमिदानी विज्ञास्यमानं पराय परितोषाय भविष्यति सर्वस्योन्मनसो जनस्याऽसकृत् प्रयुक्तः प्रकाशकः किञ्चित्त्वरमाण इव लक्ष्यते मुद्रणसंविधान्तरं प्रकृतः। उपक्रान्तमुद्रणश्च चतुर्थः खण्डः साम्प्रतमिति। लघु चायं मासत्रयेण मासचतुष्केण वा प्रकाशयितेत्यलमाशंसे।

तृतीयस्मिन्नस्मिन्खण्डे न मे किमपि विशिष्य वक्तव्यमस्ति। अस्ति चेदं विनीतवत्प्रार्थ्यम्—पूर्वैः कृतेषु विवरणेषु क्वचित्को मत्कृतो विमर्शः किमसारः सारवान्वेत्यवश्यं विविञ्चन्तु प्रविवेक्तृप्रवेकाः। महाभागास्ते मदभिप्रायं विरुन्धन्तु वाऽनुरुन्धन्तु वेति न मे चिन्ता। प्रबोधो मेऽभीष्ट इति तद्विवेचनमभीच्छामि।

मया नाम बहु प्रयस्तमिह सर्वमादेयमादातुम्। कियत्परिगृहीतं कियच्च परिशिष्टमित्यपि बाहुश्रुत्येन विश्रुतास्त एव प्रभवन्ति विशिष्य वक्तुम्।

योऽत्रोदाहृतिषु क्रमविशेषः श्रितः स किंलक्षणः किंहेतुकश्चेति नातः पूर्वमुक्तम्। वक्तव्यं चेदमासीदिति सम्प्रत्युच्यते—सर्वप्रथमं तिङन्ताः प्रयोगा अनुक्रान्ताः। तत्रापि पूर्वतरं गणपठिताः केवला धातवस्तिङि प्रत्ययेऽनुक्रम्यन्ते ततः सनाद्यन्ता धातवस्ततश्चोभये कृति प्रत्यये। तत्रापि शतृशानच्प्रत्ययान्ताः प्रयोगाः प्रथमं न्यस्तास्ततः क्तान्तास्ततस्तुमुन्नन्तास्ततश्च कृत्यान्ताः, अन्ते च कर्तृकर्मभावेषु ये विहिताः कृतस्तदन्ता इत्यवान्तरः क्रमः।

सर्वस्यान्ते च तद्धिता इत्येषोऽनुक्रमः । अयं च किंकृत इति न दुरुन्नयं सुधीभिः । प्रतिनियतविषयाः शब्दा इति कश्चिदेवोपसर्गः कस्मिंश्चिदेव धातावासङ्गमर्हति न सर्वस्मिन्, कस्मिंश्चिदेव प्रत्यये न यस्मिन्कस्मिन् इति विषयप्रतिनियमः सुष्ठु व्यक्ततामेति । यद्यप्येषा मे प्रवृत्तिर्भूयसे ममायासायाऽभूत्तथाप्यर्थवतीति न मे परिखेदाय ।

आशंसेऽत्रापि खण्डे बह्वादेयं पश्यन्तः परं प्रसत्स्यन्ति प्रगुणप्रकृतयः सुधिय इतीहैव वाचमवसाययाम्यहं विदां विधेयश्चारुदेवश्शास्त्री ॥

## PREFACE

That the third Fasciculus is seeing the light of the day gives me both joy and sorrow. Composed in a short compass (of 208 pages) it has taken more than a year. This saddens me. Though delayed, it has appeared at last rejoices me, for success is better than failure. I am not responsible for the delay. The learned knowing the full facts would not be offended with me. I know the desire of the learned devoted to the study of the shāstras and given to a critical appreciation of the language for my (complete) work has been growing with the passage of years. But I could not have my way. I very much depend upon others. The publisher and the printer have been both equally slow. Let me stop at that and no more find fault with the past. It would be heartening to all anxious readers that in response to our repeated pleadings the publisher seems to be a bit swift and has made fresh printing arrangements. The fourth Fasiculus has already gone to the press. I fully hope it would be published shortly in three or four months.

On this Fasciculus I have nothiug particular to say. But I have to make a request in all humility. Let the great critics (of today) sit in judgement upon my critical comments offered on the expositions by the earlier writers and say if there is any substance therein. I would not mind if their judgement goes against me. I seek it for it would enlighten me.

I have striven hard to make the work as comprehensive as possible. Yet it is for the learned famed for their extensive knowledge to pronounce how much I have included and how much left out.

A certain sequence has been observed in respect of illustrations in this work. What sort of a sequence it is and what purpose it is intended to serve has not been explained. It should have been. Hence it is being done now. Illustrations are listed here in the order of finite verbs coming first of all. Herein too there is an internal order. Roots read in the Dhātupāṭha come first and complex roots ending in *san.* etc. come next. Then follow roots with *kṛt* suffixes in the order of *śatṛ*, *śānac*, *kta*, *tumun*, kṛtya and all suffixes ordained in the sense of *kartṛ*, *karma* and *bhāva*. Last of all come the Taddhita formations. Why this sequence has been resorted to is not beyond the ken of the keen-minded. Words have, each one of then, a very well-defined sphere; hence only a particular preposition could be combined with a particular root, and not with any. Likewise a particular preposition could be combined with a particular root followed by a particular suffix and not promiscuously. The order followed here brings it out and has therefore a purpose. Though the maintenance of this order throughout has entailed additional labour, it has not wearied me, for it is purposeful.

I hope scholars sincere by nature would be very pleased to find herein much of use. With this I conclude.

CHARUDEVA SHASTRI

Surabhi, 3/54
Roop Nagar, Delhi—7
28th May, 1979

ओं नमः परमात्मने ।

नमो भगवते पाणिनये ।

नमः शिष्टेभ्यः । नमः पूर्वेभ्यः पथिकृद्भ्यः

उपसर्गा निषिञ्चन्ति वाच्यपूर्वां मनोज्ञताम् ।
इत्युपसर्गवाल्लभ्यमृषीणां सम्प्रसिध्यति ॥१॥

अतो वाचो विवेक्तारो वक्तारो वाग्मिनः किल ।
धातूपसर्गयोगेण तं तमर्थं प्रचक्षते ॥२॥

संहितासु सभाष्यासु निषत्सूपनिषत्सु च ।
भारते चादिकाव्ये च कल्पेषु स्मरणेषु च॥३॥

यः प्रायो ह्युपसर्गाणां काव्यनाटकयोस्तु सः ।
गद्ये समासभूयिष्ठेऽथो विमृग्यक्रिये कुतः ॥४॥

आसंहितं समाहारं समाहारमुदाहृतीः ।
आकाव्यनाटकं चायमुपसर्गार्थसङ्ग्रहः ॥५॥

प्राक्तनान्नूतनाच्चापि वाङ्मयात्संप्रणीयते ।
शिष्टप्रयुक्तिपद्यायाः प्रव्यक्तं प्रतिपत्तये ॥६॥

उपसर्गा द्योतकाः केचिद्वाचकाश्चाप्यमी स्मृताः ।
अनर्थकाश्च लक्ष्यन्ते केचिद्वस्तुस्वभावतः ॥७॥

धातूपसर्गयोरैक्यं वादिनः केचिदास्थिताः ।
सम्भूयाप्यर्थवाचित्वं ते नः सूक्ष्मदृशो मताः ॥८॥

इतीदं पक्षनानात्वं सम्प्रधार्यावधारितम् ।
सङ्ख्यया पश्चिमः पक्षो गुणैरेष ह्यपश्चिमः ॥९॥

कृत्यामास्वादमास्वादमेतस्यां वर्तनि नवाम् ।
नवार्थस्यातिसन्तृप्ताः सम्प्रेष्यन्ते विपश्चितः ॥१०॥

अनिशं भासमानां ते चकोराः शब्दवित्तमाः ।
प्रत्यग्रां चन्द्रिकां चेमां निपेष्यन्ते समुत्सुकाः ॥११॥

गन्धिषु कुड्मलेषु (रघु० १६।४७)। **विजृम्भणं विकासः**। रोपितभ्रूविजृम्भत्रस्ताब्धिः (भा० पु० ६।१०।४)। **भ्रूविजृम्भः=भ्रुकुटिबन्धः। अत्रार्थेऽन्यत्र दुर्लभः प्रयोगोऽन्वेष्यः शास्त्रदृश्वभिः**। तदादिराजस्य यशो विजृम्भितम् (भा० ४।२१।८)। **प्रसृतम्, प्रथितमित्यर्थः**।

**—ज्ञा (ज्ञा अवबोधने)**। वि जानीह्यार्यान्ये च दस्यवः (ऋ० १।५१।८)। **विविक्तं जानीहीत्याह**। य एवं वेद गृहवान्भवतीति विज्ञायते (आप० श्रौ० १।१।२।११)। यत्राविकृतं ब्राह्मणमुच्चारयति तत्र **विज्ञायत इत्याह (धूर्तस्वामी)**। ते मे वाचं विजानन्तु (भा० वि० २३।१२)। **प्रत्यभिजानन्त्वित्याह**। वाचं को वा विजानाति पुनः संश्रुत्य संश्रुताम् (याज्ञ० ३।१५०)। **अनन्तरोदीरित एवार्थः**। भूय एव भगवान् विज्ञापयतु (छां० उ० ८।८।७)। **विशेषेण ज्ञापयतु वेदयत्वित्यर्थः**। यद्वै त्वं वेत्थाहं तद् विज्ञापयामि (श० ब्रा० १।४।५।१०)। **(इतरान्) बोधयामीत्यर्थः**। विजानन्तोऽप्येते वयमिह विपज्जालजटिलान्न मुञ्चामः कामान् (भर्तृ० ३।२१)। यथा यथा हि पुरुषः शास्त्रं समधिगच्छति। तथा तथा विजानाति (मनु० ४।२०) **विजानाति=ज्ञानवान्भवति**। देशकालनयैर्युक्तो विज्ञः कार्यविनिश्चये (रा० ४।४०।१८)। **विज्ञः कुशलः प्रवीणः**। यज् जीव्यते क्षणमपि प्रथितं मनुष्यैर्विज्ञानशौर्यविभवार्यगुणैः समेतम्। तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः...(पञ्चत० १।२४)॥ **विज्ञानं बोधः, प्रबोधः, बुद्धिः**। ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः (गीता ७।२)। **विज्ञानं लौकिकं ज्ञानम्, लोकानुभवः**। विज्ञानं हि महद् भ्रष्टम् (रा० ३।७१।३०)। **विज्ञानमतीन्द्रियज्ञानम्**। लब्धविज्ञानम् (भा० शां० ४४।५)। **विज्ञानं प्रवृत्तिर्वृत्तान्तः**। कालप्रयुक्ता खलु कार्यविद्भिर्विज्ञापना भर्तृषु सिद्धिमेति (कु० ७।९३)। **विज्ञापना प्रार्थना**। अहो नु खलु विज्ञापनाव्यग्रे मयि शब्द इव श्रूयते (स्वप्न० १)। **विज्ञापना घोषणा**। अस्ति मे किमपि विज्ञाप्यम् (उत्तर० १)। **विज्ञाप्यं विज्ञप्तिः**।

**—ज्या (ज्या वयोहानौ)**। कृतं यजमानो विजिनाति (आप० श्रौ० ५। २०।१)। **विजिनाति जयति। (रामाग्निचिद्वृत्तिः)। विर्विरोधे**।

**—टङ्क् (टकि बन्धने)**। गुम्फितैरुशनसा सुभाषितैर्यस्य हाटकविटङ्कमङ्कितम् (नै० १८।२४)। **विटङ्कः कपोतपालिका**। कपोतपालिकायां तु **विटङ्कं पुन्नपुंसकम् इत्यमरः। टङ्कः पाषाणदारणो भवति। विपूर्वस्तु स एव कपोतपालिकां ब्रूत इत्यहो उपसर्गमाहात्म्यम्**। सभारण्यविटङ्कवान् (भा० आदि० १।८८)। **भारतद्रुम इति विशिष्यते। विटङ्काः पक्ष्युपवेशनस्थानानि। अयमेव** महीधरविटङ्कः (मालती० १०)। **विटङ्कः शिखरम्। औपचारिकः प्रयोगः**।

रोमोत्सवो मम यदङ्घ्रिविटङ्किताया: (भा० पु० १।१६।३५) । **विटङ्किता= बद्धा, संस्पृष्टा, अलङ्कृता ।**

— डी (डीङ् विहायसा गतौ) । विडम्बितं विडीनं स्यात् (भा० ४१।२७)। **विडीनं मल्लवदुड्डीयोड्डीय गमनम् ।**

—**तन्** (तनु विस्तारे)। त्वम् अग्ने सप्रथा असि जुष्टो होता वरेण्य: । त्वया यज्ञं वितन्वते (ऋ० ५।१३।४)। **वितन्वते=अनुतिष्ठन्ति ।** विराटपर्वप्रद्योती भावदीपो वितन्यते (नीलकण्ठ:)। **वितन्यते विरच्यते प्रणीयते ।** ध्यातश्चेतसि कौतुकं वितनुते कोपोपि वामभ्रुव: (सा० द०)। **वितनुते=करोति=जनयति ।** स्मरसि रुदितै: स्नेहाकूतं तथा व्यतनोदसौ (मालती० ६।११)। **व्यतनोत् व्याञ्जयत् । आविरभावयत् ।** तेन वीर्यं वितन्वता (रा० ४।६।८६)। **वितन्वता=प्रकटयता ।** ब्रह्मन् सन्तनुशिष्यस्य कर्मच्छिद्रं वितन्वत: (भा० पु० ८।२३।१४) । **वितन्वतो यज्ञं तन्वानस्य । अत एव वितानो यज्ञो भवति । तथा चामर: पठति**—क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके । **अत एव च** वैतानास्त्वां वह्नय: पावयन्तु (शा० ४।८) । **इत्यत्र वैताना यज्ञिया: । वितानमुल्लोचोपि, यच्चन्द्रोदय इत्याचक्षते ।** श्रेणीबन्धाद् वितन्वद्भिरस्तम्भां तोरणस्रजम् (रघु० १।४१)। **वितन्वद्भि:=विरचयद्भि: ।** अमुं यज्ञं विततमेयाय (छां० उ० १।१०।७)। **विततं चिराय तायमानम् ।** विततयज्ञ: (शा० ७।३४)। **अनुष्ठिताध्वर: ।** यज्वभि: संभृतं हव्यं विततेष्वध्वरेषु स: (कु० २।४६) । **उक्तोऽर्थ: ।** विततवपुषा महाहिना (कि० १२। २२)। **महाकायेनेत्यर्थ: ।** भवति विततश्वासोन्नाहप्रणुन्नपयोधरम् (मालती० १०।१५) । **विततोऽविश्रान्त:=अविरत: ।** शब्दवेध्यं च विततं लघुहस्ता विशारदा: (रा० १।५।२०)। **विततं विप्रकृष्टम् ।** स्फुरितविततजिह्व: (मृच्छ० ६।१२)। **वितता निरायता ।** प्रस्वेदबिन्दुविततं वदनं प्रियाया: (चौर० ६)। **विततं व्याप्तम् ।** यथार्द्रं वस्त्रं वितानितं लघीयसा कालेन शुष्येत् (यो० सू० ३।२२ भाष्ये) । **वितानितं विस्तारितम् ।** व्रततिविततिभिस्तिरोहितायाम् (शिशु० ७।४५)। **विततिः प्रतान: ।** वंशविततिषु विषक्तपृथुप्रियवालधिभि: (कि० १२।४७)। **वंशवितततय:=वेणुषण्डा: ।** यदकालमेघविततिर्व्ययूयुजत् (मालती० ६।४७)। **विततिः पङ्क्ति: ।** शृङ्गोच्छ्रायैर्यो वितत्य स्थित: खम् (मेघ० ६०)। **व्याप्येत्यर्थ: ।** वितत्य किरतो: शरान् (उत्तर० ६।१)। **धनुराकृष्येत्याह ।** तत्र हत्वा पशून्मेध्यान् वितत्यायंतने शुभे (हरि० २।१६।११)। **वितत्य हवीरूपेण निरूप्य ।**

— **तर्क्** (तर्क भाषार्थ:)। तन्नूनं मृत्युमाप्स्यतीति वितर्कयामि (पञ्चत०)।

अभ्यूहामीत्यर्थः । किं नु स्विदेतत् पततीति सर्वे वितर्कयन्तः परिमोहिताः स्मः (भा० )।

—तुद् (तुद व्यथने) । विराटं वितुदन्त्येते गृध्रगोमायुवायसाः (भा० स्त्री० २०।२३)। वितुदन्ति विलुञ्चन्ति, अवलुम्पन्ति । वि पूषन्नारया तुद पणेरिच्छ हृदि प्रियम् (ऋ० ६।५३।६)। वितुद=विध्य । शुनं सुफाला वि तुदन्तु भूमिम् (अथर्व० ३।१७।५)। वितुदन्तु=विलिखन्तु, विकृषन्तु । यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति (याज्ञ० ३।५३)। नखाग्रैः केन ते भीरु वितुन्नं हि स्तनान्तरम् (रा० ५।६८।७)। वितुन्नम्=विक्षतम् ।

—तृद् (उतृदिर् हिंसानादरयोः) । पराञ्चि खानि व्यतृणत् स्वयम्भूः (कठ० उ० ४।१)। व्यतृणत् कर्तित्वा निरमात् । यदा त्वष्टा व्यतृणत् पिता त्वष्टुर्य उत्तरः । गृहं कृत्वा मर्त्यं देवाः पुरुषमाविशन् (अथर्व० ११।८।१८) ॥ व्यतृणत्=कर्तित्वा सुषिरमकरोत् । कः सप्त खानि वि ततर्द शीर्षणि (अथर्व० १०।२।६)। विततर्द=चिच्छेद, छेदपूर्वकं निर्ममौ । उत्कीर्य रचयामासेत्यर्थः ।

—तृष (ञितृषा पिपासायाम्) । गणा मे मा वितृषन् (वा० सं० ६।३१)। तृषा माऽवसदन् इत्याह । आदित्या वा अस्माल्लोकादमुं लोकमायन् तेऽमुष्मिंल्लोके व्यतृष्यन् (तै० सं० १।५।४।४)। व्यतृष्यन्=पिपासाकुला अभूवन् ।

—तॄ (प्लवनतरणयोः) । कथं त्वद्गमनार्थं मे वाणी वितरतेऽनघ (भा० सभा० ४५।५५)। अवतरतीत्यर्थः। वक्तुं प्रक्रमत इति विवक्षति । याहीति कथं ब्रूयामित्यर्थः । अवस्यार्थे विशब्दः । वितर गिरमुदारां येन मूकाः पिकाः स्युः (अमरोद्घाटने स्वामी)। वितर=देहि, उद्गिर, उच्चारय । तस्माद् द्वारं वितराम्येष वन्दी (भा० वन० १३३।२०)। उद्घाटयामि विवृणोमीत्यर्थः। प्रवेशमनुजानामीति भावः । अन्यत्र दीयन्तां द्वाराणीत्यत्र पिधीयन्तामित्यर्थो गम्यते । भगवान् मारीचस्ते दर्शनं वितरति (शा० ७)। ददातीत्यर्थः, साक्षादुपतिष्ठत इत्युक्तं भवति । वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे (उत्तर० २।४)। वितरति प्रदिशति । वितराम्यर्बुदं गवाम् (भा० आदि० १६७।३१)। उक्तोऽर्थः । ज्योत्स्नाशङ्कामिह वितरति हंसश्रेणी (कि० ५।३१)। वितरति=जनयति । वितरेच्च यथादोषमभिष्यन्दक्रियाविधिम् (सुश्रुत० २।३३७।६)। वितरेत्=आचरेत् । अक्षासो अस्य वितिरन्ति कामम् (ऋ० १०।३४।६)। वितिरन्ति वर्धयन्ति, उपचिन्वन्ति । हिंसन्तीति वा । काममिन्मे मघवन्मा वि तारीः (ऋ १०।५४।५)। मा हिंसीरित्यर्थ इति सायणः। मनो हि मे वितरति नैकं त्वं वरमर्हसि (भा० सभा० ७१।३१)। तडिल्लेखालक्ष्मीं वितरति पताकावलिरियम् (प्र० च०)। वितरति वर्धयति, इतो वाभिवर्तयति । व्यन्तरिक्ष-

मतिरन्मदे सोमस्य रोचना (इन्द्रः) (ऋ० ८।१४।७)। व्यतिरत्=व्याश्नुत=अत्यक्रामत्। होतेव सद्म विधतो व्यतारीत् (ऋ० १।७३।१)। होतेवाग्निः परिचरतो यजमानस्य गृहं प्रविशतीत्याह। वाजी न प्रीतो विशो व्यतारीत् (ऋ० १।६९।५)। दूरे नयति, देशाद् देशान्तरं नयतीत्याह। विशेषेण तरति अतिक्रामति इति तु सायणः। गतो नाध्वा वि तिराति जन्तुं प्र णः स्पार्हाभिरूतिभिस्तिरेत (ऋ० ७।५८।३)। इहापि मरुतः प्रार्थ्यन्ते। वितिरतिर्हननार्थो वर्धनार्थो वा। स दक्षिणमेवाग्रे गोदानं वितारयति (श० ब्रा० ३।१।२।५)। कङ्कतेन विविच्य गोदानस्थान् केशान् विजटान्करोतीत्यर्थः। गोदानं श्मश्रु, काकपक्षो वा। यथासवनं वितारयति (प्रैषम्) (शां०श्रौ० ७।१।४)। वितारयति=अनुतिष्ठति=आचरति। दक्षिणं गोदानं वितार्योनत्तीमा आप इति (का० श्रौ० ७।२।६)। पूर्वतर एवार्थः। राज्ञां वितीर्णस्कन्धानां मरुल्लोलाः शिरोरुहाः (राज० ७।४४६)। वितीर्णस्कन्धाः=दत्तांसाः। समरवर्माद्यैर्वितीर्णसमरोऽसकृत् (राज० ५।१३५)। दत्तयुद्ध इत्याह।

—दंश् (दंश दशने)। आशीविषविदष्टानां शराणां रूपमाबभौ (भा० द्रो० ९८।१६)। (भुजगः) विदश्यास्येन वल्मीकं विवेश। विदश्य दष्ट्वा। विशब्दो नेह विशेषकृत्।

—दय् (दय दानगतिरक्षणहिंसादानेषु)। स्थिरा चिदन्ना दयते वि जम्भैः (ऋ० ४।७।१०)। विदयते=अपच्छिनत्ति। य एक इव विदयसे वसु मर्ताय दाशुषे (ऋ० १।८४।७)। वितरसीत्याह। विदद् वसुर्दयमानो वि शत्रून् (ऋ०३।३४।१)। विदयमानः=निघ्नन्=हिंसन्, निबर्हयन्। वि सेनाभिर्दयमानो वि राधसा (ऋ० १०।२३।१)। विदयमानः=वितरन्, अतिसृजन्, विसृजन्। अमित्रेभ्य इषूः, मित्रेभ्यश्च राधांसि दक्षिणा रातीर्विभजस इत्युक्तं भवति।

—दल् (दल विशरणे)। त्वदिपुभिर्व्यदलिष्यदसावपि (नै० ४। ८८)। विशीर्णतां विभेदं यायादित्यर्थः। विदलन्ति स्म कुद्दालैः स्थलानि च समन्ततः (गोरेसियो सं० रा० २।८७।१०)। विदलन्ति उत्खनन्ति, अवदारयन्ति। कायः कठिनदृषदन्तर्विदलितः (भर्तृ० २।७७)। विदलितः=विशीर्णः। शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम् (मनु० ९।२३०)। विदलः शाखा, विटपः।

—दस् (दसु उपक्षये)। पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः (ऋ० १। ११।३)। न विदस्यन्ति नोपक्षीयन्ते। सानुबन्धा भवन्तीत्यभिप्रायः। तस्मिन्पचमाने व्यदस्यत् (अग्निः) (काठक० १७।६)। व्यदस्यत्=अशाम्यत्। मा

सा ते अस्मत् सुमतिर्विदसत् (ऋ० १।१२१।१५)। मा विदसत् मा विनशत्, माऽपगात्। यथाऽविदासिनः कुल्याः सरसः स्युः सहस्रशः (भा० पु० १।३।२६)। अविदासिनोऽक्षय्यात्सरसः।

—दह् (दह भस्मीकरणे)। तस्यै ह विदग्धायै सृगालः संभवति (श० ब्रा० १२।५।२।५)।

—दा (डुदाञ् दाने दाण् दाने)। दक्षिणां व्यददात्तेषां कर्मिणां तदनन्तरम्। प्राचीं होत्रे ददौ (गोरेसियो सं० रा० १।१३।३६)। व्यददात्=विभज्याददात्। वि महच्छर्म यच्छ (अथर्व० १।२०।३)। वियच्छ=विशेषेण प्रयच्छ। वि मन्यो शर्म यच्छ (ऋ० १०।१५२।५)। उक्तोऽर्थः। तेषां यथागुणमावसथाः शष्पान्नपानं च विदेयम् (आप० ध० २।२५।६)। विदेयं विशेषेण देयम्।

– दाश् (दाशृ दाने)। ये ते हवेभि र्वि पणीरदाशन् (ऋ० ७।१६।६)।

—दिव् (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु)। इमां सभामध्ये यो व्यदेवीद् ग्लहेषु (भा० सभा० ७१।५)। अहारयत्, पराजयत। वि देवं दीव्यमाना जात्या आसते (श० ब्रा० १।८।३।६)। विदीव्यमानाः शृङ्गारक्रीडां कुर्वाणाः।

—दीधी (दीधीङ् दीप्तिदेवनयोः)। अर्वाङेहि मा विदीध्यः (अथर्व० ८।१।६)। मा विचीचरः, मा विमृक्षः। किं मुहुश्चिद्वि दीधयः (ऋ० ८।२१।६)। उक्तोऽर्थः।

—दुष् (दुष वैकृत्ये)। प्रिया तष्टानि मे कपिर्व्यक्ता व्यदूदुषत् (ऋ० १०।८६।५)। व्यदूदुषत्=व्यकरोत्, वैकृतमनैषीत्। कथं वयं निवत्स्यामः कैकेय्या च विदूषिताः (रा० २।६६।२१)। विदूषिता राज्यगर्वात् तिरस्कृता इति तिलककारः।

—दुह् (दुह प्रपूरणे)। विदुहन्ति वा एते यज्ञं निर्धयन्ति (श०ब्रा० ४।६।६।२१)। विशब्दो दोहस्य विशेषमाह। दोहः प्रपूरणं (पूरणारम्भः) भवति विदोहस्त्वापूरणम्, लक्षणया रेचनम्। मा मामिमे पतत्रिणी विदुग्धाम् (ऋ० १।१५८।४)। मा विदुग्धां विशेषेण दोहगतसारं मा कार्ष्टाम् इति सायणः।

—दू (दूङ् परितापे)। विदूयमाने (गोष्ठे) चीवरम् (गो० गृ० ४।६५)। विदूयमाने आर्द्रे। दूङ् परितापे पठितस्तस्याग्न्यादिस्पर्शेन सन्तप्तीभवनं मुख्योऽर्थः, मानसः संज्वरस्तूपचारात्। इह विमुख्यमर्थं विपर्यासयति।

—दृश् (दृशिर् प्रेक्षणे)। मया सो अन्नमत्ति यो विपश्यति (ऋ० १०। १२५।४)। अनेकत्र दर्शनमेकैकश्येन वा दर्शनं विदर्शनम्। प्रदीप्तानि व्यदृश्यन्त

सहदेवबले तदा (भा० सभा० ३१।२४)। विविक्ततयाऽदृश्यन्तेत्याह । यो विश्वाभि विपश्यति भुवनानि सं च पश्यति (ऋ० ३।६२।६)। विपश्यति= अभितो नानारूपेण पश्यति । यस्य वीरस्य यो वेषो यो ध्वजो यच्च वाहनम् । तेन तेन व्यदृश्यन्त समुपेता नराधिपाः (भा० आश्रम० ३२।१४)॥ व्यदृश्यन्त =विविक्ततयाऽदृश्यन्त । विशब्दो वैविध्यवाचकः स्थाने । तमसा संवृतेनाथ न स्म किञ्चिद् व्यदृश्यत (भा० कर्ण० ६३।४४)। न व्यदृश्यत विवेकेन पार्थक्येन नादृश्यत । न प्राज्ञायतेत्यर्थः । व्यदृश्यन्त महाराज परस्परजिघांसवः (भा० भीष्म० ४६।१५) । उक्तोऽर्थः । अदर्शि वि स्रुतिर्दिवः (ऋ० १।४६।११)। व्यदर्शि=विस्पष्टं दृश्याऽभूत् । प्रादुर्भूता । इति तस्य विपश्यतो यथावत् (बुद्ध० ५।१४)। विपश्यतः=विशिष्य पश्यतः, विजानतः । विदर्शिता यदा देवी (कैकेयी) कुब्जया पापया भृशम् (रा० १।१०।१)। विदर्शिता विपरीतं बोधिता, अन्यथा ग्राहिता । सर्वथा तु लघुत्वं ते कत्थनेन विदर्शितम् (रा० ३। २६।२०) । अत्र वैविध्यं नार्थः, सर्वथेत्यनेन तदुक्तेः । शब्दोपजनो नार्थोपजनः ।

—दॄ (दॄ विदारणे)। अयोघनेनाय इवाभितप्तं वैदेहिबन्धोर्हृदयं विदद्रे (रघु० १४।३३)। विदद्रे विदीर्णतां ययौ । विददार नखैस्तस्य पृष्ठं स पतगेश्वरः (रा० ३।५७।२४)। विददार=बिभेद=चक्षाण । श्रुतं सखे श्रवणविदारणं वचः (मुद्रा० ५।६) । युवजनहृदयविदारणमनसिजनखरुचिकिंशुकजाले (गीत० १)। तेन विद्याधरांस्तांस्तान्वरानुद्दिशतो बहून् । पितुर्विदारणं कृत्वा कन्यैवाद्याप्यहं स्थिता (कथा० २६।६३)॥ विदरः स्फुटनं भिदेत्यमरः । अदूरजाग्रद्विदरप्रणालीरेखा (नै० ८।३८)॥ विदरो रन्ध्रम् । स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत (ऐ० उ० १।३।१२)। विदार्य विषीव्य, विसित्य, उद्घाट्य । इह सीमन्शब्दः पुंसि प्रयुक्तः, लोके तु स्त्रियां नियतः ।

—दो (दो अवखण्डने)। विदानाद् विद्युद् विद्यत्येनं सर्वस्मात्पाप्मनः (श० ब्रा० १४।८।७।१)। विद्यति भिनत्ति, वियुङ्क्ते, वियौति, विपृणक्ति इत्यनर्थान्तरम् । सोमं विद्यद्भिर्ग्रावभिः सुतम् (वा० सं० २६।४)। विद्यद्भिः पिषद्भिः । अतिप्रसङ्गे विदित्य कृष्णस्तान् वारयामास (हरि० ८४३५)। विदायेति तु पाणिनीयाः । विवादास्पदस्य वस्तुनोन्तं कृत्वेत्यर्थः ।

—द्युत् (द्युत दीप्तौ)। स स्तनयति स वि द्योतते स उ अश्मानमस्यति (अथर्व० १३।४।४१)। विद्योतते विभाति । स हि द्युता विद्युता वेति साम (ऋ० १०।९९।२)। द्युता भासा, गभस्तिना ।

—द्रा (द्रा कुत्सायां गतौ)। विदद्रौ वदनेनासृक् स्वप्रतापमिवोद्वमन् (राज० ७।१५७) विदद्रौ=विदुद्राव। निद्राविद्राणद्रोणकुलकलिलकुलायेषु (हर्ष० २)। विद्राणं विक्लवमलसं द्रोणकुलं वायसव्रातः।

—द्रु (द्रु गतौ)। यत्रा नरः सं च वि च द्रवन्ति (वा० सं० २९।४८)। विद्रवन्ति विगच्छन्ति=पलायन्ते। ते शूरा हतभूयिष्ठा हताश्वरथवारणाः। उत्सृज्य भीमकर्णौ च सर्वतो व्यद्रवन्दिशः (भा०)।। उक्तोऽर्थः। विद्रवन्ति भयाद् भीता नानादिग्भ्यः सहस्रशः (रा० १।५५।२६)। आपश्चुक्षुभिरे चैव चकम्पे च वसुन्धरा। व्यद्रवन् गिरयः (भा० अनु० १६०।१५)।। व्यद्रवन् विदीर्णतामगच्छन्। अराजके हि लोकेऽस्मिन्सर्वतो विद्रुते भयात् (मनु० ७।३)। विद्रुते प्रचलिते।

—द्रुह् (द्रुह जिघांसायाम्)। भ्रात्रे परेताय विदुद्रुहे यः (भा० पु० ३। १।४१)। द्रोहोऽपकारबुद्धिः। भ्रातरमकदर्थयद् इत्यर्थः प्रतिभाति। चतुर्थ्यात्मनेपदं चेत्युभयमस्थाने।

—धम् (धम इति च्छान्दसः)। वि वो धमत्वोकसः प्र वो धमतु सर्वतः (अथर्व० ३।२।२)। अग्निः प्रार्थ्यते। विधमतु=विशेषेण निःसारयतु, स्थानभ्रष्टान्करोतु।

—धा (डुधाञ् धारणपोषणयोः)। सहसा विदधीत न क्रियाम् (कि०२। ३०)। विदधीत=कुर्यात्। त्यज्यतां मानुषे भावो मयि भावो विधीयताम् (रा० ३।५५।१७)। सीतां प्रति रावणोक्तिः। अर्थस्तु पूर्वोदित एव। तन्नो देवा विधेयासुर्येन...सपत्नांश्चाधिजीयास्म संग्रामे च मृषीमहि (भट्टि० १९।२)।। पूर्वेण समोऽर्थः। योगे चैव समाधिधैर्यसुलभे बुद्धिं विधद्ध्वं बुधाः (भर्तृ० ३।३६)। यथाक्रमं पुंसवनादिकाः क्रिया धृतेश्च धीरः सदृशीर्व्यधत्त (रघु० ३।१०)। यो ब्रह्माणं विदधाति पूर्वम् (श्वेत० उ० ६।१८)। विदधाति=सृजति, उत्पादयति। तं वेधा विदधे नूनं महाभूतसमाधिना (रघु० १।२९)। विदधे निर्ममे। व्यवसायात्मिका बुद्धिः समाधौ न विधीयते (गीता २।४४)। नोत्पद्यत इत्यर्थः। घृतपूर्णेषु कुम्भेषु तान्भागान् विदधे (भा० वन० १०७।२)। विदधे=निदधे। कारावेश्मनि तं व्यधात्। (राज० २।७३)। व्यधात्= न्यधात्=न्यक्षिपत्। स्वचेष्टितमथो तस्मिन् विदधाति मणाविव (प्र० च०) विदधाति=अर्पयति। शशिपुत्रः सप्रमदं शयनं विधत्ते (व० बृ०सं० १०४। २३)। शयने स्वापे कारणतां यातीत्यर्थः। अर्जुनो विदधे मृत्युम् (रा० १।७५। २३)। विनाशं व्यापादं जनयामासेत्यर्थः। नूनं देवेभ्यो वि हि धाति रत्नम् (ऋ० २।३८।१)। विधाति=विदधाति=ददाति, विभजति, वितरति, विश्रा-

**णयति** । वि होत्रा दधे वयुनाविदेकः (ऋ० ५।८१।१) । **उक्तोऽर्थः** । श्रीश्च प्रज्ञां च विधेहि नः (प्रश्न० उ० २।१३) । **पूर्व एवार्थः** । तद्विधत्स्व मे (भोजनम्) (रा० १।५२।२२) । एको बहूनां यो विदधाति कामान् (कठ० उ० ५।१३) । प्रजापतिं वै भूतान्युपासीदन् । प्रजा वै भूतानि । वि नो धेहि यथा जीवामेति (श० ब्रा० २।४।२।१) । **वृत्तिं नः प्रकल्पय** । साधनान्युपकरणानि **नो देहीत्याह** । अन्नमशितं त्रेधा विधीयते (छा० उ० ६।५।१) त्रिधा विभज्यत **इत्याह** । यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् (ऋ० १०।९०।१२) । **व्यदधुः=व्यभजन्** । देशो विधीयतां ब्रह्मन्यत्र वत्स्यामहे वयम् (रा० १।५०४)। **विधीयतां चिन्त्यताम् । विचार्यताम् । अनुसन्धीयताम्** । बुद्धिरात्मानुगातीव उत्पातेन विधीयते (भा० वन० १८१।२५)। **विधीयते=वशी क्रियते** । यत्र चाम्नायो विदध्यात् (गौ० ध० १।१।४८) । **विदध्यात्=शिष्यात्=आदिशेत्** । अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते (मनु० २।१३) । **विधीयते=उपदिश्यते** । शूद्रस्य तु सवर्णैव नान्या भार्या विधीयते (मनु० ९।१५७) । यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते (मनु० ३।११८) । कर्तृकर्मणोः कृति (पा० २।३।६५) इति कृद्योगे कर्तृकर्मणोः षष्ठी **विधीयते (शिष्यते)** । **उक्तोऽर्थः** । एष इदं सर्वं विदधाति साधौ त्वदसाधौ त्वत् (श० ब्रा० २।६।३।८) । तां नो विधेहि यतिधा सखिभ्यः (अथर्व० ८।९।७) । **तां विराजम्** । **विधेहि शाधि, उपदिश, प्रब्रूहि** । तत्तस्य वैद्यो विदधीत नित्यं काले च हृद्यं लघु मात्रया च (का० सं० कल्प० भोजन० श्लो ५५) । **विदधीत=उपदिशेत्** । यो वा इमां वाचं पदशः स्वरशोऽक्षरशो विदधाति स आर्त्विजीनः (भाष्ये) । **विदधाति व्याकरोति, व्याचष्टे** । यथावस्थितानां हि शब्दानामन्वाख्यानमात्रं शास्त्रेण क्रियते नोत्पाद्यन्ते शब्दाः । नाप्यर्थेषु विधीयन्ते (नि० १।१।११ इत्यत्र दुर्गः) । **न विधीयन्ते न सङ्केत्यन्ते, अयं शब्द इममर्थं ब्रवीत्विति न शिष्यन्ते** । अनामरूपात्मनि रूपनामनी विधित्समानः (भा० पु० १।१०।२२) । **विधित्समानः=आरोपयितुकामः** । क्रोधश्चात्मविधित्सा च मित्रद्रोहश्च तानि षट् (भा० उ० ३७।१०) । **आत्मविधित्सा=आत्मपोषणेच्छा, शिश्नोदरपरायणतेति यावदिति नीलकण्ठः** । प्रतिकारविधानमायुषः सति शेषे हि फलाय कल्पते (रघु० ८।४०) । **विधानमनुष्ठानम्** । **प्रतिकारविधानं चिकित्सा** । एतद्विधानं विज्ञेयं विभागस्यैकयोनिषु (मनु० ९।१४८) । **विधानं विधिः शास्त्रशिष्टिः** । अर्थानर्थौ सुखं दुःखं विधानमनुवर्तते (भा० शां० २८।१८) । **विधानं दैवम्** । वस्त्रैश्च सर्वैः सहितैः विधानैः (रा० २।३७।३६) । **विधानैरुपकरणैः** । अनागतविधानं तु कर्तव्यं शुभमिच्छता (रा० ३।२४।११) । **अनागतस्यानिष्टस्य आजिगमिषतो**

**विधानं प्रतिविधानमिति कतकः।** ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य (भर्तृ० ३।४१)। **विधिना=करणेन क्रियया।** विधिरत्यन्तमप्राप्ते। **अज्ञात-ज्ञापनं विधिः। प्रवृत्तिपरं वाक्यं विधिः, अग्निष्टोमेन यजेतेत्यादि।** श्रद्धा वित्तं विधिश्चेति त्रितयं तत् समागतम् (शा० ७।२९)। **उक्तोऽर्थः।** विधौ वामारम्भे मम समुचितैषा परिणतिः (मालती० ४।४)। **विधिर्दैवम्।** स चेत्स्वयं कर्मसु धर्मचारिणां त्वमन्तरायो भवसि च्युतो विधिः (रघु० ३।४५)। **विधिः शास्त्रदृष्टस्य कर्म्मणोऽनुष्ठानम्।** अक्षरं गन्तुमनसो विधिं वक्ष्यामि शीघ्रगम् (भा० शां० २३७।१३)। **विधिं साधनम्।** एकस्त्रेधा विहितो जातवेदाः (अथर्व० १८।४।११)। **त्रेधा विहितो गार्हपत्यादिरूपेण त्रिप्रकारं स्थापितः।** त्रेधा विहिता हि वागृचो यजूंषि सामानि (श० ब्रा० ६।५।३।४)। **विहिता= विभक्ता।** पाङ्क्तोऽयं पुरुषः पञ्चधा विहितो लोमानि त्वङ् मांसमस्थि मज्जा (ऐ० ब्रा० २।१४)। स वा अयं प्राणस्त्रेधा विहितः प्राणोऽपानो व्यान इति (ऐ० ब्रा० २।२९)। **निरुक्तपूर्व एवार्थः।** विहिता व्यङ्गता तेषाम् (पञ्चत० १।२०)। **विहिता व्यवस्थापिता विधात्रा, नियतेत्यर्थः।** तेन नोऽविहिता प्रज्ञा मनश्च बहुलीकृतम् (भा० अश्व० ४९।१५)। **अविहिताऽशिक्षिता।** सर्वकामैः सुविहिताः (भा० वन० ६९।१८)। **सुविहिताः समृद्धाः।** अन्नपानैः सुविहिताः (रा० १।१३।१६)। **सुविहिताः सम्यग्योजिताः साधु संगमिताः।** अद्य सर्वे धनाध्यक्षा धनमादाय पुष्कलम्। व्रजन्त्वग्रे सुविहिता नानारत्नसमन्विताः (रा० १।६९।२)॥ **सुविहिताः=सम्यग्गृहीतसंभाराः।** होता हि विधिज्ञ एव भवति न ह्यविद्वान्विहितोऽस्ति (नि० १।१५।८ इत्यत्र दुर्गः)। **विहितोऽधिकृतः।** तथा विधातुं जननीं ममार्हसि। यथा वनस्थे मयि···न जीवितं न्यस्य यमक्षयं व्रजेत् (रा०२। ३८।१५)॥ **विधातुमाचरितुमुपचरितुम्। जनन्यां व्यवहर्तुम्।** चारान् सम्यग् विधाय च (मनु० ७।१८४)। **प्रस्थाप्येति कुल्लूकः।** तामग्रतस्तामरसान्तराभामनूपराजस्य···विधाय···(रघु० ६।३७)॥ **विधाय=व्यवस्थाप्य।** ततस्तेषां विधातव्यं सर्वमेवाप्रमादतः (भा०शां० ८६।२२)। **विधातव्यं प्रतिविधातव्यम्, प्रतिकर्तव्यम्।** मांसार्थं जाङ्गलाश्चान्ये विधेयाः मृगपक्षिणः (का० सं० कल्प० लशुन० श्लो० ६२)। **विधेया वशे करणीयाः।** अथ विविविधेयः परिचयः (मालती० २।१३)। **विधातर्यायत्त इत्याह।** निद्राविधेयं नरदेव सैन्यम् (रघु० ७।६२)। **निद्रापरवशमित्यर्थः।** भ्रातुः सौहार्देन विधेयीकृतोऽस्मि (महावीर० ७)। **अभिभूतोऽस्मि।** अविधेयेन्द्रियः पुंसां गौरिवैति विधेयताम् (कि० ११।३३)। **विधेयोऽधीनो निघ्नः।** विधेयो विनयग्राही वचने स्थित आश्रव इति **पर्यायान्पठत्यमरः। विधेयो विधातव्यो यथेष्टं विनियोज्यः।** अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्। **यत्किञ्चिद् दिश्य विधीयते निर्दिश्यतेऽभिधीयते तद् विधेयम्।**

विधाता शासिता वक्ता मैत्रो ब्राह्मण उच्यते (मनु० ११।३५)। **विधाता विहितकर्मणामनुष्ठाता** (कुल्लूकः)। आपो वै विधा अद्भिर्हीदं सर्वं विहितम् (श० ब्रा० ८।२।२।८)। **विधा विधात्र्यः। भृतिरपि विधा भवति। तथा चामरः पठति**—कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम् इति। **तत्र क्षीरस्वाम्याह**—लक्ष्ये (तु) भोजनपिण्डेऽस्य रूढिरिति। देवानां वै विधामनु मनुष्याः (श० ब्रा० ६।७।४।६)। **विधा प्रकारः।** यया कया च विधया (तै० उ० ३।१०।१)। **उक्तोऽर्थः।**

—**धाव् (धावु गतिशुद्ध्योः)।** एष (पवमानः) दिवं वि धावति तिरो रजांसि धारया (ऋ० ६।३।७)। **विधावति=व्याप्य धावति स्रवति।** वि पवित्रं धाव धारया (ऋ० ६।४६।४)। **उक्तोऽर्थः।** यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति (कठ० उ० २।१।१४)। **स्रुत्या क्षीयत इत्यर्थः।** यदन्तरापश्च देवयजनं च पन्था विधावति। (काठक० २५।२)। **गच्छतीत्यर्थः।** आवासमादीपयतां तीर्थानि च विधावताम् (गोरेसियो सं० रा० २।६७।१)। **विधावताम् =पर्यटताम्।**

—**धी (धीङ् आधारे)।** तं लोकोऽनुविधीयते (भा० शां० ६३।२८)। **अनुकरोति, अनुवर्तत इत्यर्थः।**

—**धु (धुञ् कम्पने)।** वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः (मालती १।१)। **विधुतिः=विकम्पनम्।** मायाविवेकविधुतिः स्रजि वाहिबुद्धिः (भा० पु० ४।२२।३८)। **विधुतिरपनयः, विगमः, विनाशः।** दीर्घवेणीं विधून्वानः साधु रक्ते च वाससी (भा० वि० ३८।३०)। **विकम्पयन्नित्यर्थः।**

—**धू (धूञ् कम्पने)।** आनह्यते यस्य विधूप्यते च पापच्यते क्लिद्यति चापि नासा (सुश्रुत० २।३६६।१०)। **विधूप्यते बाष्पायते।**

—**धृ (धृञ् धारणे)।** वि धारय योनिं गर्भाय धातवे (अथर्व० ६।८१।२)। **विधृतं विवृतमवस्थापयेत्यर्थः।** अधिदाने व्यवनीरधारयः (ऋ० २।१३।७)। **अवनीर्नदीर्विधारयः, व्यधारयः=नाना चकर्थ।** त्वं समुद्रं प्रथमो विधारयो देवेभ्यः सोम मत्सरः (ऋ० ६।१०७।२३)। **विधारयः=व्यधारयः=व्यभजः, द्विधाऽकरोः।** न च वेगान् विधारयेत् (सुश्रुत० २।१४६।१८)। **विधारयेत्=रुन्ध्यात्।** विधारयास्मदघा द्वेषांसि (तै० आ० ६।६।११)। **आरात्स्थापयेत्यर्थः।** तस्मात्सर्वाणि कार्याणि दण्डेनैव विधारयेत् (भा० आदि० १४०।७)। **विधारयेत् =प्रणयेत्, निर्वहेत् निर्वर्तयेत्, साधयेत्।** आदिमध्यावसानज्ञः प्रच्छन्नं च विधारयेत् (भा० शां० १०३।१६)। **हृदि विषमं धारयेदिति नीलकण्ठः। कार्यं विदधीतेत्यन्ये।** पीडितस्य किमु द्वारमुत्पथो विधृतस्य च (भा० शां० १३०।२२)। **विधृतस्य=निरुद्धस्य=गृहीतस्य=बद्धस्य। उत्पथः=अपन्थाः=**

अपथम् । अंशुकपल्लवेन विधृतः (अमरु० ८५) । विधृत उपरुद्धः । पर्णशाला-मथ क्षिप्रं विधृतासिः प्रविश्य सः (रघु० १२।४०)। विधृतासिः=गृहीतखड्गः। विकृष्टासिरिति पाठान्तरम् । शिरसा विधृता नित्यम् (पञ्चत० १।८२)। विधृता ऊढा अवलम्बिता अवष्टब्धाः । विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा (भर्तृ० ३।२३) । विधृतं पालितम् अवलम्बितम् । विधृतं स्वोदरेणापि घ्नन्ति पुत्रं स्वकं रुषा (योषितः) (पञ्चत० ४।६१) । विधृतं धृतम् । द्यावापृथिवी विधृते तिष्ठतः (श० ब्रा० १४।६।८।९) । विधृते व्यवहिते, पृथग्भूते, विभक्ते । नासिकया चक्षुषी विधृते (तै० सं० २।३।८।२) । व्यवहिते इत्यर्थः । एतस्य वा अक्षरस्य गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः (बृह० उ० ३।८।९) । पृथक् पृथग्धृतावित्यर्थः । त्वं चापि विधृतस्ताभ्यां जातवैरेण चेतसा (हरि० २।२३।२१) । हलविधृता यमुना (हरि० ६७८७) । दृढमुपरुद्धा । केन विधृतोऽसि (१।६) । रुद्ध इत्यर्थः । विधार्य सर्वे गृह्यन्तां ममैते गृहधर्षकाः (हरि० (२।९६।२५) । विधार्य=विनिवार्य, प्रतिनिवर्त्य, प्रतिरुध्य । मम चेदं वरं कस्माद् विधारयितुमिच्छसि (रा० २।१३।३) । ऋणत्वेनेति शेष इति तिलक-कारः । परे तु विधारणं दानोपरोध इत्याहुः । अत्र पूर्वत्र पद्ये पुनराकारयामास तमेव वरमङ्गनेति वरशब्दस्य पुंसि प्रयोगादुत्तरस्मिन्नपि इमं वरम् इति पाठेन भवितव्यम् । वरशब्दश्च देवाद् वृतेऽर्थे सर्वत्र पुंसि प्रसिद्धः ।

—धृष् (धृष प्रसहने) । उग्रसेनस्य रूपेण मातरं ते व्यधर्षयत् (हरि० २।२८।९२) । व्याकुलयत्, विप्राकरोत् । कृतान्तवश्यानि यदा सुखानि दुःखानि वा । यन्न विधर्षयन्ति······(भा० शां० २८६।१०) । न विधर्षयन्ति न प्रसहन्ते, न कदर्थयन्ति । रजांसि मुकुटान्येषामुत्थितानि व्यधर्षयन् (भा० आदि० ३०।३८) । मन्दप्रकाशानि मलिनान्यकुर्वन्नित्यर्थः ।

—धे (धेट् पाने) । प्रकाशबहुलो धीरो निर्विधित्सोऽनसूयकः (भा० वन० २१२।७) । विधित्सा विशेषतृष्णा ।

—ध्मा (शब्दाग्निसंयोगयोः) । वि सप्तरश्मिरधमत् तमांसि (ऋ० ४।५०।४) । व्यधमत्=वात इव व्यकिरत् । अपानुददित्यर्थः । व्यधमत्पाण्डवीं सेनां तूलराशिमिवानलः (भीष्म० ७५।३२) । व्यधमत् व्यध्वंसयत् । (तस्य शराः) विधमिष्यन्ति गङ्गाकूलमिवोर्मयः (रा० ३।६२।७) । कषिष्यन्तीत्याह ।

—ध्वंस् (ध्वंसु अवस्रंसने गतौ च) । यथा श्मशानमृत्वा लोष्टो विध्वं-सेतैवं हैव विध्वंसमाना विष्वञ्चो विनेशुः (श० ब्रा० १४।४।१।८) । रजः-कणा इवोत्पतन्त इत्याह । एतच्छ्रुत्वा तु भीष्मस्य राज्ञां विध्वंसिरे तदा । काञ्चनाङ्गदिनः पीना भुजाश्चन्दनरूषिताः (भा० उ० १६९।२७) ।। विद-

ध्वंसिरे इति तूचितम् । तथा दध्वंसिर इति क्वचित्पाठः । विदध्वंसिरे सहसा पस्पन्दिरे । तुरगखुरविध्वस्तं—(रजः) (रा० ६।१९।१२)। विध्वस्तमुद्धतमुत्थापितम् । विध्वस्तपर्णकमला (पद्मिनी) (भा० वन० ६८।१५) । विध्वस्तानि मथितानि विनष्टानि । हतप्रहतविध्वस्ताः (भा० कर्ण० ३१।६) । विध्वस्ता वाहनेभ्योऽधः पातिताः । प्रसुप्ताश्चैव विध्वस्ताः समेत्य परिधाविताः (भा० सौ० ८।१२) ।

—नद् (णद अव्यक्ते शब्दे) । अनाहता दुन्दुभयो विनेदुर्मेघनिःस्वनाः (भा० आश्व० ८०।५५) । दध्वनुः । सोऽभिहतो व्यनदत् (ऐ० ब्रा० ४।२) । व्यनदद्भैरवं रवम् (भा० आदि० १५३।४१) । अत्र नदतिःक्रियासामान्ये सुप्रहृष्टा विनेदुस्ते नराः (रा० २।६१।५६) । विनेदुः=जुघुषुः । विराट विनदन्त्येते गृध्रगोमायुवायसाः (भा० ११।५६६) । विराटमभितो वाश्यन्त इत्याह । विनद्य च गुहां वीरो घोरां मायामयीं नृप (हरि० २।८४।४८) । विनद्य नादवतीं कृत्वा ।

—नन्द् (टुनदि समृद्धौ) । सा तत्र पूज्यमाना वै दमयन्ती व्यनन्दत (भा० वन० ६५।७६) । व्यनन्दत=प्रासीदत्, प्राहृष्यत् ।

—नम् (णम प्रह्वत्वे शब्दे च) । विनमन्ति चास्य तरवः प्रचये (कि० ६।३४) । नम्रा भवन्ति, विलम्बन्ते । विनम्य पूर्वं सिंहोऽपि हन्ति हस्तिनमोजसा (पञ्चत०) । स्पष्टोऽर्थः । प्रकामविनतावंसौ (शा० ३।८) । विनता गरुत्मतोऽम्बा । को विनतेऽनुरोधः (पा० ८।३।६१ सूत्रे वृत्तिः) । विनतं विनामः षत्वम् । जभी जृभि गात्रविनामे । गात्रविनामोऽङ्गविजृम्भणम् ।

—नश् (णश अदर्शने) । निशम्य तल्लक्ष्मणमातृवाक्यं……शनैः शरीरे विननाश शोकः शरद्गतो मेघ इवाल्पतोयः (रा० २।४४।३१)॥ वि षु विश्वा अरातयोऽर्यो नशन्त नो धियः (ऋ० १०।१३३।३) । क्रियाः सर्वा विनश्यन्ति ग्रीष्मे कुसरितो यथा (हितोप०) । अशस्ती र्वि हि नीनशः (ऋ० ६।४८।१७) । विनीनशः=व्यनीनशः=व्यनाशयः । अशस्तीः=अभिशस्तीः, दोषारोपकाणि कथनानि, अनिष्टानि वचांसि ।

—नश् (णश व्याप्तौ छान्दसः) । आपश्चिदस्य विनशन्त्यर्थम् (ऋ० १०।२७।२०) । विनशन्ति=व्यश्नुवते=व्याप्नुवन्ति । आमासु पूर्षु परो अप्रमृष्यं नारातयो वि नशन्नानृतानि (ऋ० २।३५।६) । न विनशन्=मा आसीषदन् ।

—नह् (णह बन्धने) । कूपवीनाहवेलायामपश्यत महागजम् (भा० स्त्री० ५।१४) । वीनाहो मुखबन्धनम् । अप क्राम नानदती विनद्धा गर्दभीव

(अथर्व० १०।१।१४) । विनद्धा=विषिता=बन्धनान्मुक्ता । विर्विरोधे । यथा प्रः प्रतिष्ठत इत्यत्र ।

—निज् (णिजिर् शौचपोषणयोः) । सिन्धोर्मध्यं परेत्य व्यनिजमहेर्विषम् (अथर्व० १०।४।१६) । व्यनिजम्=अशूशुधम् अशोधयम् । विपूर्वान्निजेर्लुङि अङि रूपम् ।

—नी (णीञ् प्रापणे)। हरस्ते मा विनैषम् (आप० श्रौ० ६।६।७)। पानं ते मास्माऽपनयमित्याह । वि ते हेतिं नयामसि (अथर्व०५।७।७)। विनयामसि=विनयामः=दूरं गमयामः । अध स्या योषणा मही प्रतीची वशमश्व्यम् । अधिरुक्मा वि नीयते (ऋ० ८।४६।३३)। वि त्वदापो न पर्वतस्य पृष्ठादुक्थेभिरनयन्त यज्ञैः (ऋ०६।२४।६) । व्यनयन्त=इत आकर्षन् । भ्रातृव्यान् यद् व्यनैषीः समस्तान् (हरि० ७५६१) । व्यनैषीः=उदसीसरः=अयीयवः, पलाययः, कान्दिशीकान-कार्षीः । भारमेनं विनेष्यामि पाण्डवानाम् (भा० भीष्म० ५६ ढ २)। विनेष्यामि =अपनेष्यामि, हरिष्यामि । संरम्भं विनयाम्यहम् (भा० द्रोण० १६८।६१) । उक्तोऽर्थः । अहं च ते विनेष्यामि युद्धश्रद्धामितः परम् (भा० उ० ६६'२६)। उक्तचर एवार्थः । कोपं विनयते (पा० १।३।३७) इत्यत्र वृत्तौ) । अन्तःस्थं मन्युं दूरी करोति, शमयतीत्यर्थः । ह्रीनिषेवा वधूर्मर्यादामनतियती श्वशुरं वीक्ष्य गण्डं विनयति । पराङ्मुखी भवतीत्यर्थः । कुरुष्व कृत्यानि विनीयतां ज्वरः (वा० रा० ६।५७) । विनीयतामपनीयताम् । ज्वरः सन्तापः । विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम् (रघु० ४।६५) । क्षिप्रं विनीयतां वाली (रा० ४।२५।२७) । विनीयतामपोह्यताम् । दहनदेशमिति शेषः । सुत इन्दो पवित्र आ नृभिर्यतो वि नीयसे (ऋ० ६।६६।८) । विनीयसे=घट्टचसे=संचाल्यसे । अत्यं न मिहे विनयन्ति वाजिनमुत्सं दुहन्ति स्तनयन्तमक्षितम् (ऋ० १।६४।६)। विनयन्ति=प्रेरयन्ति=प्रचोदयन्ति । विनेष्ये वा प्रियान् प्राणान् उदानेष्येऽथवा यशः (भट्टि० ८।२१) । विगमयिष्यामीत्याह । मरिष्यामीत्यर्थः । क्रिया हि द्रव्यं विनयति नाद्रव्यम् (कौ० अ० १।५।२) । विनयति विनीतं करोति । करं विनयते निर्यातयति । ऋणं विनयते । विगणयति । शतं विनयते=धर्मार्थं विनियुङ्क्ते (पा० १।३।६१ सूत्रवृत्तौ) । तदेतदेवं विनियेन्नरेश्वरः संवीक्ष्य कार्यं गुरु चेतरद् द्विधा (का० नी० सा० ६।७६)। विनयेद् विधिना प्रयुञ्जीत । विनिन्युरेनं गुरवो गुरुप्रियम् (रघु० ३।२६) । विनिन्युः शिक्षितवन्तः । गदा-सिचर्मग्रहणेषु शूरानस्त्रेषु शिक्षासु रथाश्वयाने…विनयेत् (भा० ३।१२५८५) । विनयेत्=शिक्षयेत् । मुखार्पितैकाङ्गुलिसंज्ञयैव मा चापलायेति गणान् व्यनैषीत् (कु० ३।४१) । व्यनैषीत्=शिक्षितवान्, उपदिष्टवान् । सा राजहंसैरिव सन्न-

ताङ्गी गतेषु लीलाञ्चितविक्रमेषु । व्यनीयत···(कु० १।३४)॥ व्यनीयत अशिक्ष्यत । तानेतैरेव त्रिभिरक्षरैर्व्यनयन् वीतय इति (श० ब्रा० १।४।१।२२-२३) । व्यनयन् पृथगकुर्वन्=व्याकुर्वन् । अत्र विनयतिः सन्नयतेः प्रतिकञ्चुकमर्थमाह । विनयन्तं जवेनाश्वान् (भा० वि० ५६६) । विनयन्तं प्राजन्तम् । सारं विनेष्यन्सगणस्य शत्रोः (कि० १६।२५) । विनेष्यन्=अपनेष्यन् । शत्रुमात्तगन्धं करिष्यन्नित्यर्थः । वन्यान्विनेष्यन्निव दुष्टसत्त्वान् (रघु० २।८) । विनेष्यन् दमयिष्यन् । इत्याप्तवचनाद्रामो विनेष्यन् वर्णविक्रियाम् (रघु० १५।४८) । वर्णविक्रियां वर्णापचारं विनेष्यन् अपनेष्यन् इत्यर्थः । छायाविनीताध्वपरिश्रमेषु (पादातेषु) (रघु० १३।४६) । छायाभिरपनीतोऽध्वखेदो यैस्तेषु । विनीतमोहो व्यपनीतकल्मषः (भा० शां० २४५।३५) । विनीतमोहो दूरीकृताज्ञानः । विनीततर्षक्लमास्तु ते यक्षाः (अवदा० मैत्री० जा०) । उक्तोऽर्थः । विनीतैस्तु व्रजेन्नित्यमाशुगैर्लक्षणान्वितैः (धुर्यैः) (मनु० ४।६८)। विनीतैः==दमितैः । ··· ··· आन्वीक्षिक्यां दण्डनीत्यां तथैव च । विनीतः···(याज्ञ० १।३०९) ॥ विनीतः शिक्षितः । त्वं च सूतकुले जातो विनीतः सूतकर्मणि (भा० वन० १८।१५) । अनन्तरोदीरित एवार्थः । विनीतः सत्त्वसम्पन्नः कुलीनः सत्यवाक् शुचिः (याज्ञ० १।३०९) । विनीतः=विनयेन प्रश्रयेण युक्तः, निभृत इत्यर्थः । प्राज्ञेन विनीतेन ज्ञानविज्ञानवेदिना (मनु० ६।४१) । विनीतः पित्रादिभिरनुशिष्टः, प्रश्रितो निभृतो नम्र इत्यर्थः । विनीतवेषाभरणः पश्येत्कार्याणि कार्यिणाम् (मनु० ८।२) । विनीतवेषाभरणः=अनुद्धतवेषालङ्कारः । विनीत-वेषेण प्रवेष्टव्यानि तपोवनानि नाम (शा० १) । विनीतवेषः=निभृताकल्पः, अनुल्बणनेपथ्यः । विनीतः प्रविशेत् सभाम् (मनु० ८।१)। उक्तोऽर्थः । सुविनीतेन कर्मणा (भा० अनु० ३७।१८) । सुविनीतेन सम्यङ् निर्व्यूढेन । निहतस्यास्य सत्त्वस्य जाम्बूनदसमत्वचि । शष्पवृस्यां विनीतायामिच्छाम्यहमुपासितुम् । (रा० ३।४३।२०) ॥ विनीतायाम् प्रसारितायाम् । आशिरं विनीय सौम्यस्य वित्तात् (श० ब्रा० ४।३।३।१६) । विनीय सङ्घट्टय । क्षणं च विनीय श्रमम् । विनीय=अपनीय=विगमय्य । कथमपि यामिनीं विनीय (गीत० ८।१) । विनीय=क्षपयित्वा । ग्रन्थिं विनीय हृदयस्य सर्वम् (भा० उ० ३६।४) । विनीय=विस्रंस्य, शिथिलीकृत्य । केशान् विनीय (का० श्रौ० ५।२।१५, पा० गृ० १।१५) । सीमन्तयित्वेत्यर्थः । त्रेण्या शलल्या विनीय (केशान्) (भा० गृ० १।२८) । विभज्येत्यर्थः । अयस्तप्तं विनीय (शां० ब्रा० २२।६) । विनयतिरत्रातनने वर्तते । स्वधर्माच्चलितान्राजा विनीय स्थापयेत्पथि (याज्ञ० १।३६१) । विनीय दण्डयित्वा । सा विनीय तमायासमुपस्पृश्य जलं शुचि (रा० २।२५।१) । अपनीयेत्यर्थः । शक्योऽस्य मन्युर्भवता विनेतुम् (रघु०

२।४६)। विनेतुं हर्तुं शमयितुम्। आरोहे विनये चैव युक्तो वारणवाजिनाम् (रा० २।१।२८)। विनये शिक्षायाम्। पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक्। पश्चाद्यः सोप्यसत्कारी पूर्वे तु विनयो गुरुः (याज्ञ० २।९ इत्यत्र मिताक्षरायामुद्धृतं नारदवचनम्)।। विनयो दण्डः। जघन्यास्तेपि प्रत्येकं विनेयाः पूर्वसाहसम् (नारदस्मृतिः)। विनेया दण्ड्याः। दण्डनार्थो नयतिरपि द्विकर्मकः। स विनेयो भृशतरं कूटसाक्ष्यधिको हि सः (नारदीय मनु० १।१९६)। उक्तोऽर्थः। विनेया वाग्व्यवहारे साध्वभिविनेयाः। विनेयाः शिष्याः, छात्राः। विनीयः कल्कः। पिष्टौषधविशेषः साध्य इत्यर्थ इति (पा० ३।१।११७ इत्यत्र) न्यासः। तृष्णाविनयनं भुञ्जे गान्धारी वेद तन्मम (भा० आश्रम० ३।२६)। विनयनमपनयनम्। तृषामात्रापहं मण्डाद्यश्नामीत्यर्थः। स तथेति विनेतुरुदारमतेः प्रतिगृह्य वचो विससर्ज मुनिम् (रघु० ८।९१)। विनेतुर्गुरोर्वसिष्ठस्य। अयं विनेता दृप्तानाम् (मुद्रा० ३।४६)। निग्रहीतेत्यर्थः। समस्तभूभृतां नेता विनेता प्रतिभूभृताम् (शि० भा० ५।२४)। विनेता शासिता। विनायकं प्रकुर्वाणो रचयामास वानरम्। विनायको गणेशः। विघ्नविनायक इत्यथ संक्षिप्तं वचः। विनीतकं शकटं भवति।

—नु (णु स्तुतौ)। पुरुत्रा ते वि पूर्तयो नवन्त क्षोणयो यथा (ऋ० १०।२२।६)। विनवन्त=आवर्तन्ते।

—नुद् (णुद प्रेरणे)। ब्रह्मणैव द्विषन्तं भ्रातृव्यं विनुदते य एवं वेद (जै० ३।१०४)। विनुदते पराणुदति, आराद् वियौति, दवयति। विनुदति वीणाम्। तन्त्रीः सारयतीत्यर्थः। क्व नु खल्वात्मानं विनोदयामि (शा० ६)। क्व नु चेतः समासजामीत्याह। लक्ष्मीर्विनोदयति येन दिगन्तलम्बी सोपि त्वदाननरुचिं विजहाति चन्द्रः (रघु० ५।६७)। पर्युत्सुकत्वं निरासयति, विनोदं मनोविलोभनं वा करोतीत्यर्थः। तापं विनोदय दृष्टिभिः (गीत० १०)। दूरी कुर्वित्याह। श्रमविनोदः=श्रमापनयः। प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः (मेघ० ८९)। विनोदाः पर्युत्सुकत्वविस्मारका व्यापाराः। मिथ्यैव व्यसनं वदन्ति मृगयामीदृग् विनोदः कुतः (शा० २।५)। उक्तोऽर्थः। विलपनविनोदोप्यसुलभः (उत्तर० ३।३०)। विनोदः सुखं शर्म।

—नृत् (नृती गात्रविक्षेपे)। तस्मादेवं विद्वान् वीव नृत्येत् (तै० ब्रा० २।३।६।६)। विनृत्येत्=नर्तितुमारभेत।

—पच् (डुपचष् पाके)। तस्मिन्सर्वे विपचेयुः (का० श्रौ० २४।३।१२)। विपचेयुः श्रपयेयुः, संशीनं द्रावयेयुः। गर्भशालिसधर्माणस्तस्य गूढं विपेचिरे (समारम्भाः) (रघु० १७।५३) फलिता इत्यर्थः। दह्यमाना विपच्यन्ते न तत्रास्ति

पलायनम् (भा०अनु०१३०।२२)। **विपच्यन्ते भृज्ज्यन्ते**। भुक्तं भुक्तमिदं कोष्ठे कथमन्नं विपच्यते (भा० अनु० १६।३६)। **विपच्यते जीर्यति**। नक्षत्रपीडा बहुधा यथाकालाद् विपच्यते (सुश्रुत० १।१०३।२)। **विपच्यते विपाकवती भवति फलं प्रसूते**। भार्यया हि कृतं कर्म पत्यावपि विपच्यते (बृ० श्लो० सं० २७।३७)। **विपच्यते फलति**। लोहयुक्तं यथा हेम विपक्वं न विराजते (भा० शां० २१२। ६)। **विपक्वं पाकहीनम्**। **विर्विरोधे**। अमी पृथुस्तम्बभृतः पिशङ्गतां गता विपाकेन फलस्य शालयः (कि० ४।२६)। **विपाकः पाकः परिणामः**। वाचां विपाको मम (भामिनी० ४।४२)। **उक्तोऽर्थः**। सति मूले तद्विपाको जात्यायुर्भोगाः (यो० सू० २।१३)। **विपाकः फलम्**।

**—पण् (पण व्यवहारे स्तुतौ च)**। आभीरदेशे किल चन्द्रकान्तं त्रिभिर्वराटैर्विपणन्ति गोपाः। **विपणन्ति=(विपणयन्ति)=विक्रीणते**। विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः (मनु० ३।१५२)। **विपणेन वणिज्यया**। नैकद्रव्योच्चयवतीं समृद्धविपणापणाम् (भा० अनु० ३०।१७)। **विपणः क्रयविक्रयादिव्यवहारः। आपणस्तु निषद्या भवति। उपसर्गकृतोऽर्थभेदः**। हाहाभूता भयार्ता च निवृत्तविपणापणा (भा० आदि० २१०।२३)। **उक्तोऽर्थः**

**—पत् (पत्लृ गतौ)**। व्यद्रिणा पतथ त्वेषमर्णवम् (ऋ० १।१६८।६)। **विपतथ=विपाटयथ**। मूर्धा हास्य विपतेत् (श० ब्रा० ३।६।१।२३)। **विपतेत्=व्यपवृक्तो भूत्वाऽधः पतेत्**। मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य इति (छा० उ० ५।१२।२)। **उक्तचर एवार्थः**। वि ते मदं मदावति शरमिव पातयामसि (अथर्व० ४।७।४)। **विपातयामसि=विपातयामः=दूरं प्रास्यामः**। लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने (पा० ७।३.३९)। **विपातनं विगच्छतः काठिन्यं त्यजतः प्रयोजकव्यापार इति पदमञ्जरी**।

**—पद् (पद गतौ)**। स तेन दुःखमाप्नोति परत्र च विपद्यते (भा० वन० २१०।१०)। **विपद्यते=आपन्नो भवति, आपद्यते, आपदमाप्नोति**। विपन्नराज्यो नचिराद् विपत्स्यसे (रा० ३।३३।२३)। **विपत्स्यसे व्यापदं प्राप्स्यसि**। नारी गर्भयुता विपद्यते (बृ० सं० ४।७)। **विपद्यतेऽवतोका भवति**। ज्वरश्चाभिद्रवत्येनां तस्या गर्भो विपद्यते (का० सं० खिल० अन्तर्० श्लो० १६०)। **विपद्यते च्यवते**। यौवनस्थोऽथ मध्यस्था वृद्धो वापि विपद्यते (भा० स्त्री० ३।१८)। **विपद्यते=म्रियते**। दैवेन किल यस्यार्थः सुनीतोपि विपद्यते (कथा० ४।१२६)। **विपद्यते=नश्यति**। एवं बुद्धिश्च तेजश्च प्रतिपत्तिश्च भारत। भवन्ति भवकालेषु विपद्यन्ते विपर्यये (भा० मौ० ८।३३)॥ **उक्तोऽर्थः**। चितनाशाद् विपद्यन्ते सर्वाण्येवेन्द्रियाणि मे। क्षीणस्नेहस्य दीपस्य संसक्ता रश्मयो यथा (रा० २।६४.६८)॥ **उक्तोऽर्थः**। आरम्भा विपद्यन्ते (षड्विंशब्रा० ५।६)।

विपद्यन्ते विफला भवन्ति । वर्षं विद्युत्स्तनयित्नुर्वा विपद्यते (कौ० सू० १४१)। विपद्यते = अन्तरैति, अन्तरायो भवति । श्लक्ष्णया वाचा पूर्वशोकविपन्नया (रा० ६।१०।५) । विपन्नया = अवसन्नया, क्षीणया, उपदस्तया । न तद् दानं प्रशंसन्ति वृत्तिर्येन विपद्यते (भा० पु० ८।१९।३६) । विपद्यते नश्यति अवसीदति । यथा च मृन्मयं भाण्डं चक्रारूढं विपद्यते (भा० स्त्री० ३।१२) । विपद्यते ध्वंसते । अहो मम सुतानां हि विपन्नं सूत जीवितम् (भा० द्रोण० १३५।२२)। विपन्नं समाप्तम् । विपन्नानामापदुद्धरणक्षमः (हित० १।२७) । विपन्नानामापन्नानाम् । विपन्ने च समारम्भे सन्तापं मा स्म वै कृथाः (भा० शां० ५६।१६)। विपन्ने नष्टे विफले जाते । शस्त्रे विपन्ने शिरसाऽस्य भूमौ (भा० सभा० ६६।८) । विपन्ने विशेषेण प्राप्ते इति नीलकण्ठः । इष्टानिष्टविपत्तिश्च (भा० शां० २५५।१०) । विपत्तिर्विनाशः । भवन्ति परितापिन्यो व्यक्तं कर्मविपत्तयः (का० नी० सा० १२।१४)। उक्तोऽर्थः । गर्भविपत्तिः = गर्भप्रच्युतिः । हिमसेकविपत्तिरत्र मे नलिनी पूर्वनिदर्शनं गता (रघु० ८।४५) । हिमस्य सेकेन विपत्तिर्नाशो यस्याः सा हिमसेकविपत्तिः । पुत्रोत्पत्तिविपत्तिभ्यां न परं सुखदुःखयोः (          ) । विपत्तिर्मृत्युः । विपद् विपदमनुबध्नाति सम्पत्सम्पदम् (काद०) । विपद् विपत्तिरापद् इत्यनर्थान्तरम् । पादस्फोटो विपादिका । विपद्यते क्लिश्यतेऽनयेति ।

—पा (पा पाने) । उभे वा एष एते सवने विपिबति (ऐ० ब्रा० ३।२९)। विपिबति विशेषेण पिबति । वि पिबध्वं कुशिकाः सोम्यं मधु (ऋ० ३।५३।१०)। हे कुशिकाः, यूयमेके तासु तासु वेलासु सोम्यं मधु पिबतेत्याह । अद्भ्यः क्षीरं व्यपिबत् (वा० सं० १९।७३) । व्यपिबत् विशेषेण कणेहत्यापिबत् ।

—पिश् (पिश अवयवे) । पिशुनः पिंशते विपिंशतीति (नि० ६।११।१) । स हि स्वल्पमपि पापं विपिंशति विपुष्यतीत्यर्थ इति दुर्गः ।

—पू (पूञ् पवने) । देवानां मुखमग्ने त्वं सत्येन विपुनीहि माम् (भा० सभा० ३१।४६)। विपुनीहि विशेषेण पुनीहि । अनृतं हि मत्तो वदति । पाप्मा एनं विपुनाति (पा० ८।१।३५ सूत्रभाष्ये) । पविः शल्यो भवति यद्विपुनाति कायम् (नि० १२।३०।१) । विपुनाति विदारयतीति दुर्गः । पवी रथनेमिर्भवति यत् विपुनाति भूमिम् (नि० ५।५।१) । विपुनाति घर्षति, अवदारयति, खनति ।

—पृच् (पृची सम्पर्के) । सम्पृच स्थ सं मा भद्रेण पृङ्क्त । विपृच स्थ वि मा पाप्मना पृङ्क्त (वा० सं० १९।११) । विपृङ्क्त = पृथक्कुरुत । यं (सूर्यम्) सीमकृण्वन् तमसे विपृचे (ऋ० ४।१३।३) । तमसे विपृचे तमसोऽपघाताय, ध्वान्तस्यापहननाय, तिमिरनिरासाय ।

—प्रा (प्रा पूरणे)। पप्राथ क्षां महि दंसो व्युर्वीम् (ऋ० ६।१७।७)। विपप्राथ विशेषेण पूरितवानसि।

—प्रु (प्रुङ् गतौ)। स एता विप्रुषोऽजनयत या इमाः स्कूयमानस्य विप्रवन्ते (मै० सं०)। विप्रवन्ते, विप्रतिष्ठन्ते, व्युच्चरन्ति इत्यर्थः। विप्रुषः विस्फुलिङ्गाः।

—प्रुष (प्रुष प्लुष स्नेहनसेवनपूरणेषु)। अवप्रुषो विप्रुषः संयजामि (तै० ब्रा० ३।७।६।२१)।

—प्लु (प्लुङ् गतौ)। यदि न स्यान्नरपतिः सम्यङ् नेता ततः प्रजा। अकर्णधारा जलधौ विप्लवेतेह नौरिव (पञ्चत० ३।७३)। विप्लवेत विसंस्थुला चलाचला निर्मर्यादाऽऽन्दोलिता कल्लोललोला स्यादिति कवेराशयः। तस्य विप्लवते बुद्धिरेवं चेदिपतेर्यथा (भा० सभा० ४०।१३)। विप्लवते = विपर्ययं याति। विप्लवते हि खल्वपि कश्चित्पुरुषकृताद्वचनात् प्रत्ययः। (मी० शा० भा० १।१।२)। विपर्येति मिथ्या भवति। नैते वाचं विप्लुतार्थां वदन्ति (उत्तर० ४।१८)। विप्लुतार्थां विपरीतार्थां मिथ्याभूताम्। गुणानामायथा-तथ्यादर्थं विप्लावयन्ति ये (शिशु० २।५६)। दूषयन्ति व्यभिचारयन्तीत्यर्थः। अविप्लुत-ब्रह्मचर्यो गृहस्थाश्रममावसेत् (मनु० ३।२)। अखण्डितब्रह्मचर्य इत्याह। बाष्पविप्लुतभाषिणी = बाष्पैः सगद्गदं भाषत इत्येवंशीला। अश्रुणः पूर्वावस्था बाष्पम्। दग्धैकदेशा बहवो निष्टप्ताश्च तथापरे। स्फुटिताक्षा विशीर्णाश्च विप्लुताश्च तथापरे (भा० आदि० २२६।५)॥ विप्लुता भयाद् विद्रुताः। ततः सूतव्यसनिनं विप्लुतं मां स भार्गवः। शरेणाभ्यहनत्... (भा० उ० १८२।७)॥ विप्लुतं विद्रुतम्। ततः शरदि युक्तायां मौनकामेषु बर्हिषु। याचमाने खगे तोयं विप्लुतेषु प्लवेषु च॥ विप्लुतेषु विविधगतिमत्सु। प्लवा उडुपाः। बहु चाल्पं च संक्षिप्तं विप्लुतं च मतं मम (भा० आश्व० ३४।१)। विप्लुतं कीर्णम्। उभावपि तु तावेव (क्षत्रियवैश्यौ) ब्राह्मण्या गुप्तया सह। विप्लुतौ शूद्रवद् दण्ड्यौ ..(मनु० ८।३७७)॥ विप्लुतौ कृतमैथुनौ।

—बन्ध् (बन्ध बन्धने)। सिद्धेर्विबन्धो विधिना विधुरेण व्यवध्यत (राज० ८।१५६३)। विबन्धः प्रतिबन्धः। आनाहस्तु विबन्धः स्यात् (अमरः)। आनाहो विण्मूत्रनिरोधः। सिंह इवास्तानीद् द्रुवयो विबद्धः (अथर्व० ५।२०।२)। विबद्ध आनद्धः।

—बाध् (बाधृ लोडने, लोडनं प्रतिघातः। वि बाधिष्ट स्य रोदसी महित्वा (ऋ० ७।२३।३)। विबाधिष्ट = व्यबाधिष्ट = प्रत्यवधीत्।

—बुध् (बुध अवगमने)। कच्चित्काले विबुध्यसे (भा० सभा० ५।२८)। विबुध्यसे जागर्षि।

—ब्रू (ब्रूञ् व्यक्तायां वाचि)। विब्रुवन्तु यथा सत्यमेतत् (भा० वन० ७६।३३)। विब्रुवन्तु व्यक्तं कथयन्तु। व्यब्रवीद् वयुना मर्त्येभ्योऽग्निर्विद्वान् (ऋ० १।१४५।५)। व्यब्रवीत्=प्राब्रवीत् प्रोक्तवान्। व्याचष्टेत्यर्थः। यानेव मां प्रश्नानप्राक्षीस्तानेव मे विब्रूहि (श० ब्रा० ११।४।१।६)। प्रतिब्रूहि, आख्याहीत्याह। विब्रूत मे प्रश्नमिमं यथावत् (भा० सभा० ६७।५२)। विब्रूत स्पष्टं ब्रूत। प्रश्नं च न विब्रूयात् (आप० ध० १।३२।१२)। विविच्य वचनं विवचनं निर्णय इति हरदत्तः। तोके वा गोषु तनये यदप्सु वि क्रन्दसी उर्वरासु ब्रवैते (ऋ० ६।२५।४)। विब्रवैते विवदेते। तस्माद्धाप्येतर्हि वित्त्यां व्याहुर्यथा वित्तमेव न इति (ऐ० ब्रा० ३।२८)। व्याहुः=व्याचक्षते। अब्रुवन् विब्रुवन्वापि नरो भवति किल्बिषी (मनु० ८।१३)। विब्रुवन् विरुद्धं ब्रुवन्। मिथ्या वदन्नित्यर्थः। येनाविब्रुवता प्रश्नं तथा कृष्णा सभां गता। उपेक्षिता··· (भा० द्रोण० १९६।३२)॥ अविब्रुवता=अप्रतिब्रुवता। प्रश्नान् कांश्चिद् विब्रुवाणं च सम्यक् (भा० आदि० १।१६८)। ब्रूञ् इति क्रियासामान्ये वर्तते। विब्रुवाणं कुर्वाणम्। पृच्छन्तमित्यर्थः।

—भज् (भज सेवायाम्)। तं क्षुरप्रशकलीकृतं कृती पत्रिणां व्यभजदाश्रमाद् बहिः (रघु० ११।२९)। व्यभजत्=विभज्य दत्तवान्। सन्ध्यामङ्गलदीपिका विभजते शुद्धान्तवृद्धो जनः (विक्रम० ३।२)। विभजते=विभागेन स्थापयति। विभक्ताः सह जीवन्तो विभजेरन्पुनर्यदि (मनु० ९।२१०)। विभजेरन्=रिक्थविभागं कुर्वीरन्। कुडवं कुडवं सर्वे व्यभजन्त तपस्विनः (भा० आश्व० ९०।३४)। वायवीयैर्विगण्यन्ते विभक्ताः परमाणवः (याज्ञ० ३।१०४)। विभक्ताः पृथक्कृताः। विभक्ता भ्रातरः विभक्तधना इत्यर्थः। विभक्तरक्षःसम्बाधमाससादानिलात्मजः (रा० ५।५३।३७)। विभक्तरक्षःसम्बाधम् परिहृतराक्षसौघम्। वपुर्विभक्तावयवं पुमानिति (शिशु० १।३)। विभक्ता विविक्ततया दृश्यमानाः (अवयवाः)। कालं कालविभक्तीश्च (मनु० १।२४)। विभक्तयो विभागाः। कथं सृष्टानि भूतानि कथं वर्णविभक्तयः (भा० शां० १८२।३)। वर्णविभक्तयः=द्विजादिवर्णविभागाः। कशापातेन दृश्यन्ते नानावर्णविभक्तयः। (पञ्चत० २।४)। वर्णविभक्तयः=लोहितादिवर्णवैचित्र्याणि। समस्तत्र विभागः स्यात् (मनु० ९।१२०)। विभागोंऽशनिपातः। तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः (गीता० ३।२८)। विभागो भेदो विशेषः। विभज्य मेरुर्न यदर्थिसात्कृतः (नै० १।१६)। विभज्य विभागं कृत्वा, शकलानि कृत्वेत्यर्थः।

—भञ्ज् (भञ्जो आमर्दने)। तृष्णास्रोतोविभङ्गः (भर्तृ० ३।२६)। स्रोतोविभङ्गः=उत्सविरामः। प्रवाहप्रतिबन्धः। भ्रूविभङ्गकुटिलं च वीक्षितम् (रघु० १६।१७)। भ्रूविभङ्गः=भ्रुवोराकुञ्चनम्। वलीविभङ्गचतुरं स्तनभारविनामितम् (भा० वि० १४।२२)। वलीरूपो विभङ्गो वलीविभङ्गः। शिलाविभङ्गैर्मृगराजशावस्तुङ्गं नगोत्सङ्गमिवारुरोह (रघु० ६।३०)। शिलाविभङ्गाः शिलामया विभङ्गाः सोपानपर्वाणि। विविधविकारविभङ्गम् (गीत० ११)। विभङ्गो विजृम्भणम्, आविर्भावः।

—भा (भा दीप्तौ)। सुखमिव सा विबभौ विभावरी (रा० १।२२।२४)। विबभौ व्युवास, व्युष्टा। तस्य भासा सर्वमिदं विभाति (कठ० उ० २।२।१५)। दीप्यत इत्यर्थः। एकः सूर्यः सर्वमिदं विभाति (भा० वन० १३४।८)। विभाति=भापयति=भासयति। एकैवोषाः सर्वमिदं विभाति (ऋ० ८।५८।२)। उक्तोऽर्थः। विभावरीं सर्वभूतप्रतिष्ठां गङ्गां गता ये (भा० अनु० २६।८६)। विभावरीं प्रकाशिकाम्।

—भाष् (भाष व्यक्तायां वाचि)। तमेवान्येन कल्पेन धर्ममस्मै व्यभाषत (बुद्ध० १२।४५)। व्यभाषत व्याख्यातवान्। मामेव हि विशेषेण विभाष्य परिगर्हसे (भा० उ० १२७।२)। विभाष्य परुषमुक्त्वा।

—भिद् (भिदिर विदारणे)। विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या (शिशु० ४।१४)। विभिन्नवर्णा विचित्रवर्णाः सम्भिन्नरागाः।

—भी (ञिभी भये)। विभीर्जप्यपरो मौनी वैराग्यं समुपाश्रितः (भा० शां० २७८।१५)। विभीः=विगतभीः, निर्भीकः।

—भू (भू सत्तायाम्)। ब्रह्म वा इदमग्र आसीदेकमेव। तदेकं सन्न व्यभवत् (श० ब्रा० १४।४।२।२३)। न व्यभवत्=न समर्थमभूत्, नालङ्कर्मीणमासीत्। सन्नयतस्तु ते विभवतः (आप० श्रौ० १।५।१६।१)। संनयतस्तु ये पवित्रे सायन्दोहार्थे ते एवाद्यापि कर्मणे प्रभवतः (रुद्रदत्तः)। न चत्वारि षड्भ्यो विभवन्ति (पञ्च० ब्रा० १६।५।२०)। विभवन्ति पर्याप्ता भवन्ति, अलंभवन्ति, तत्समा भवन्ति। इन्द्रो वृत्राय वज्रं प्राहरत्। स त्रेधा व्यभवत् (तै० सं० ६।१।३।४)। त्रिधा विभक्तोऽभूदित्याह। विभवनं नाना भवनं भवति। इष्टगन्धानि देवानां पुष्पाणीति विभावय (भा० अनु० ९८।२७)। विभावय जानीहि। उत्पन्ने बीजसद्भावं त्वङ्कुरेण विभावयेत् (तन्त्रा० १।१।३४)। विभावयेत्, जानीयात्, अनुमिमीत। आर्यरूपमिवानार्यं कर्मभिः स्वैर्विभावयेत् (मनु० १०।५७)। निश्चिनुयादित्यर्थः। मनुः प्रजापतिर्ज्ञेयः कामः सोमो विभाव्यते (हरि० १।४०।५४)। विभाव्यते ज्ञायते। उक्तं च न विभावयेत् (मनु० ८।५६)। न विभावयेत् प्रमाणैर्न प्रतिपादयेत्। विभावयेन्न चेल्लिङ्गै-

स्तत्समं दण्डमर्हति (याज्ञ० २।३३) । उक्तोऽर्थः । तेनैव विभावयामि (तन्त्रा० १।१५) । तेनैव साक्षिणा साधयामीत्यर्थः । लोकान्विभावयसि हंसि जगत्प्रतीपान् (भा० पु० ७।६।३८)। विभावयसि पालयसि परित्रायसे । विभावयामो भुवनानि सप्त (भा० पु० १०।६३।३७)। उक्तोर्थः। यथा सूर्यांशुभिः स्पृष्टं सर्वं शुचि विभाव्यते (भा० आदि० ७।२३)। विभाव्यते दृश्यते ज्ञायतेऽभ्युपेयते । तव सुचरितं...नूनं प्रतनु ममेव विभाव्यते फलेन (शा० ६।११) । उक्तोऽर्थः । प्रकृतीनां च राजेन्द्र राजा दीनान् विभावयेत् (भा० आश्रम० ६।१३) । विभावयेत् अनुसन्दधीतेति संस्कृतशार्मण्यकोषः । पूजयेदिति तु नीलकण्ठः । पादचारमपि न व्यभावयत् । (रघु० ११।१०) नालक्षयदित्यर्थः। यदन्यदन्यत्र विभाव्यते भ्रमात् (रा० ७।५।३७) । विभाव्यते उत्प्रेक्ष्यते । यत्तदुक्तं महद् वाक्यं कर्मणा तद् विभाव्यताम् (भा० उ० १६०८६) । विभाव्यतां दर्श्यताम् । न विभाव्यन्ते लघवो वित्तहीनाः पुरोऽपि निवसन्तः (पञ्चत० ५।७) । न दृश्यन्त इत्यर्थः । उपेक्ष्यन्त इति यावत् । तपसो जातं तपसो विभूतम् (ऋ० १०।१८३।१) । विभूतम् आविर्भूतम् । आत्मन्यदृच्छया प्राप्तं विबुभूषुरुपाददे (भा० पु० २।५।२१) । विबुभूषुः=व्याप्तुमिच्छुः । दापयेद् धनिकस्यार्थमधमर्णाद् विभावितम् (मनु० ८।४७) । विभावितं लेख्यादिप्रमाणप्रतिपादितम् । निह्नुते लिखितं नैकमेकदेशे विभावितः (प्रत्यर्थी) (याज्ञ० २।२०) । विभावितोऽङ्गीकारितः । विभावितैकदेशेन देयं यदभियुज्यते (विक्रम० ४।१७) । विभावितो दृष्ट एकदेशो यत्र, तेन । अरण्ये निःशलाके वा मन्त्रयेदविभावितः (मनु० ७।१४७) । अविभावितोऽनुपलक्षितः । प्रासादाग्रे ह्यरण्ये वा मन्त्रयेदविभावितः (का० नी० सा० १२।४७) । उक्तोऽर्थः । अहं त्वाचरितापुण्या दुःखैरेव विभाविता (बृ० श्लो० सं० ४।१०७) । विभाविता प्रकटिता । इयं वा इदं सर्वं विभवन्त्येष्यति (पञ्च० ब्रा० २०।१४।२) । विभवन्ती व्यश्नुवाना, व्याप्नुवती । कथं पर्येति (सूर्यः) वसुधां भुवनानि विभावयन् (सूर्य० १२।३) । विभावयन्=भासयन्, प्रकाशयन् । तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य (मालती० १।१८) । विभाव्य दृष्ट्वा, निभाल्य । यशः परं जगति विभाव्य वर्तिता (भा० द्रोण० २।१५) । विभाव्य प्रकाश्य । यस्याङ्घ्रिपद्मं परिचर्य विश्वविभावनायत्तगुणाभिपत्तेः (भा० पु० ४।८।२०) । विभावना परिपालनम् । पश्चिमां तु समासीनः सम्यगृक्षविभावनात् (मनु० २।१०१) । विभावनं दर्शनम् । सा विभूतिरनुभावसम्पदां भूयसी तव (शिशु० १४।५) । विभूतिर्महिमा । अघोपघातं मघवा विभूत्यै भवोद्भवाराधनमादिदेश (कि० ११।८०) । विभूत्यै समृद्ध्यै, योगक्षेमाय । अहो राजाधिराज-

मन्त्रिणो विभूतिः (मुद्रा० ३)। विभूतिरैश्वर्यम्। विभूतयस्तदीयानां पर्यस्ता यशसामिव (रघु० ४।१९)। विभूतयः सम्पदः। यद् यद् विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा (गीता १०।४१)। विभूतिस्तेजः। अणिमादयोऽष्टौ विभूतयः। विभूतिर्दिव्यप्रभावः। एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः (गीता १०।७)। विभूतिर्विस्तारः। व्याप्तिः। क्षेत्रज्ञ एता मनसो विभूती जीवस्य मायारचितस्य नित्याः (भा० पु० ५।११।१२)। विभूती= विभूतय =प्रवृत्तयः। अपूर्वोऽन्यत्र दुर्लभोऽर्थः। नाविभाव्यां गिरं सृजेद् (भा० शां० ९३।१०)। अविभाव्यामचिन्त्यार्थाम्। त्वरमाणोऽभिनिर्यातु विप्रेभ्योर्थ-विभावकः (भा० वन० ३३।८४)। विप्रेभ्योऽर्थं विभावयिष्यामि प्रदास्यामीति अर्थविभावकः। अर्थं विभावक इति तु पाणिनीयाः। चित्रः प्रकेतो अजनिष्ट विभ्वा (ऋ० १।११३।१)। विभ्वा विभूततमम् (नि० २।१९।१)। विस्तीर्ण-तमम् इति दुर्गः।

—भ्रम् (भ्रमु चलने, भ्रमु अनवस्थाने)। क्वचिदुद्भ्रमते योगात् क्वचिद्विभ्रमते बलात् (रा० ३।६०।३६)। विबभ्राम मतिस्तात विनया-दनयाऽऽहृता (हरि० १।२५।२९)। मतिरनयाऽऽहृताऽनीत्या ताडिता विनयाद् विबभ्राम चचालेत्याह। स चेद्राजन्यनेकाग्रो राज्यविभ्रमश-ङ्कया (रा० २।२३।२७)। राज्यचलनशङ्कया, राज्यभ्रंशभयेन। दण्डस्य विभ्रमात्। अन्यथा प्रवर्तनात्। निवृत्तसर्वेन्द्रियवृत्तिविभ्रमः (भा० पु० १।९।३१)। विभ्रमोऽनवस्थानम्, चाञ्चल्यम्। चित्तवृत्त्यनवस्थानं शृङ्गाराद् विभ्रमो भवेत्। विभ्रमस्त्वरयाऽकाले भूषास्थानविपर्ययः। तथा च कुमारे (१।४) प्रयोगः—यश्चाप्सरोविभ्रममण्डनानां सम्पादयित्रीं (धातुमत्तां) शिखरैर्बिभर्ति। नवप्रणयविभ्रमाकुलितमालतीदृष्टयः (मालती० ९।३८)। विभ्रमो विलासः। तरङ्गस्य बिभर्ति विभ्रमम् (नै० १५।२५)। विभ्रमः शोभा। योऽधर्मे धर्मविभ्रमः (भा० पु० ४।१९।१२)। विभ्रमो भ्रान्तिरन्यथा ग्रहः। ऊर्मिव्यतिकरविभ्रमप्रचण्डः (महावीर० ६।२६)। विभ्रमः क्षोभः। दीर्घमायुः स मे प्रादात्ततो मां विभ्रमोऽस्पृशत् (रा० ३।७१।९)। विभ्रमो दर्पः।

—मद् (मदी हर्षे)। तद् व्यमाद्यत् (ऐ० ब्रा० २।२२)। विर्नानार्थे। विविधं व्याकुलमभूत्। विमत्तमिव हि तौ तया निरक्रुस्ताम् (ऐ० ब्रा० २। २२)। उक्तोऽर्थः।

—मन् (मन ज्ञाने मनु अवबोधने)। दिष्ट्या न विमतिं काञ्चिद् भजित्वा तु पराजितः (भा० शल्य० ६४।२७)। विमतिर्विपरीता मतिः। त्वया नाम मुनिर्विमान्यः (शा० ५।२०)। विमानयितुमवधीरयितुं योग्यः।

स्त्रीभिर्विमानितानां कापुरुषाणां विवर्धते मदनः (मृच्छ० ८।६)। विमानितानामवहेलितानाम्। आक्रोशनविमानाभ्यां नाबुधान्बोधयेद् बुधः (भा० शां० २९९।२५)। विमानस्तिरस्कारः। विमानना सुभ्रु कुतः पितुर्गृहे (कु० ५। ४३)।

—मा (माङ् माने)। वीमां मात्रां मिमीमहे (अथर्व० १८।२।४१)। विमिमीमहे विशेषेण मानं कुर्मः। विशिष्टगुणयोगः श्मशानमानस्योच्यत इति सायणः। शक्रो विमिमीते अध्वनः (अथर्व० ४।११।२)। उक्तोऽर्थः। सद्यो जातो व्यमिमीत यज्ञम् (ऋ० १०।११०।११)। व्यमिमीत=निरमिमीत। स सर्वासां विमानानि देवतानां चकार ह (हरि० १।३। ४८)। विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनि। इमां विमानेन सभां विशन्तीं ययावनङ्गैरथ राजराजिः (नै० १०।१०७)। विमानः कर्णीरथः।

—मि (डुमिञ् प्रक्षेपणे)। तस्मान्मन्थिनः पुरोरुचा विमितं विमिनुतः (श० ब्रा० ५।४।४।२१)। विमिनुतः=उत्तभ्नीतः। विमितं छन्नम्।

—मुच् (मुच्लृ मोक्षणे)। समाविशति संसृष्टस्तदा मूर्त्ति विमुञ्चति (मनु० १।५६)। विमुञ्चति परिगृह्णाति। प्रतिमुञ्चत्यर्थे विमुञ्चतेः प्रयोगः। विमोक्ष्यन्ति विषं क्रुद्धाः कौरवेयेषु भारत (भा० वन० ८।३)। विषं शस्त्रं विमोक्ष्यन्ति प्रहरिष्यन्तीत्याह। वाजिनः स्यन्दने भानोर्विमुक्तप्रग्रहा इव (भट्टि० ७।५०)। विमुक्तप्रग्रहाः शिथिलीकृताभीषवः। ततो विमुक्त्वा सशरं शरासनम् (रा० ६।१११।१२४)। विमुक्त्वा=विमुच्य=विज्यं कृत्वा। विमुच्य वासांसि गुरूणि साम्प्रतम् (ऋतु० १।७)। विमुच्य=संन्यस्य, परित्यज्य, अवतार्य। ननु मां कामवधे विमुञ्चता (कु० ४।३१)। विमुञ्चता परिहरता, मां कामवद्घ्नता।

—मृद् (मृद क्षोदे)। विमर्दसुरभिर्वकुलावलिका खल्वहम् (माल० ३)। विमर्दः सङ्घर्षः। कस्तूरिका मृगविमर्दसुगन्धिरेति (शिशु० ४।६१)। कुतूहलविमर्दकारिणा परिश्रमेण (मृच्छ० १)। विमर्दः प्रध्वंसः। विमर्दक्षमां भूमिमवतरामः (उत्तर० ५)। विमर्दः सम्परायो युद्धम्। पुरा जनस्थानविमर्दशङ्की सन्धाय लङ्काधिपतिः प्रतस्थे। जनस्थानविमर्दो जनस्थानोत्सादः।

—मृश् (मृश आमर्शने, आमर्शनं स्पर्शः)। विषदोषभयादन्नं विमृशेत् कपिकुक्कुटैः (शुक्र० १।३२६)। विमृशेत् परीक्षेत। तदत्रभवानिमं मां च शास्त्रे प्रयोगे च विमृशतु (माल० १)। उक्तोऽर्थः। वि रोहितो अमृशद् विश्वरूपम् (अथर्व० १३।१।८)। व्यमृशत्=समस्पृशत्। वयं सोम व्रते तव मनस्तनूषु बिभ्रतः प्रजावन्तो अशीमहीति मुखं विमृष्टे (आप० श्रौ० ६।१६।१२)।

**विमृष्टे विमृशति=स्पृशति ।** रामप्रवासे व्यमृशन्न दोषं जनापवादं सनरेन्द्र-मृत्युम् (भट्टि० ३।७) । **न व्यमृशत् नालोचितवती (कैकेयी) ।** कार्यस्य न विमर्शं **च** गन्तुमर्हसि कौशिक (रा० १।१८।५६)। विमर्शः संशयः (कतकः)। कुर्वन्बुद्धया विमर्शम् (मुद्रा० ४।३)। **विमर्शो विचारश्चिन्तनं विवेचनम् ।** अविद्वदधिकारित्वात्प्रायश्चित्तं विमर्शनम् (भा० पु० ६।१।११)। वृणते हि **विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः** (कि० २।३०)। **विमृश्यकारी समीक्ष्यकारी ।** इति ते ज्ञानमाख्यातं गुह्याद् गुह्यतरं मया। विमृश्यैतदशेषेण (गीता० १८।६३) ॥ **विमृश्य=सुविचिन्त्य=सम्प्रधार्य ।**

**—मे (मेङ् प्रणिदाने प्रणिदानं विनिमयः प्रत्यर्पणं च)** । रसा रसैर्महतो हीनतो वा विमातव्याः (व० ध० शा० २।३७)। **विनिमेयाः परिवर्तनीया इत्यर्थः ।**

**—मोक्ष् (मोक्ष असने चुरादिः)** । सा त्वं सर्वविमोक्षाय तत्त्वमाख्याहि पृच्छतः (भा० उ० १९०।१६)। **विमोक्षोऽपवर्गः, कैवल्यम्, संसारमोक्ष इति वा ।** वसूनां च विमोक्षस्य (रा० २।२३।३८)। **विमोक्ष उत्सर्गः । वसूनां वित्तानाम् ।**

**—यत् (यती प्रयत्ने)** । त्रीणिच्छन्दांसि कवयो वियेतिरे (अथर्व० १८।१।१७)। **वियेतिरे यत्नेन कृतवन्तः । कवयः पूर्वे ज्ञानिनो महर्षयो देवा वा ।** त्रिवृतमेव यज्ञमुखे वियातयति (तै० सं० ५।१।१।३)। **आनुपूर्व्या न्यस्य-तीत्याह ।** तदात्मना प्रज्ञया पिशाचा वियातयन्ताम् (अथर्व० ५।२९।६)। **वियातयन्ताम् निष्कुर्वताम्, प्रायश्चित्तेन शुन्धन्तु ।** तं यमः पापकर्माणं वियात-यति दुष्कृतम् (भा० आदि० ७४।३२)। **वियातयति विशेषेण पीडयति ।**

**—यम् (यम उपरमे)** । यथायथा पतयन्तो वियेभिर् एवैव तस्थुः सवितः सवाय ते (ऋ० ४।५४।५)। मा त्वा केचिद् वियमन् (अथर्व० ७।१२१।१)। **मा वियमन् मा विशेषेण यंसिषुः ।** वि सक्थानि नरो यमुः (ऋ० ५।६१।३)। **वियमुः=वियुवन्ति विप्रकृष्टानि कुर्वते ।** वि रोहिता पुरुमीळ्हाय येमतुः (ऋ० ५।६१।९)। वियेमतुस्त्वरितं विक्रमेते। अस्मभ्यं शर्म बहुलं वि यन्त (ऋ० ६।५१।५)। **वियन्त=वितरत=विश्राणयत ।** अस्मभ्यं तानि मरुतो वि यन्त (ऋ० १।८५।१२)। **उक्तोऽर्थः ।** यत्संयमो न वियमो वियमो यन्न संयमः (अथर्व० ४।३।७)। **वियमो विरुद्धयमनम्, अन्यथाभावः ।** वियच्छन्दः (वा० सं० १५।५)। **विशेषेण यच्छन्ति गच्छन्ति व्यापारायेतस्ततो जना यत्रेति वियद् दिनमिति महीधरः ।**

**—या (या प्रापणे, प्रापणमिह गतिः)** । इदं विश्वं भुवनं वि याति

(अथर्व० ३।३१।५)। इदं विश्वं भुवनं पृथिव्यन्तरिक्षादिरूपं विगतं विश्लिष्टं भवतीत्याह। वीन्द्र यासि दिव्यानि रोचना (ऋ० १०।३२।२)। वियासि व्याप्नोषि। वि याथन वनिनः पृथिव्या व्याशाः पर्वतानाम् (ऋ० १।३९।३)। वियाथन=वियाथ=मध्येन याथ। वि भिन्दुना नासत्या रथेन वि पर्वतां अजरयू अयातम् (ऋ० १।११६।२०)। उक्तचर एवार्थः। तुविग्रेभिः सत्वभिर्याति वि ज्रयः (ऋ० १।१४०।९)। वियाति द्विधा विभजते। आस्फोटयाञ्चक्रुरभिप्रणेदू रेजुर्ननन्दुर्वियुः समीयुः (भट्टि० १३।२८)। वियुर्वियुक्ता अभूवन्, व्यपेयुः। यस्मिन्मनो ह्यपि नो न वियाति लग्नम् (भा० पु० ५।२। १६)। न वियाति न व्यपवर्तते। धृषिशसी वैयात्ये (पा० ७।२।१९)। वियातो धृष्टः। विशस्त इत्यनर्थान्तरम्।

—यु (यु मिश्रणामिश्रणयोः)। वि कोशं मध्यमं युव (ऋ० ६।१०८। ९)। वियुव=वियुहि=विसिनु=उद्घाटय। न म इन्द्रेण सख्यं वि योषत् (ऋ० २।१८।८)। इहैव स्तं मा वि यौष्टम् (ऋ० १०।८५।४२)। मा वियौष्टं वियुक्तौ मा स्म भूतम्। न स राया शशमानो वि योषत् (ऋ० ४।२।९)। उक्तोऽर्थः। अधा स वीरैर्दशभिर्वि यूयाः (ऋ० ७।१०४।१५)। वियूयाः=वियूयात्। पुरुषव्यत्ययः। वियुतो विपृक्तो वियुक्तो भूयादित्यर्थः। इहेह वस्तै वियुता यदासन् (ऋ० ५।३०।१०)। वियुता विप्रयुक्ताः। न वयं रायस्पोषेण वियौष्म (वा० सं० ४।२२)। असकृदुक्तचरोऽर्थः। लोके यौतिरुदात्तः, तेन मा वियाविष्मेति स्यात्। अशेषैर्वियुतं दोषैरशेषैः संयुतं गुणैः (बृ० श्लो० सं० ५।१२८)। वियुतं वियुक्तम्।

—युज् (युजिर् योगे)। येषां चतुर्थं वियुनक्ति वाचम् (अथर्व० ८।९।३)। वियुनक्ति=पृथक्करोति विसंहितां करोति। सोहमेनं तव प्रीत्या तपःसिद्धमपि ध्रुवम्। वियुनज्मि देहाद् देवेन्द्र (भा० वन० १४२।२६)। वियोजयामीत्यर्थः। नूनं भूतानि भगवान् युनक्ति च (भा० पु० १०।८२।४२)। उक्तोऽर्थः। मदमानसमुद्धतं नृपं न वियुङ्क्ते नियमेन मूढता (कि० २।४९)। वियुङ्क्ते रहयति। कोऽद्यैव मया वियुज्यतां तवासुहृत्प्राणयशःसुहृज्जनैः (रा० २।२३।४१)। वियुज्यतां वियुक्तः क्रियताम्। येन येन वियुज्यन्ते प्रजा स्निग्धेन बन्धुना। स स पापादृते तासां दुष्यन्त इति घुष्यताम् (शा० ६।२३)। प्राणैर्न वियोजयति (पञ्चत०१)। प्राणैर्जीवितेन वियुक्तं न करोति। पुरो वियुक्ते मिथुने कृपावती (कु० ५।२६)। संयुक्तांश्च वियुक्तांश्च सर्वोपायान् सृजेद् बुधः (मनु० ७।२१४)। वियुक्तान् व्यस्तान्। संयुक्तान् समस्तान्। समं प्रयुक्तान्। अजानता मया सैव पत्रैः शाखा वियोजिता (मृच्छ० ४।१३)।

—रक्ष् (रक्ष पालने)। राजा राष्ट्रं वि रक्षति (अथर्व० ११।५।१७)।

विशेषेण रक्षतीत्यर्थः। अन्योन्यं समुपाश्रित्य विरक्षन्ति रणाजिरे (भा० ७। ४४।०)। उक्तोऽर्थः।

—रच् (रच प्रतियत्ने)। नावं विरचयेरन्यां तरणाय गुणैर्युताम्। विरचयेः=निर्माहि। मालाकार व्यरचि भवता या तरोरस्य पुष्टिः (भामिनी० १।३०)। व्यरचि अकारि। क्षितिविरचितशय्यं कौतुकागारमागात् (कु० ७।९४)। विरचिता संविहिताऽऽस्तीर्णा (शय्या)। इति विरचित-वाग्भि-र्वन्दि-पुत्रैः (रघु० ५।७४)। विरचितवाग्भिः सङ्ग्रथितवचनैः। मद-गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा (मेघ० ८८)। उक्तोऽर्थः। तारावली-विरचनैर्व्यरुचन्निवाशाः (शिशु० ५।२१)। विरचनं क्रमेण न्यासः। ताराः शुद्धमुक्ताः।

—रञ्ज् (रञ्ज रागे)। चकोरस्य विरज्येते नयने विषदर्शनात् (का०नी० सा० ७।१२)। विरज्येते निसर्गजं स्ववर्णं हारयत इत्याह। कोकिलस्याक्षिणी विरज्येते (कौ० अ० १।२०।१७)। केशा अपि विरज्यन्ते निःस्नेहाः किं न सेवकाः (पञ्चत० १।८२)। विरज्यन्ते विगतरागा भवन्ति, स्वं वर्णं जहति, सितिमानमापद्यन्ते। पक्षान्तरे त्यक्तानुरागा जायन्ते रूक्षा भवन्तीत्यर्थः। चिरानुरक्तोपि विरज्यते जनः (मृच्छ० १।५)। विरज्यते विरक्तो भवति। श्रीर्निष्कुष्यति लङ्कायां विरज्यन्ति समृद्धयः (भट्टि० १८।२२)। विरज्यन्ति =अपयान्ति। औपचारिकः प्रयोगः। तदार्तवं प्रशंसन्ति यद्वासो न विरञ्ज-येत् (सुश्रुते १।३१५।१०)। न विरञ्जयेत्=नाङ्कितं कुर्यात्। न कलङ्कितं विदध्यात्। रक्ताद् वृत्तिं समीहेत विरक्तस्य विवर्जयेत् (का० नी० सा० ५। ४६)। विरक्त उदासीनः। सैवामृतलता रक्ता विरक्ता विषवल्लरी (कथा० ३३। १८५)। विरक्ता निष्प्रणया। विरक्तसन्ध्याकपिशं पुरस्तात् (रघु० १३।६४)। विरक्ता विशेषेण रक्ता लोहिता। विरक्तः प्रव्रजेद् धीमान् संरक्तस्तु गृहे वसेत् (नारद०)। विरक्तोऽनासक्तः। यां चिन्तयामि सततं मयि सा विरक्ता (भर्तृ०)। विरागकारणेषु परिहृतेषु (मुद्रा० १)। विरागोऽनुरागाभावः, निष्प्रणयता।

—रद् (रद विलेखने)। तं गृहीत्वा नखैस्तीक्ष्णैर्विरराद समन्ततः (रा० ३।५१।३३)। विरराद विलिलेख।

—रम् (रमु क्रीडायाम्)। पावकश्च तदा दावं दग्ध्वा समृगपक्षिणम्। अहानि पञ्च चैकं च विरराम सुतर्पितः (भा० आदि० २३४।१५)॥ विरराम उपरराम। दहनकर्मणो निववृते। विरमेत् पक्षिणीं रात्रिम् (मनु० ४।९७)। अध्ययनादिति शेषः। अध्ययनविरामं कुर्यादित्यर्थः। प्रारभ्य विघ्नविहता

विरमन्ति मध्याः (भर्तृ० नीति०   )। विरमन्ति कार्यविच्छेदं कुर्वन्तीत्याह। न स्थिरकर्मा विरराम कर्मणः (रघु० ८।२२) कर्मप्रबन्धोऽस्याप्रतिबद्धो बभूवेत्यर्थः। अविदितगतयामा रात्रिरेव व्यरंसीत् (उत्तर० १।२७)। रात्रिरवसानमयासीत्। हा हन्त रजनीं तदानीं कथाप्रकारैर्बहुभिर्महात्मा विरामयामास नरेन्द्रसूनुः (रा० ७।६६।१७)। अवसानं निनाय। गमयामासेत्यर्थः। किमिति चित्तं विरमति नाद्यापि विषयेभ्यः (भामिनी० ४।२५)। न विरमति=न व्यपवर्तते। एतावदुक्त्वा विरते मृगेन्द्रे (रघु० २।५१)। उक्त्वा विरते=उपसंहृतवचसि। उपारमत पाण्डूनां विरता हि वरूथिनी (भा० द्रोण० १८४।३०)। विरता श्रान्ता। प्रवृत्तस्याविरामे भवन्ती शासितव्या (भाष्ये)। अविरामोऽविच्छेदः। सुधां विना न प्रययुर्विरामम् (भर्तृ० २।८०)। विरामो व्यापृतिविच्छेदः, प्रवृत्तिभङ्गः। आरामः कल्पवृक्षाणां विरामः सकलापदाम् (रामरक्षा श्लो० १६)। विरामो विरामस्थानम्। वर्णानामपि मूर्छनान्तर्गतं तारं विरामे मृदुम् (मृच्छ० ३।१)। विरामेऽवसाने। आरत्यवरतिविरतय उपराम इत्यमरे पर्यायपरिपाठः।

—राज् (राजृ दीप्तौ)। यथाहमेषां वीराणां विराजानि धनस्य च (अथर्व० १।२९।६)। वेदे राजतिरैश्वर्यकर्मा। नियन्ता भवानीत्यर्थः। एषा भागीरथी...वातेरिता पताकेव विराजति नभस्थले (रा० २।६७।१६)। विराजति शोभते। शाखिनोऽन्ये विराजन्ते खण्डयन्ते चन्दनद्रुमाः (भामिनी० १।८८)। मृदुकुञ्चितदीर्घेण कुसुमोत्करधारिणा। केशहस्तेन ललना जगामाथ विराजती (भा० वन० ४६।६)। विराजती=विराजन्ती=शुम्भमाना=दीप्यमाना। व्यराजयत वैदेही वेश्म तत् सुविभूषिता। उद्यतोंशुमतः काले खं प्रभेव विवस्वतः (रा० २।३६।१८)॥ व्यराजयत=अशोभयत्।

—राध् (राध साध संसिद्धौ)। सं श्रुतेन गमेमहि मा श्रुतेन वि राधिषि (अथर्व० १।१।४)। श्रुतेन वियुक्तो मा भूवम्। मा प्रजया प्रतिगृह्य वि राधिषि (अथर्व० ३।२९।८)। तेनाहं सत्येन मा विराधिषि ब्रह्मणा (छां० उप० ३।११।२)। उक्तोऽर्थः। क्रियासमभिहारेण विराध्यन्तं क्षमेत कः (शिशु० २।४३)। विराध्यन्तं द्रुह्यन्तम्, अपकुर्वन्तम्। न हि तद्विधानां जनप्रवादसम्पादनाभिराध्या गुणविभूतिः (अवदा० श्रेष्ठि० जा०)। अभिराध्या साध्या।

—रिच् (रिचिर् विरेचने)। अतश्चिदस्य महिमा वि रेचि (ऋ० ४।१६।५)। विरेचि व्यतिरिक्तोऽभूत्। ज्यायानभूदित्यर्थः। यः सोमं पीत्वा छर्दयेत विरिच्येत वा (लाट्या० श्रौ० ८।१०।६)। विरिच्येत संजातविरेकः स्यात्। वान्तो विरिक्तः (मनु० ५।१४४)। उक्तोऽर्थः।

—रु (रु शब्दे)। ननु सहचरीं दूरे मत्वा विरौषि समुत्सुकः (विक्रम० ४।२०)। विरौषि वाश्यसे। कूजसि। क्रन्दसि। न स विरौति न चापि स शोभते (पञ्चत० १।७५)। विरौति, शिङ्क्ते, क्वणति, रणति। जीर्णत्वाद् गृहस्य विरौति कपाटम् (मृच्छ० ३)। विरौति सङ्क्रीडति। एते त एव गिरयो विरुवन्मयूराः (उत्तर० २।२३)। विरुवन्तो विरावं कुर्वन्तः कूजन्तो मयूरा यत्र ते। गायनैश्च विराविण्यो वादनैश्च तथा परैः (रा० १।१८।१९)। विराविण्यः (रथ्याः) प्रतिश्रुत्वत्यः, प्रतिध्वनिताः। परभृतविरुतं कलं यथा प्रतिवचनीकृतमेभिरीदृशम् (शा० ४।९)। परभृतविरुतं कोकिलकूजितम्।

—रुच् (रुच दीप्तावभिप्रीतौ च)। अग्ने बृहद् वि रोचसे त्वं घृतेभिराहुतः (ऋ० २।७।४)। विरोचसे दीप्यसे, समिद्धो भवसि। संसृष्टं ब्रह्मणा क्षत्रं भूय एव व्यरोचत (भा० वन० २६।४)। उक्तोऽर्थः। तत्रस्थैरथ तैर्बाणैर्माद्रिपुत्रो व्यरोचत (भा० कर्ण० २४।१७)। अलातचक्रवच्चैव व्यरोचत महीं गतः (भा० द्रोण० ११५।४८)। प्रत्यभादित्यर्थः। यो ब्राह्मणो विद्यामनूच्य न विरोचते (तै० सं० २।१।२।८)। न विरोचते लोकस्यार्चितो न भवति, यशस्वी न सञ्जायते। यया विद्यया न विरोचेत (आप० ध० २।२।५।१५)। अनन्तरोदीरित एवार्थः। दीप्तिनिर्जितविरोचनादयं गां विरोचनसुतादभीप्सतः⋯स्वर्पतेः (शिशु० १४।७४)। विरोचनः सूर्यः। स्वर्पतिरिन्द्रः।

—रुज् (रुजो भङ्गे)। इदं हिरण्यमाण्डं व्यरुजन् (श० ब्रा० ११।१।६।२)। व्यरुजन् अभञ्जन्। विरिह विशेषकृन्न। आरुजन् विरुजन् पार्थो ज्यां विकर्षंश्च पाणिना (भा० द्रोण० १२७।३१)। विरिह विशेषकृन्न। विरुजन् विध्यन्। विरुग्णोदग्रधाराग्रः कुलिशो मम वक्षसि (भट्टि० ५।२५)। विरुग्णानि अवसन्नानि कुण्ठितानि उदग्राणि महान्ति धाराग्राणि यस्य सः।

—रुद् (रुदिर् अश्रुविमोचने)। अकालज्ञासि सैरन्ध्रि शैलूषीव विरोदिषि (भा० वि० १६।४३)। गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते (सा० द० ५७०)। तस्येदमुदाहरणम्—नदन्ति मददन्तिनः परिलसन्ति वाजिव्रजाः। पठन्ति विरुदावलीमहितमन्दिरे वन्दिनः (रसगं०)॥

—रुध् (रुधिर् आवरणे)। घ्राणं करेण विरुणद्धि (ऋतु० ६।२६)। नासां पिनद्धीत्याह। न च तेऽहं विरुध्यामि कस्मान्मां हतवानसि (गोरेसियो-सं० रा० ४।१६।१९)। विरुध्यामि विरोधमाचरामि, शत्रूये, अरातीये। एको दोषो विदेशस्य स्वजातिर्यद् विरुध्यते (पञ्चत० ४।११६)। विरुध्यते कलहायते। मृत्युधर्ुवस्ते मया (रा० ३।४४।३१)। मया विरुध्य मयि प्रतीपमाचर्य। जानीयादागमान्सर्वान् ग्राह्यं च न विरोधयेत्। न विरोधयेत्,

न प्रतिब्रूयात् नापवदेत्, न खण्डयेत्। निहन्ताहं विरुद्धानां रक्षिता नमतां पुनः (कथा० ४६।१५८)। विरुद्धानां प्रतिपक्षाणां प्रतिपन्थिनाम्, पर्यवस्थातॄणाम्। परविरुद्धेषु नोत्सहन्ते महाशयाः (कथा० १७।१४६)। परैः रुद्धेष्वाक्रान्तेषु अभियातेषु न पराक्रमन्ते उदाराशया इत्याह। स्वर्गे निवासे राजेन्द्र विरुद्धं चापि नश्यति (भा० स्वर्गा० १।११)। विरुद्धं विरोधो वैरम्।

—रुह् (रुह बीजजन्मनि)। वि चारुहन्वीरुधः (ऋ० १०।४०।६)। व्यरुहन्=व्यरोहन्=अङ्कुरिता अभवन्, उदभवन्। व्यस्यामोषधयो रोहन्ति (तै० सं० ३।४।३।३)। उक्तोऽर्थः। ब्रह्मलोकं व्यरोहत (रा० ३।५।४१)। व्यरोहत=आरोहत्। शशाप पुत्रं गान्धारे राज्याच्चापि व्यरोपयत् (भा० उ० १४६।१०)। व्यरोपयत्=निरवासयत्। विरोप्यन्तां गुल्मिनः (रा० ७।५४।११)। निमीयन्तामित्यर्थः। व्रणविरोपणं तैलम् (शा० ४।१३)। क्षतसंरोहणकरमित्यर्थः।

— लक्ष् (लक्ष दर्शनाङ्कनयोः, शम लक्ष आलोचने)। गोत्रेषु स्खलित स्तदा भवति च व्रीडाविलक्षश्चिरम् (शा० ६।४)। व्रीडाविलक्षो ह्रीमूढः। विलक्षो विस्मयान्वित इत्यमरः। निष्प्रतिपत्तिरित्यर्थ इति स्वामी। विलक्षितास्ततश्चक्रुर्हाहाकारांश्च सर्वशः (भा० आदि० १८८।२२)। विषमं लक्षितं दृष्टिर्येषां ते, लक्ष्येण विनाकृता वेति नीलकण्ठः। हेतुशून्या त्वास्या विलक्षणम् (अमरः)। अत्र महेश्वरो भागुरिमुद्धरति—विलक्षणं मतं स्थानं यद् भवेन्निष्प्रयोजनम्।

—लग् (लगे सङ्गे) विलग्नमध्या सुश्रोणिः सुभ्रूः सर्वगुणान्विता (भा० आदि० १६६।६)। विलग्नमध्या शातोदरी, कृशमध्या, संलीनकुक्षिः। वेदिविलग्नमध्या (कु० १।३६)। सुदक्षिणा वेदिविलग्नमध्या (भा० वि० ३७।१)। उक्तोऽर्थः। अन्तरेणापि विमुपसर्गं केवलो लग्नशब्दः कृशार्थको दृष्टः—तं (महावीरं) प्रादेशमात्रं पृथुब्रुध्नं मध्ये लग्नं करोति (बौ० श्रौ० ६।३)। इत्यत्र यथा रथकारशरीरे पादो विलग्नः (पञ्चत०)। संलग्नः, समासक्तः। तया सह त्वदर्थे कलहायतो ममेयती वेला विलग्ना (पञ्चत०)। विलग्ना=व्यतीता। अत्रार्थेऽन्यत्र विरलः प्रयोगः।

—लङ्घ् (लघि गतौ)। इति कर्णोत्पलं प्रायस्तव दृष्ट्या विलङ्घ्यते (का० आ० २।२२४)। विलङ्घ्यते=अतिशय्यते। विलङ्घिताधोरणतीव्रयत्ना सेनागजेन्द्राः (रघु० ५।४८)। व्यर्थीकृतहस्तिप्रयासाः। गन्तुं प्रवृत्ते समयं विलङ्घ्य (कु० ३।४)। विलङ्घ्य=अतिहाय, उपेक्ष्य।

—लस्ज् (ओलस्जी व्रीडायाम्)। यत्रांशुकाक्षेपविलज्जितानाम् (कु० १।१४)। विरिह विशेषकृन्न।

—लप् (लप व्यक्तायां वाचि)। विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् (रघु० ८।४३)। विललाप पर्यदेवयत। विललाप विकीर्णमूर्धजा (कु० ४।४)। उक्तोऽर्थः। तामिह वृथा किं विलपामि (गीत० ३)। सक्रन्दनमभिव्याहरामि। अत्रार्थेऽन्यत्र मुधा मृग्यः प्रयोगः। परिदेवनमात्रे विलपिः प्रसिध्यत्यकर्मकः। अयं तु कविरिति निरङ्कुशः। यातुधानान् विलापय (अथर्व० १।७।२)। विलापं परिदेवनं कारयेत्याह। उतेव मत्तो विलपन्नपायति (अथर्व० ६।२०।१)। विलपन्=विविधं लपन्। प्रलपन्नित्यर्थः। एवं तेषां विलपतां विप्राणां विविधा गिरः (भा० आदि० १८८।१६)। विलपतां व्याहरताम्। विना नार्थः। तदर्थस्य विविधा इत्यनेनैवोक्तत्वात्। विलेपुः कोकिलाः...मधुराणि विचित्राणि (हरि० ८३६६)। विलपनविनोदोप्यसुलभः (उत्तर० ३।३०)। विलपनं विलापः परिदेवना।

—लभ् (डुलभष् प्राप्तौ)। उत्तरवेदौ वा निधाय विलाभम्... (का० श्रौ० १०।८।५)। विलाभं विलभ्य पृथग् गृहीत्वा। विलभतेर्णमुल्। पौरपुरन्ध्रीणां विलब्धनयनोत्सवः...प्राविशद्राजमन्दिरम् (कथा० ५५।१००)। विलब्धो दत्तो नेत्रानन्दो येन सः। विलब्ध इव चक्राह्वैस्तस्य तीर्णनिशैस्तदा। भेजे शतगुणीभावं करुणाक्रन्दितध्वनिः (कथा० ८७।१६)॥ अहमत्र प्रभुर्यूयं करदाश्च कुटुम्बिनः। विक्रमादित्यदेवेन विलब्धाः शासनेन मे (कथा० १२४।७७)॥ विलब्धाः समर्पिताः। मन्निघ्नाः कृता इत्यभिसन्धिः। विलम्भस्त्वतिसर्जनम् (अमरः)। अतिसर्जनम्=दानम्, त्यागः। विरत्र विपर्यये। विलब्धिस्तेन दीन्नारकोटिषण्णवतेः क्रमात् (राज०७।१६३)। विलब्धिर्विशिष्टो लाभः।

—लम्ब् (अबि रबि लबि शब्दे, लबि अवस्रंसने च)। सकृत्कृतापराधस्य तत्रैव विलम्बतः (भा० शां० १३६।२५)। विलम्बतः=विलम्बमानस्य=अवतिष्ठमानस्य। तां प्राङ्मुखीं तत्र निवेश्य तन्वीं क्षणं व्यलम्बन्त पुरो निषण्णाः (कु० ७।१३)। अवातिष्ठन्त, प्रसरं व्यरमयन्। इति यावत्स नृपतिर्विचिकित्सन् विलम्बते (कथा० ४५।१०३)। नाध्यवस्यतीत्याह। किं विलम्ब्यते त्वरितं तं प्रवेशय (उत्तर० १)। किं चिरायस इत्यर्थः। वीव वा अन्तरात्मा पक्षी लम्बते (पञ्च० ब्रा० १४।६।२०)। विलम्बते संश्रयते आधृतो भवति। क्व रामः शयितो रात्रौ क्व स्थितः क्व विलम्बितः (गोरेसियो० सं० रा० २।६३।१३)। विलम्बित उषितः। चिरं तु भवता कालो व्याक्षेपेण विल-

म्बितः (हरि० २।५६।६७)। विलम्बितो मुधा यापितः। विलम्बितफलैः कालं निनाय स मनोरथैः (रघु० १।३३)। विलम्बितं व्याक्षिप्तं फलं येषां तैः।

—लस् (लस श्लेषणक्रीडनयोः)। वियति च विललास तद्वदिन्दुर्विलसति चन्द्रमसो न यद्वदन्यः (भट्टि० १०।६९)। विललास शुशुभे, प्रचकाशे, बभासे। कापि चपला मधुरिपुणा विलसति युवतिरधिकगुणा (गीत० ७)। विलसति सविभ्रमं चेष्टते, शृङ्गारचेष्टाः करोति। (खेदः) त्वयि विलसति तुल्यं वल्लभालोकनेन (मालती० ३।८)। विलसति उद्भवति विजृम्भते। यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव (शा० २।२)। विलासो विभ्रमः शृङ्गारचेष्टा।

— लिख् (लिख अक्षरविन्यासे)। रद विलेखने इति धातुपाठः। विलेखनं भेदनं भवति। क्षुर विलेखने इति च। विलेखनं छेदनमिह विवक्षितम्। विलिखति रहसि कुरङ्गमदेन भवन्तं समशरभूतम् (गीत० ४)। विलिखति चित्रमाकरोति। पादेन हैमं विलिलेख पीठम् (रघु० ६।१५)। विलिलेख=जघर्ष। व्यलिखच्चञ्चुपुटेन पक्षती (नै० २।२)। निघ्नन् प्रोथेन पृथिवीं विलिखंश्चरणैरपि (भा० वन० १६७।१९)। विलिखन् रदन् उत्किरन्। वेदिप्रान्तात्खुरविलिखितात् (शा०)। खुरविलिखितात्खुरोत्कीर्णात्। निर्भिन्दन्तौ च गात्राणि विलिखन्तौ च सायकैः (हरि०)। विलिखन्तौ क्षिण्वन्तौ। छायातपविलेखं च (भा० आश्व० ४५। ४)। विलेखश्छिद्रम्। छायातपौ मेघसन्तापौ विलेखावुत्खातारौ यत्रेति तु नीलकण्ठः। उत्खातारावित्यपपाठः, उत्खनिताराविति तु पाठः।

—लिप् (लिप उपदेहे)। उपदेह उपचयः। क्तादल्पाख्यायाम् (४।१।५१) इत्यत्र अभ्रविलिप्ती द्यौरित्युदाहरणं वृत्तौ। अभ्रविलिप्ती=अल्पाभ्रा। विशब्दोऽल्पत्वस्य द्योतकः। अत एव चन्दनानुलिप्ता ब्राह्मणीति प्रत्युदाहरणेऽनुशब्दो व्याप्तेर्द्योतकः प्रयुक्तः।

—ली (लीङ् श्लेषणे)। तत्र के चिन्नरा भीता व्यलीयन्त महीतले (भा० सौ० ८।९२)। महीतले व्यलीयन्त=भुवमाश्लिष्टवन्तः। पतत्पतङ्गप्रतिमस्तपोनिधिः पुरोऽस्य यावन्न भुवि व्यलीयत (शिशु० १।१२)। भुवि न व्यलीयत भुवं नावातरत्। विलिल्ये यत्कुक्षिस्थितशिखिनि वातापिवपुषा (महावीर० ६।६०)। वातापिकायेन व्यद्रावि, वातापितनुर्द्रुततां गतेत्यर्थः। स्थालीपाको विलीयते (अथर्व० २०।१३४।३)। विलीयते द्रवति। यस्मिन्धर्मो विराजेत तं राजानं प्रचक्षते। यस्मिन्विलीयते धर्मस्तं देवा वृषलं विदुः (भा० शां० ९०।१४)॥ विलीयतेतिरोभवति, नश्यति। यातुधानान् विलापय (अथर्व० १।७।६)। विलापय

नाशय। आज्यं विलापयति । विलीनं करोति। सर्वं चिदात्मनि विलापयेत् तिरोभावयेत् । ब्रह्मज्ञानविलीनानां न भाति बाह्यमर्थजातम् । विलीना निमग्नाः । ततः शाखाविलीनानां स तेषां पक्षिणां मिथः (कथा० २६।२८) । शाखासु संश्रितानामित्यर्थः। सर्पिर्विलीनमाज्यं स्यात् (अमरः)। नयतु मामात्मनोऽङ्गेषु विलयमम्बा (उत्तर० ७) । विलयोन्तर्भावः । दिवसोऽनुमित्रमगमद् विलयम् (शिशु० ६।१७) । विलयोऽवसानम् । पुष्टिकाम एव...विलयनं जुहुयात् (गो० गृ० ३।६।४) । विलयनमर्धमथितं दधीति सत्यव्रतः सामश्रमी। विलयनं मथितं पिण्याकं मधु मांसं च वर्जयेत् (आप० ध० २।८।१८।१) । विलयनं नवनीतमलमिति हरदत्तः ।

—लुड् (लुड विलोडने)। तात नोदधिविलोडनं प्रति त्वद्विनाथ वयमुत्सहामहे (शिशु० १४।८३) । विलोडनं मन्थनम् । विलोडयमाने तस्मिंस्तु स्रुततोये जलाशये (भा० शां० १३७।१३) । विलोडयमाने क्षोभ्यमाणे ।

—लुप् (लुप्लृ छेदने)। रक्षांसि हि विलुम्पन्ति श्राद्धमारक्षवर्जितम् (मनु० ३।२०४) । विलुम्पन्ति आमृशन्ति आच्छिन्दन्ति । कामक्रोधौ शरीरस्थौ प्रज्ञानं तौ विलुम्पतः । कृन्ततः, उत्सादयतः, विनाशयतः । शकुन्तनिवहैर्विष्वग्विलुप्तच्छदः (पञ्चत०) । तरुर्विशेष्यः । विलुप्ताश्छिन्नाश्छदाः पत्राणि यस्य सः । प्रियमत्यन्तविलुप्तदर्शनम् (कु० ४।२) । अत्यन्ताय नष्टं दर्शनं यस्य तम् । क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता (उत्तर० ३।२८) । विलुप्ता कर्तित्वा निगीर्णा ।

—लुभ् (लुभ विमोहने)। विमोहनमाकुलीकरणम्, लुभ गार्ध्ये) । स्मर यावन्न विलोभ्यसे दिवि (कु० ४।२०) । विलोभ्यसे गध्र्यसे, आकृष्यसे । अङ्गनास्तमधिकं व्यलोभयन् (रघु० १६।१०)। प्रलोभितवत्यः। गर्धितवत्यः। क्व नु दृष्टिं विलोभयामि (शा० ६) । विलोभयामि रञ्जयामि। समीपवासेन विलोभितास्ते (भा० वन० १७६।१६) । विलोभिता विमोहिता बुद्धिविभ्रमं गमिताः। दधद्विलुभितं वातैः केसरं वह्निपिङ्गम् (भट्टि० ६।४) । विलुभितं पर्याकुलीकृतम् । विलुभितः सीमन्तः । आकुलीकृत इत्यर्थः। विलुभितानि पदानि । आकुलीभूतानि विषयीभूतानि (का० ७।२।५४) ।

—लोक् (लोकृ दर्शने) । वृतिं तत्र प्रकुर्वीत यामुष्ट्रो न विलोकयेत् (मनु० ८।२३९) । अपरपार्श्वं न विलोकयेदित्यर्थः । न विलोकयन् (गो० गृ० १।१।१४) । इतस्ततो नान्यदवलोकयन्नित्यर्थः । विविधं लोकनं विलोकनम्। विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्यति (कु० ५।७०) ।

—वच् (वच परिभाषणे) । नाहं वेदान् विनिन्दामि न विविक्ष्यामि कर्हि

चित् (भा० शां० २६८।१२)। विवक्ष्यामि विषमं वक्ष्यामि। किं नो अस्य द्रविणं कद्ध रत्नं वि नो वोचः (ऋ० ४।५।१२)। व्यवोचः=व्याख्यः=व्याचष्ठाः=व्याकरोः। अस्ति स्विन्नु वीर्यं…न स्विदस्ति तदतुथा वि वोचः (ऋ० ६।१८।३)। उक्तोऽर्थः। तेषां (प्रश्नानां) नैकंचनाशकं विवक्तुम् (छां० उ० ५।३।५)। विवक्तुं विवरीतुम् प्रतिवक्तुम्। सा होवाच नमस्तेऽस्तु याज्ञवल्क्य यो म एतं व्यवोचः (श० ब्रा० १४।६।८।५)। उक्तोऽर्थः। रुदन्ह मृत्युर्व्युवाच प्रश्नम् (आप० ध० १।११।३२।२४)। व्युवाच विविच्योवाच। तं होवाच नैतदब्राह्मणो विवक्तुमर्हति (छां० उ० ४।४।५)। विवक्तुं विस्पष्टं वक्तुम्। वि तोके अप्सु तनये च सूरेऽवोचन्त चर्षणयो विवाचः (ऋ० ६।३१।१)। व्यवोचन्त विरुद्धमभाषन्त, व्यवदन्त।

—वद् (वद व्यक्तायां वाचि)। बलेनायं हतो दैत्यो बालेनाक्लिष्टकर्मणा। विवदन्त्यशरीरिण्यो वाचः सुरसमीरिताः (हरि० २।१४।७)॥ विवदन्ति विशेषेण वदन्ति निर्ब्रुवन्तीत्यर्थः। विमत्यर्थाभावात्तङ् न। तद्धैतच्छाण्डिल्यः साप्तरथवाहनिश्च। आचार्यान्तेवासिनौ व्यूदाते रूपमेवास्यै तदिति ह स्माह शाण्डिल्यो लोमानीति साप्तरथवाहनिः (श० ब्रा० १०।१।४।१०)। व्यूदाते विप्रलेपतुः, विवादं चक्राते। न च तान्विवदेद् धीमानाक्रुष्टश्चापि तैः सदा (मार्क० पु० ३४।६३)। न विवदेत् न विवदेत न वाक्कलहं कुर्यात्। यस्त्वे हवं विवदत् सजातो यश्च निष्ट्यः (अथर्व० ३।३।६)। विवदत् विरुन्धीत, प्रतिवदेत्। साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम्। विवादयेत्सद्य एव…(याज्ञ० २।१२)॥ विवादयेत् उत्तरं दापयेत्। विवदन् वाऽथवा तूष्णीं व्योम्नीवापरिशङ्कितः (भा० उ० १३३।११)। विवदन् बहु वदन्। एवं विवदतोस्तत्र कृष्णनारदयोः (हरि० २।१२२।४५)। विवदतोः संभाषमाणयोः। हृष्टो विवदमानश्च कोकिलो मामवाह्वयत् (रा० ३।७६।१०)। विवदमानो व्याहरमाणः। विरुद्धार्थविपर्यासकृन्न। तदुभयं व्युदितम् (शां० ब्रा० १६।२)। व्युदितं विवादास्पदम्।

—वन् (वन षण संभक्तौ)। अन्नमेव विवननमन्नं संवननं स्मृतम् (लौ० गृ० ३६।१)। विवननं विभजनम्। संवननं सह भुज्यमानं संश्लेषणमिति देवपालः।

—वल् (वल वल्ल संवरणे संचरणे च)। स्विद्यति कूणति वेल्लति विवलति निमिषति विलोकयति तिर्यक् (का० प्र०)। विवलति पार्श्वतो विनिवर्तते।

—वल्ग् (वल्ग गतौ)। कृतभुजध्वनि विवल्गतोः (कि० १८।११)। सून्दमुत्प्लवमानयोरित्याह।

—वस् (वस निवासे, वस आच्छादने)। ब्रह्मचर्यं भवति विवत्स्यामि (छां० उ० ४।४।१)। वि वत्स्यामि वत्स्यामि। विशब्दो नार्थे विशेषं करोति। वस ब्रह्मचर्यं श्वेतकेतवित्यत्र केवलस्य वसेः प्रयोगदर्शनात्। मनोरमे न व्यवसिष्ट वस्त्रे (भट्टि० ३।२०)। व्यवसिष्ट=आच्छादयत्। शश्वत्पुरोषा व्युवास देवी (ऋ० १।११३।१३)। व्युवास विबभौ व्युष्टा। छन्दसि वसेर्व्युच्छतेरर्थे बहुलः प्रयोगः। प्रथमा ह व्युवास सा धेनुरभवद्यमे (अथर्व० ३।१०।१)। सा रात्रिस्तमोव्युदसनं कृतवती। विपूर्वो वसिर्वर्जने वर्तत इति सायणः। यमन्तो वि वसन्तु विप्राः (अथर्व० ४।१।५)। स्वस्वव्यापारेषु विविधं वर्तन्ताम् इत्यर्थः। अथवा विवसतिः परिचरणकर्मा। विवसन्तु हविर्भिर्देवान् परिचरन्तु इत्यर्थं इति च सः। पुरा व्यवात्सीद् यदनन्तवीर्यः। (भा० पु० ३।२।१६)। अध्यवात्सीदित्यर्थः। अपूर्वश्चायमन्यत्र सुधाऽन्वेष्योऽत्रार्थे प्रयोगः। कौटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान्धार्मिको नपः। प्रवासयेद् दण्डयित्वा ब्राह्मणं तु विवासयेत् (मनु० ८।१२३)॥ विवासयेत् राष्ट्रान्निःसारयेत् (कुल्लूकः)। ब्राह्मणं नग्नं कुर्यात् (गोविन्दराजः)। ब्राह्मणस्य विवासस्त्वं वासोऽपहरणं गृहभङ्गो वेति मेधातिथिः। उत्कोचजीविनो द्रव्यहीनान्कृत्वा विवासयेत् (याज्ञ० १।३३८)। स्वराष्ट्रात् प्रवासयेदिति मिताक्षरा। आरात्रिविवासमाचष्टे रात्रिं विवासयति (हेतुमति च ३।१।२६ सूत्रे वृत्तौ)। विवासोऽतिक्रमणम्। वाससी इव विवसानौ ये चरावः (तै० सं० १।५।१०।१)। विवसानौ विपरिदधतौ। इच्छन्नितो विवसितुं गणयन् स्वमासान् (भा० पु० ३।३१।१७)। अस्त्रहेतोर्महाबाहुरमितात्मा विवासितः (भा० वन० ८६।२)। विवासितः प्रवासितः। रामस्य गात्रमसि दुर्वहगर्भखिन्नसीताविवासनपटोः करुणा कुतस्ते (उत्तर० २।१०)। विवासनं स्वदेशान्निर्वासनम्। तत्रैकां रजनीं व्युष्य प्रभाते राम गम्यताम् (रा० ३।११।४०)। व्युष्य उषित्वा। नार्थो विना। द्विष्टव्युषितमस्वादु पूति चान्नं विवर्जयेत् (सुश्रुत० सू० ४६।५१८)। व्युषितं पर्युषितम्, कृतरात्रिपरिवासम्। प्रियैर्विवासो बहुशः संवासश्चाप्रियैः सह (भा० आश्व० १६।३४)। विवासो विप्रयोगः, दूरेऽवस्थानम्।

—वह् (वह प्रापणे, प्रापणमिह गतिः)। हैरण्यास्तत्र वाहिन्यः स्वैरिण्यो व्यवहन्पुरा (भा० द्रोण० ५६।६)। व्यवहन् प्रावहन्। लोहितापगा। गजाश्वनरदेहान्सा व्युवाह पतितान्बहून् (भा० कर्ण० ४६।८२)। व्युवाह प्रवाहयामास। अतोऽदत्तां च पित्रा त्वां भद्रे न विवहाम्यहम् (भा० आदि० ८१।२६)। विवहामि उद्वहामि, परिणयामि, उपयच्छे। विवहावहै (आश्व० गृ० १।७।६)। विवाहसम्बन्धं करवावहै। महामना भवेद् धर्मे विवहेच्च महाकुले (भा० शां० १२३।२१)। विवहेत्

विवाहं कुर्यात्। मघासु हन्यन्ते गावः फल्गुनीषु व्युह्यते (अथर्व० १४। १।१३)। इतरेतरयाजका इतरेतराध्यापका मिथो विवहमानाः (आप० ध० १।२६।८)। मिथो विवहमाना मिथो विवाहसम्बन्धं कुर्वाणाः। व्यूढे देवासुरे-युद्धे कृत्वा देवसहायताम् (भा० द्रोण० ६३।५)। व्यूढे निर्व्यूढे परिसमाप्ते। व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता (गीता १।३)। व्यूढां रचिताम्। कृतविन्यासविशेषाम्। सेनामिति विशेष्यम्। विवाहः। स कुमार्याः पितृगृह इत्यथर्ववेदे चतुर्दशकाण्डभूमिकायां सायणः।

—वा (वा गतिगन्धनयोः)। वि वात वाहि यद्रपः (ऋ० १०।१३७।३, अथर्व० ४।१३।३)। विवाहि विगमय। वायुर्विवाति हृदयानि हरन्नराणाम् (ऋतु० ६।२२)। विवाति विविधं वाति, दिक्षु विदिक्षु च वाति। व्यवात्ते ज्योतिः (अथर्व० ८।१।२१)। व्यवात् व्यौच्छत्। येन स्म युज्यते वायुस्ततो लोकान् विवात्यसौ (भा० शां० ३४४।१०)।

—विच् (विचिर् पृथग्भावे। वायुर्वो विविनक्तु (वा० सं० १।१६)। युष्मान्सूक्ष्मकणेभ्यः पृथक् करोत्वित्याह। (मरुतः) प्रवेपयन्ति पर्वतान् विविञ्चन्ति वनस्पतीन् (ऋ० १।३९।५)। विविञ्चन्ति पृथक् कुर्वन्ति। यूयं (तण्डुलाः) विच्यध्वं यज्ञियासस्तुषैः। (अथर्व० ११।१।१२)। तुषैः पृथग्भवतेत्यर्थः। श्रेयश्च प्रेयश्च विविनक्ति धीरः (कठ० उ० २।२)। विचिन्त्य तयोर्भेदं करोति। विविनच्मि दिवः सुरान् (भट्टि० ६।३६)। पृथक् करोमि। प्रच्यावयामि। दिविषदो दिव उत्सारयामीत्याह। कर्मणां च विवेकार्थं धर्माधर्मौ व्यवेचयत् (मनु० १।२६)। कर्मणां विभागाय धर्माधर्मौ पृथक्त्वेनाभ्यधादित्याह। स्वल्पेन खलु कालेन विविक्तं पृथिवीतलम्। भविष्यति नरेन्द्रौघैः शतशो विनिपातितैः (हरि० २।४१।६२)॥ विविक्तं शून्यं विरहितं विधुरम्। विविक्तमर्थैरभिगम्य मद्गृहम् (अवदा० अविघ्न्य० जा० ७)। उक्तोऽर्थः। विविक्तदेशसेवित्वमरतिर्जनसंसदि (गीता १३।१०)। विविक्तो विजनः। यथा विविक्तं यद्वस्त्रं गृह्णीमो युक्तिसंभवात् (भा० पु० ११। २२।६)। विविक्तम् अनितरसाधारणम्, इतरैरसामान्यम्, असाधारणम् विलक्षणम्। वेदवित्सु विविक्तेषु प्रेत्य स्वर्गं समश्नुते (मनु० ११।६)। धनानि प्रतिपादयेदित्यनुषङ्गः। विविक्तेषु पुत्रकलत्राद्यवसक्तेषु (कुल्लूकः)। विविक्तौ पूतविजनावित्यमरः। ज्ञातोऽयं जलधर तावको विवेकः (भामिनी० १।९६)। विवेकः सदसद्विभेदकरी बुद्धिः। विवेकभ्रष्टानां भवति विनिपातः शतमुखः (भर्तृ० २।१०)। रे खल तव खलु चरितं विदुषामग्रे विविच्य वक्ष्यामि (भामिनी० (१।१०८)। विविच्य सम्प्रधार्य। अथ स महात्मा

तं राजानं दिष्टिकृतकापथाद् विवेच्य (अवदा० जा० २३)। विवेच्य पृथक् कृत्वा। अहमप्येवमेवैतच्चिकीर्षामि यथा युक्ताम्। विवेक्तुं नाहमिच्छामि त्वाकारं विदुरं प्रति (भा० आदि० २०१।१)॥ विवेक्तुं व्यक्तीकर्तुम्।

—विज् (ओविजी भयचलनयोः)। सकृद् विविग्नानपि हि प्रयुक्तं माधुर्य-मीष्टे हरिणान् ग्रहीतुम् (रघु० १८।१३)। विविग्नः संविग्न उद्विग्नः सन्त्रस्तः।

—वी (वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु)। पथि ग्रामविवीतान्ते क्षेत्रे दोषो न जायते (याज्ञ० २।१६२)। अकृष्यायां भूमौ पशुभ्यो विवीतानि प्रयच्छेत् (कौ० अ० २।२)। विवीतं गोचरो गव्यं गवादनी।

—वृ (वृञ् आवरणे)। कामं तु मे मारुतरतत्र वासः प्रक्रीडितायाः विवृणोतु देव (भा० आदि० ७१।४१)। विवृणोतु अपसारयतु। विवृणोतिर्मुख्यया वृत्त्याऽऽ-वरणापसारणे वर्तते गौण्या त्वपसारणमात्रे। ज्योतिषा वि तमो ववर्थ। (ऋ० १।६१।२२)। विवर्थ विववरिथ प्रकाशयामासिथ। दूरं चकर्थेत्याह। वि नो राये दुरो वृधि (ऋ० ६।४५।३)। विवृधि = विवृणु, उद्घाटय। नाकारणं विवृणुया-त्खड्गम् (व० सं० ५०।६)। निष्कोषं कुर्यात्। नग्नं कुर्यादिति तु पदार्थः। अभि-प्रायस्य पापत्वान्नैवं तु विवृणोम्यहम् (भा० आदि० १४२।१६)। विवृणोमि व्यक्तयामि। वसनस्येव च्छिद्राणि साधूनां विवृणोति यः (भा० वन० )। तस्यैष आत्मा विवृणुते तनूं स्वाम् (कठ० उ० १।२।२३)। उक्तोऽर्थः। श्रवणकटु नृपाणामेकवाक्यं विवव्रुः (रघु० ६।८५)। व्यक्तयामासुः, उदाजह्रुरित्यर्थः। यस्मै मुनिर्ब्रह्म परं विवव्रे (महावीर० २।४३)। विवव्रे व्याचचक्षे, उपदिदेश। अङ्गुल्या मध्ये विवृणोति (का० श्रौ० ७।७।१८)। विवरं करोतीत्यर्थः। दिशि दिशि निरपेक्षस्तावकीनं विवृण्वन् (परिमलम्) (भामिनी० १।५)। विवृण्वन् विस्तारयन् प्रथयन् प्रसारयन्। स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते (कु० ४।२६)। विवृतम् उद्घाटितम्। ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः (मेघ० ४३)। विवृतमनावृतं जघनं सक्थि यस्यास्ताम्। न विवृतो मदनो न च संवृतः (शा० २।१२)। विवृतो व्यक्तीकृतः। विपन्नास्तेऽद्य वसुधां विवृतामधिशेरते (भा० स्त्री० १६। ३१)। विवृताऽनावृताऽव्यवहिता। तथा तैरवकीर्णस्य दिव्यैरस्त्रैः समन्ततः। न तस्य द्व्यङ्गुलमपि विवृतं सम्प्रदृश्यते (भा० वि० ६३।६७)॥ विवृत-मसंवृतमनाकीर्णम्। अविवृतश्चरामि। (भा० पु० ५।१२।१५)। प्रच्छन्नोऽवरुद्ध इत्यर्थः। एकाग्रः स्यादविवृतो नित्यं विवरदर्शकः (भा० आदि० १४०।१८)। अविवृतो गुप्ताङ्गः। विवृतस्नानः (पा० गृ० २।७)। सूर्यस्य प्रकाशं स्नानं

यस्य सः । न चैनां विवृतां प्रेक्षेत (का० सं० विमान० शिष्य० ८) । विवृतां नग्नाम् । विवृत इव निरुक्तः (भा० पु० १२।११।२४)। विवृतो व्याख्यातो व्यक्ततां नीतः । न हि शक्नोमि विवृते प्रत्याख्यातुं नराधिपम् (भा० वि० १३।२०) । विवृते प्रकाशे, सर्वजनसमक्षम् । विवृत्य नयने क्रुद्ध इदं वचनमब्रवीत् (भा० आदि० १६३।६) । विवृत्य विस्फार्य ।

—वृज् (वृजि वृजी वर्जने) । अतो जन्तुलूताव्याप्तो विवर्ज्यते (राज० ४।५२४) । विवर्ज्यते परिह्रियते । यद्वित्तं त्वयास्माकं विवर्जितम् (मार्क० १३३।२३) । विवर्जितम् समर्पितम् । प्रधानोऽप्यप्रधानः स्याद्यदि सेवाविवर्जितः (पञ्चत० १।३४) । विवर्जितः=विहीनः शून्यः ।

—वृत् (वृतु वर्तने) । अहश्च कृष्णमहरर्जुनं च वि वर्तेते रजसी वेद्याभिः (ऋ० ६।६।१)। रजसी उभौ लोकौ पृथिव्यन्तरिक्षे परितः पर्यायेण परिवर्तेते । विपर्ययेण वर्तेते इति दुर्गः । विवर्तेते अहनी (=रात्र्यहनी अहोरात्रौ) चक्रियेव (ऋ० १।१८५।१) । उक्तोऽर्थः । सनेमि चक्रमजरं वि वावृते (ऋ० १।१६४। १४) । अनन्तरोदीरित एवार्थः । व्योम्नि मेघा विवर्तन्ते परुषा गर्दभारुणाः (रा० ३।२४।४)। विवर्तन्ते इतस्ततो भ्रमन्ति । नाभेरधस्ताद् गुल्मोऽयमव्याविद्धं विवर्तते (का० सं० खिल० रक्त० श्लो० ५८) । विवर्तते लुठति । यत्रासौ केशान्तो विवर्तते (तै० उ० १।६।१) । विवर्तते विभक्तो भवति । अक्षयाणि (प्रहरणानि) क्लिन्तानि विवर्तन्ते स्म मातले (भा० उ० ६८।१६) । विवर्तन्ते पुनः पुनः क्षिप्तान्यपि प्रहर्तुर्हस्तमायान्ति । विवर्तन्ते विनिवर्तन्ते । संवत्सराद्धि सर्वाणि भूतानि विवर्तन्ते (श० ब्रा० ८।४।२।२५) । विवर्तन्ते विनिश्चरन्ति जायन्ते । वि देवा जरसावृतन् (अथर्व० ३।३१।१) । व्यवृतन् व्ययूयुजन् । त्वयाभिगुप्तं कौन्तेयं न विवर्तेयुरन्तिकम् (भा० वन० ) । न विवर्तेयुरन्तिकम् =नोपैतुमुत्सहेरन् । जीवितं च शरीरेण तेनैव सह जायते । उभे सह विवर्तेते उभे सह विनश्यतः (भा० शां० १७४।२२) ॥ विवर्तेते संसारकाले विविधेन रूपेण वर्तेते । येनेशितं कर्म विवर्तते ह (श्वेताश्व० उ० ६।२) । विवर्तते वैविध्यं भजते, नानात्वमश्नुते । विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः (वा० प० १।१) । अतस्ततः प्रथत इत्याह । चिन्तयन्नेव मयि महार्णवोन्मग्नमार्तण्डतुरङ्गमश्वासरयावधूतेव व्यवर्तत त्रियामा (दशकु० उपहारवर्मचरिते) । व्यवर्तत=अत्यवर्तत, व्यरमत् अस्तमापत् । तस्मिंश्चित्रियस्याश्वत्थस्य तिस्रः समिध आर्द्राः सपलाशाः प्रादेशमात्र्यः स्तिमिगवत्यः (=फलवतीः) विवर्तयति (आप० श्रौ० ५।१।५।१०) । विवर्तयति विलोडयति । वि चर्मणीव धिषणे अवर्तयत् (ऋ० ६।८।३) । व्यवर्तयत् । अन्यत्रोप्र

विवर्तय (हेतिम्) (अथर्व० ११।२।२१)। विवर्तय गमय क्षिप। यज्ञ इन्द्रमवर्धयद् यद् भूमिं व्यवर्तयत् (अथर्व० २०।२७।५)। विवृत्तामकरोत्। वृष्ट्युदकेनोच्छूनामकरोदित्यर्थः। यत्र स्कम्भः प्रजनयन्पुराणं व्यवर्तयत् (अथर्व० १०।७।२६)। व्यवर्तयत् आविरभावयत्। संवर्तयन्तो वि च वर्तयन्नहा (ऋ० ५।४८।३)। संवर्तयन्तो नाशयन्तः (प्राणिनः)। विवर्तयन् अहा अहानि परिवर्तयन्त इत्यर्थः। यद्धि सन्धिं विवर्तयति तन्निर्भुजस्य रूपम्। अथ यच्छुद्धे अक्षरे अभिव्याहरति तत् प्रतृण्णस्य (ऐ० आ० ३।१।३)। विवर्तयति कल्पयति। विवर्तमाने त्वादित्ये तत्रास्तशिखिरं प्रति (भा० द्रोण० ६६।१)। विवर्तमाने परावर्तमाने निवर्तमाने। विवर्तमानं बहुशो रुधिरौघपरिप्लुतम् (भा० शल्य० ६५।५)। विवर्तमानम् विचेष्टमानं लुठन्तम्। कालकण्ठमुखकन्दरविवर्तमानमिव भूतजातम् प्रवेपते (उत्तर० ६)। वेदनया विह्वलन्तमित्याह। विवर्तमानं समरे कृतास्त्रम् (भा० उ० ४८।२६)। विविधैर्मण्डलैर्वर्तमानं चरन्तम् इत्यर्थः। मनस्विगर्हिते विवर्तमान नरदेव वर्त्मनि (कि० १।३२)। शत्रुकृतां दुर्दशामनुभवन्तम् इति तात्पर्यार्थः। विरुद्धमात्मनः प्रतिकूलं वर्तमानमिति तु पदार्थः। आसीद् विवृत्तवदना च विमोचयन्ती (शा० २।१२)। साचिकृतमुखीत्याह। विवृत्तपाणिर्विहितोत्तरार्थं विभीषणोऽभाषत यातुधानान् (भट्टि० १२।२१)। विवृत्तपाणिस्तदभिमुखीकृतदक्षिणकरः। सीदमानो विवृत्ताङ्गोऽचेष्टमानो गतः क्षयम् (रा० २।६३।४६)। विवृत्ताङ्गः परावृत्तनेत्रः। कल्पक्षोभविवृत्तानि जगन्ति (यो० वा० )। संवाता मुहुरनिलेन नीयमाने दिव्यस्त्रीजघनवरांशुके विवृत्तिम् (कि० ७।१४)। विवृत्तिरपसारः। दृष्टो विवृत्य बहुशोऽप्यनया सतृष्णम् (शा० ३।६)। मुखं तदभिमुखीकृत्येति तात्पर्यार्थः। पृष्ठतः कृत्येति तु पदार्थः। मनोऽस्य जह्रुः शफरीविवृत्तयः (कि० ४।३)। शफरीविवृत्तयः= मत्सीनां विविधाश्चेष्टाः। विराजमतपत् स्वेन तेजसैषां विवृत्तये (भा० पु० ३।६।१०)। विवृत्तये स्फातये। संवर्तप्रकटविवर्तसप्तपाथोनाथोर्मिव्यतिकरविभ्रमप्रचण्डः (महावी० ६।२६)। विवर्त इति लुठनमाह। संवर्त इति च प्रलयम्। शब्दब्रह्मणस्तादृशं विवर्तमितिहासं रामायणं प्रणिनाय (उत्तर० २)। विवर्तः परिवर्तः परिवृत्तिः। एको रसः करुण एव निमित्तभेदाद्भिन्नः पृथक् पृथगिवाश्रयते विवर्तान् (उत्तर० ३।४७)। विवर्तः परिणामः। अकाण्डशुष्काशनिपातरौद्रः क एष धातुर्विषमो विवर्तः (महावीर० ५।५७)। निक्रमणं निषदनं विवर्तनं यच्च पड्वीशमर्वतः (ऋ० १।१६२।१४)। विवर्तनं लुठनम्। शय्याप्रान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः (शा० ६।५)। विवर्तनैः पार्श्वपरिवर्तनैः। कृतरूपविवर्तना (शिष्या) (कथा० १३।६४)।

विवर्तनं परिवर्तः, विपरिणामः। पुनरकाण्डविवर्तनदारुणः (उत्तर० ४।१५)। उक्तोऽर्थः। चित्रतन्तुविरचितः संवर्तनविवर्तनसहिष्णुः (ध्वन्यालोकलोचने १।१ )। संवर्तनं विकासनं विवर्तनं संकोचनम् इति लोचनम्। तदिदं विपरीतार्थाख्यानं प्रमादजम्। परागः। वात्याभिर्वियति विवर्तितः (कि० ५। ३९)। विवर्तितः परिमण्डलितः। विवर्तिताञ्जननेत्र (कु० ५।५१)। विवर्तितं विचालितं (नेत्रम्)। मेरुकूटान्तेभ्यो निपतन्ती विवर्तिता (गङ्गा) (मार्क० पु० ६५।३)। विवर्तिता विवृत्ता। स्वार्थे णिच्। चक्रवत्स्यन्ना। विवर्तितभ्रूरियमद्य शिक्षते (शा० १।२३)। विवर्तितभ्रूरुदञ्चितभ्रूः। विवर्त्यमानोऽपि नदीरयेण (अवदा० रुरु० ६)। विवर्त्यमानः प्रतीपमुह्यमानः।

—वृध् (वृधु वृद्धौ)। समागमेन पुत्रस्य सावित्र्या दर्शनेन च। चक्षुषश्चात्मनो लाभात् त्रिभिर्दिष्ट्या विवर्धसे (भा० वन० २९८।२३)॥ स्पष्टोऽर्थः।

—वृष् (वृषु सेचने)। पर्जन्य इव धर्मान्ते वृष्ट्या साद्रिद्रुमां महीम्। आचार्यपुत्रस्तां सेनां बाणवृष्ट्या व्यवीवृषत् (भा० कर्ण० २०।३२)॥ व्यवीवृषत्=अभ्यवीवृषत्। बाणवर्षेणाभिषिक्तवान् इत्यर्थः।

—वृह् (वृहू उद्यमने)। यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया विवृहामि ते (अथर्व० ३।३३।१)। विवृहामि प्रवृहामि उद्यच्छामि, उद्धरामि, पृथक्करोमि। विश्वा इदर्यो अभिदिप्स्वो मृधो बृहस्पतिर्वि ववर्हा रथाँ इव (ऋ० १।२३।१३)। विववर्ह=उज्जहार, विददार, विसंहिताश्चकार। मेषा वि वर्हि मा युगं वि शारि (ऋ० ३।५३।१७)। मेषा=मा ईषा। मा विवर्हि मा स्म भङ्गमापत्। विष्वञ्चमेवास्मात्पाप्मानं विवृहतः (तै० ब्रा० ३। ८।४।१)। विवृहतः पृथक्कुरुतः। यथेषीकां मुञ्जाद् विवृहेदेवं सर्वस्मात्पाप्मनो व्यवृहन् (श० ब्रा० ४।३।३।१६)। व्यवृहन् अपोदहरन्, पृथगकुर्वन्। सोमा रुद्रा विवृहतं मे विषूचीम् (अथर्व० ७।४३।१)। विवृहतं विनाशयतम्। अपबाधेथाम्। यद्वै यज्ञस्य मिथ्या क्रियते व्यस्य वृहन्ति (श० ब्रा० ११।९।३।४)। विवृहन्ति अपच्छिन्दन्ति। तत्कर्म विवृह्येत सा परिचक्षा (श० ब्रा० ११।३।५। १४)। विवृह्येत खण्डशः क्रियेत। परिचक्षाऽनादरः। परिवर्जने। सर्वेणैवैतद् भिषज्यति यत्किं च विवृढं यज्ञस्य (श० ब्रा० १४।३।२।२)। विवृढं विपर्यस्तमाकुलम्। यद् विवृढं तत् सन्दधाति (श० ब्रा० १।७।४।२२)। उक्तचर एवार्थः।

—वे (वेञ् तन्तुसन्ताने)। (आसन्दी) मुञ्जविवयना भवति (श० ब्रा० १२।८।३।६)। मुञ्जविवयना मुञ्जविवाना मुञ्जैरुता। उरौ पथि व्युते तस्थुरन्तः (ऋ० ३।५४।९)। व्युते विविक्ते।

—वेन् (वेन कान्तिकर्मा छान्दसः)। अश्विना वेह गच्छतं नासत्या मा विवेनतम् (ऋ० ५।७८।१)। कान्तिरिच्छा। विशब्दस्तदभावमाह। नञर्थो विः। यथा विकाङ्क्षेत्यत्र।

—वेष्ट् (वेष्ट वेष्टने)। विवेष्टमानोऽवर्तिष्ट शयनीयतलेऽन्वहम्। (राज० ८।२२५९)। विवेष्टमानो विचेष्टमानः।

—व्यध् (व्यध ताडने)। मा नो विदन् वि व्याधिनो मो अभिव्याधिनो विदन् (अथर्व० १।१९।१) विव्याधिनो दूराद्ये विध्यन्ति। विशब्दो विप्रकर्षमाह।

—व्रश्च् (ओ व्रश्चू छेदने)। वि वृश्चद् वज्रेण वृत्रमिन्द्रः (ऋ० १।६१।१०)। विवृश्चत् व्यवृश्चत्=विविधमच्छिनत्। शकलान्यकरोत्। अदन्ति त्वा पिपीलिका वि वृश्चन्ति मयूर्यः (अथर्व० ७।५६।७)। विवृश्चन्ति चञ्चुभिः प्रतुदन्ति वितुदन्ति विदारयन्ति।

—शद् (शद्लृ शातने)। भगस्य नयने क्रुद्धः प्रहारेण व्यशातयत् (भा० अनु० १६०।१८)। व्यशातयत्। अपातयत्, अभनक्, उदहरत्। पुरोडाशं भक्षयतो दशनान्वै व्यशातयत् (भा० द्रोण० २०२।५६)। उक्तोऽर्थः।

—शंस् (शंसु स्तुतौ)। त्रिरर्तहि निविदा सूक्तं विशंसेत् (ऐ० ब्रा० ३।१९)। विशब्दो नानात्वमाचष्टे। विशंसेत् उच्चारयेत्। मा चिदन्यद् विशंसत (ऋ० ८।१।१) विशंसत स्तुत।

—शस् (शसु हिंसायाम्)। अनुमन्ता विशसिता निहन्ता क्रयविक्रयी (मनु० ५।५१)। विशसिताऽङ्गानि यः कर्तर्यादिना पृथक् करोति। तस्यास्त्वं दुहितुस्तथा विशसनं किं दारुणेऽमृष्यथाः (उत्तर० ४।५)। विशसनं कदनं निबर्हणम्। शोणितोदां रथावर्तां कृत्वा विशसने नदीम् (भा० द्रोण० १६।४३)। विशसनं सङ्गरः, युद्धभूः। धृषिशसी वैयात्ये (पा० ७।२।१९)। वैयात्ये धाष्टर्येऽविनये विशस्त इति भवति, अन्यत्र विशसितः।

—शास् (शासु अनुशिष्टौ)। आशिषः प्रशिषश्च संशिषो विशिषश्च याः (अथर्व० ११।१०।२७)। विशिषो विविधानि शासनानीति सायणः। अथ पशुं विशास्ति (श० ब्रा० ३।८।३।३)। विशास्ति विशसति।

—शिष् (शिष्लृ विशेषणे)। पुनरकाण्डविवर्तनदारुणो विधिरहो विशिनष्टि मनोरुजम् (मालती० ४।७)। विशिनष्टि वर्धयति बृंहयति प्रकर्षति उपचिनोति। विशेषको वा विशिशेष यस्याः श्रियं त्रिलोकीतिलकः स एव (शिशु० ३।६३)॥ विशिशेष=अतिशिष्ये। तस्य दण्डवतो दण्डः स्वदेहान्न व्यशिष्यत (रघु० १७।६२)। न व्यशिष्यत=नाभिद्यत। दण्डः सैन्यम्।

मौनात्सत्यं विशिष्यते (मनु० २।८३)। वरतरं भवतीत्यर्थः। सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते (मनु० ४।२३३)। वरिष्ठं भवतीत्यर्थः।

—शिष् (शिष असर्वोपयोगे)। हृदयं विघट्टितं चेत् सङ्गो विरहं विशेषयति (शृङ्गार० ६५)। विपूर्वोऽयमतिशये वर्तते इति भानुजिः। विशेषयति =अतिशेतेऽतिक्रामति। अविषह्यतरो दुःखतरो भवतीति तात्पर्यार्थः। अस्य काव्यस्य कवयो न समर्था विशेषणे (भा० आदि० १।७३)। विशेषणेऽतिशायने। यतमानोपि यं शक्रो न विशेषयति स्म ह (भा० आश्व० ५।१६)। उक्तोऽर्थः। विशेषयन्तावन्योन्यं मायाभिरतिमायिनौ (भा० द्रोण० १७४। २६)। विशेषयन्तौ=अतिशयानौ। साधु विशेषितं खलु रूपं स्वरेण (प्रतिमा४ ५)। विशेषितमतिशयितम्।

—शी (शीङ् स्वप्ने)। पतिताः पात्यमानाश्च क्षितौ क्षीणा विशेरते (भा० कर्ण० ७६।२७)। विशेरते शेरते। विरिह विशेषकृन्न। विकीर्णाः शेरत इति वार्थः।

—शुध् (शुध शौचे)। तेन मायासहस्रं तच्छम्बरस्याशुगामिना। बालस्य रक्षता देहमेकैकं च विशोधितम् (वि० पु० १।१६।२०)। विशोधितं परिमार्जितमुत्सादितम्। विशुद्धमुग्धः कुलकन्यकाजनः (मालती० ७।१)। विशुद्धोऽनघो निष्पाप ऋजुः। तदङ्गसंसर्गमवाप्य कल्पते ध्रुवं चिताभस्मरजो विशुद्धये (कु० ५।७६)। विशुद्धये पूतये निष्कल्मषत्वाय। उपविश्यासने युञ्ज्याद् योगमात्मविशुद्धये (गीता० ६।१२)। उक्तोऽर्थः। हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा (रघु० १।१०)। विशुद्धिर्निर्दोषस्वरूपम्। इयं विशुद्धरुदिता प्रमाप्याकामतो द्विजम् (मनु० ११।८६)। विशुद्धिः प्रायश्चित्तम्। घृतप्राशो विशोधनम् (मनु० ११।४३)। विशोधनं पापापनोदनम्।

—शुभ् (शुभ दीप्तौ)। क्षतजदिग्धवस्त्रा वै मुक्तकेशा विशोभना (हरि० २।१०५।८३)। विशोभना शोभारहिता। शोभत इत्येवंशीला शोभना। विशब्दो नञर्थकः।

—शॄ (शॄञ् हिंसायाम्)। सर्वेषां मूर्ध्नि वा तिष्ठेत् विशीर्येत वनेऽथवा (हितोप० १।११३)। विशीर्येत म्लानं सदधः पतेत्। स्वयं विशीर्णद्रुमपर्णवृत्तिता (कु० ५।२८)। स्वयमवपतितशुष्कपत्रोपजीविता।

—श्रण् (श्रणु दाने)। विश्राणिते फलीकरणानामाचामस्यापामिति बलिं हरेत् (गो० गृ० १।४।३१)। विश्राणिते दत्ते। क्षीणप्राय इत्यर्थः। कथं नु शक्योऽनुनयो महर्षेर्विश्राणनाच्चान्यपयस्विनीनाम् (रघु० २।५४)। विश्राणनं दानम्। प्रायेण विपूर्वोऽयं धातुः प्रयुज्यत इति दीक्षितः।

—श्रम् (श्रमु तपसि खेदे च)। प्रसीद विश्राम्यतु वीर वज्रम् (कि० ३।६)। विश्राम्यतु विगतश्रममस्तु, विरमतु। इह देवतात्वं प्रति बहु विश्राम्यति भेदः (वाररुच० प्रथमे कल्पे)। विश्राम्यति तिष्ठति। जानामि त्वां परिश्रान्तं ततो विश्रामकाङ्क्षिणम् (भा० वन० १८८।६७)। विश्रामः श्रमाभावः। श्रमः खेदः (शारीरः)। काम कर्णान्तविश्रान्ते विशाले तस्य लोचने (रघु० ४।१३)। कर्णावधि विस्तारमाप्य स्थिते इत्याह। रघुरिव स नरेन्द्रो यज्ञविश्रान्तकोशः (शि० भा०)। विश्रान्तः परिसमाप्तः। मुखं तव विश्रान्तकथं दुनोति माम् (रघु० ८।५५)। विश्रान्तकथं विरतवचनं निवृत्तसंलापम्। स्वकालविरहाद् विश्रान्तपुष्पोद्गमा (विक्रम० ४।६७)। विरतकुसुमविकासा। पितामहः प्रजासर्गे त्वयि विश्रान्तवान्प्रभुः (भा० शां० १५६।७)। विश्रान्तवान् श्रमविनोदं कृतवान्। श्राम्यन्तीमनयद् गेहं विश्राम्यन्तीं तरौ तरौ (बृ० श्लो० सं० ४।११५)। विश्राम्यन्तीं श्रमापनोदं कुर्वतीम्।

—श्रि (श्रिञ् सेवायाम्)। सुप्रायणा अस्मिन्यज्ञे विश्रयन्तामृतावृधो द्वारः (वा० सं २८।५)। विश्रयन्ताम्=विव्रियन्ताम्। व्यचस्वतीरुर्विया विश्रयन्तां पतिभ्यो न जनयः शुम्भमानाः (अथर्व० ५।१२।५)। विश्रयन्तां विवृण्वताम्। या न ऊरु उशती विश्रयाति (ऋ० १०।८५।३७)। विश्रयाति विश्लेषयति। पञ्चमो लकारः।

—श्रु (श्रु श्रवणे)। छिन्द्धि भिन्द्धि प्रधाव त्वं पातयाऽभिसरेति च। व्यश्रूयन्त महाघोराः शब्दास्तत्र समन्ततः (भारते)॥ व्यश्रूयन्त उच्चैरश्रूयन्त। सर्वं विश्रावयामास यथाभूतं महाद्युते (भा० वन० १७३।६६)। उच्चैरुच्चार्य श्रवणयोरगोचरयत्। अब्रवीच्च विशुद्धात्मा सर्वं विश्रावयञ्जगत् (भा० आश्व० ६६।१७)। उक्तोऽर्थः। विश्रूयस्व स्वकर्मणा (भा० उ० १३३।१३)। प्रसिद्धिं गच्छेत्याह। तथैव गत्वा बीभत्सुर्नाम विश्राव्य चात्मनः (भा० वि० ५३।२०)। विश्राव्य उच्चैरुच्चार्य। यद्विश्रुतिः श्रुतिनुतेदमलं पुनाति (भा० पु० १०।८२।३०)। विश्रुतिः कीर्तिः।

—श्लथ् (श्रथ श्लथ हिंसायाम्)। ऐरावतास्फालनविश्लथं यः सङ्घट्टयन्नङ्गदमङ्गदेन (रघु० ६।७३)। विश्लथं शिथिलम्।

—श्लिष् (श्लिष आलिङ्गने)। शरबन्धा विशिश्लिषुः (भट्टि० १४।६७)। विश्लिष्टा बभूवुः। सोपसर्गोऽपि श्लिषिरिहाकर्मकः प्रयुक्तो वैयाकरणेन कविना। तदिदं गत्यर्थाकर्मकश्लिषेतिसूत्रवृत्त्या विरुध्यते। सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य (मेघ० ७)। विश्लेषितस्य वियोजितस्य।

—श्वस् (श्वस प्राणने)। न जानामि केनापि कारणेनापहस्तितसकल-

सखीजनं त्वयि विश्वसिति मे हृदयम् (काद०)। विश्वसिति विस्रम्भते श्रद्धत्ते। विश्वस्ताविधवे समे (अमरः)। अत्र विफलं श्वसिति स्मेति विश्वस्तेति व्युत्पत्तिमाचक्षाणो महेश्वरः साधूत्प्रैक्षिष्ट।

—सञ्ज् (षञ्ज सङ्गे)। तयोर्विषक्तयोः संख्ये पाञ्चाल्यकुरुमुख्ययोः (भा० द्रोण० २०।२३)। विषक्तयोर्द्वन्द्वे समासक्तयोः संश्लिष्टयोः। विषक्ते त्वयि दुर्धर्ष हतः शूरसुतो बलात् (भा० वन० २१।१३)। विषक्तेऽन्यत्र व्यासक्ते। विटपविषक्तजलार्द्रवल्कलेषु (शा० १।३२)। विषक्तानि संश्रितानि अवलम्बमानानि। विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता (उत्तर० ४।३)। विषक्तो जनितः।

—सह् (षह मर्षणे)। सा दुर्वारं कथमपि परित्यागदुःखं विषेहे (रघु० १४।८७)। विषेहे=सेहे। विशब्द इह विशेषकृन्न। तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे (रघु० ४।४९)। सीमायामविषह्यायां स्वयं राजैव धर्मवित्। प्रदिशेद् भूमिम्...(मनु० ८।२६५)॥ अविषह्यायाम् परिच्छेत्तुमशक्यायाम्। किं नाम लोकेषु विषह्यमस्य कृष्णस्य सर्वेषु सदेवकेषु (भा० वन० १२०।१७)। विषह्यम्=असह्यम्। विशब्दो नञर्थे।

—सि (षिञ् बन्धने)। विसिन्वन्ति बध्नन्तीन्द्रियाणीति विषयाः। स्यन्दन्तां कुल्या विषिताः पुरस्तात् (ऋ० ५।८३।८)। विषिता विमुक्ताः। ये ते शुक्रासः क्षां वपन्ति विषितासो अश्वाः (ऋ० ६।६।४)। विषितासः=वियुक्ताः। विषितं ते वस्तिबिलम् (अथर्व० १।३।८)। विषितं विमुक्तं विवृतम्।

—सिव् (षिवु तन्तुसन्ताने)। सीमा मर्यादा। विसीव्यति देशाविति। (नि० १। ।३)। (विषीव्यतीति पाणिनीयाः)। देशौ विगतसन्तानौ करोति। पृथक् करोतीत्यर्थः।

—सृ (सृ गतौ)। चक्रीवदङ्गरुहधूम्ररुचो विसस्रुः (शिशु० ५।८)। विसस्रुर्विस्तारमापुः पप्रथिरे। विभिद्यमाना विससार सारसान् (कि० ८।३१)। रङ्गवद्विसृते जने (भा० शल्य ६२।४)। विसृते व्यपेते। बाणवद् विसृता यान्ति स्वामिकार्यपरा नराः (भा० शां० ११६।१५)। विसृता यान्ति=अपुनरावर्तिनो भवन्तीत्याह। विसार्य निपुणां दृष्टिम् (रा० १।४१।१६)। विसार्य समन्तात् प्रसार्य। विसारो मत्स्यः। व्याधिमत्स्यबलेष्विति वार्त्तिकेन कर्तरि घञ्। विविधं सरतीति विसारः। विसार्यपि मत्स्यो भवति वैसारिणोपि स्वार्थेऽणि। विसर उत्करो भवति। विसारी देवदत्त इति विसारिणो मत्स्ये (पा० ५।४।१६) इति सूत्रे वृत्तौ प्रत्युदाहरणम्। नावध्यक्षः समुद्रसंयाननदीमुखतरप्रचारान् देवसरोविसरोनदीतरांश्च...अवेक्षेत (कौ० अर्थ० २।२८।१)। विशोष्यं सरो विसरः।

—सृज् (सृज विसर्गे)। विसृज सुन्दरि सङ्गमसाध्वसम्। (माल० ४।१३)। विसृज, त्यज, मुञ्च। प्रतिगृह्य वचो विससर्ज मुनिम् (रघु० ८।९१)। विससर्ज प्रेषयामास, प्रस्थापयामास, गमनमनुमेने। विसृजति हिमगर्भैरग्निमिन्दुर्मयूखैः (शा० ३।४)। विसृजति मुञ्चति वमति उद्गिरति। फणवानिवैष विससर्ज चेदिपः (वचो विषम्) (शिशु० १५।६२)। उज्जगार, व्याजहार, उदाजहारेत्याह। कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् (गीता ९।७)। विसृजाम्युत्पादयामि। यद्धि गुप्तावशिष्टं स्यात् तद्वित्तं धर्मकामयोः। संचयान्न विसर्गी स्यात्... (भा० शां० १२०।३५)॥ कोशाद् धनं न दद्यादित्यर्थः। अथात्राङ्गुलीर्विसृजते (श० ब्रा० ३।६।३।२१)। विसृजते विसृजति शिथिली करोति। शनैर्विसृज्यते सन्ध्या नभो नेत्रैरिवावृतम् (रा० १।३४।१६)। विसृज्यतेऽपैति। कर्मकर्तरि प्रयोगः। शुभाशुभान्वितान्भावान् विसृजन्संक्षिपन्नपि (भा० अनु० १४।७२)। विसृजन् उत्पादयन्। प्रलपन्विसृजन् गृह्णन् (गीता० ५।९)। मलं विसृजन् मैत्रं कुर्वन्। आवश्यकमाचरन्। मलशब्दस्तु नात्यन्तमपेक्ष्यते। नवं पयो यत्र घनैर्मया च त्वद्विप्रयोगाश्रु समं विसृष्टम् (रघु० (१३।२६)। विसृष्टम् मुक्तम्। विहृतम्। पित्रा विसृष्टां मदपेक्षया यः श्रियं युवाप्यङ्कगतामभोक्ता। (रघु० १३।६७)। पित्रा विसृष्टां पित्राऽतिसृष्टां दत्ताम्। तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते (मनु० १।११)। तद्विसृष्टः तेनोत्पादितः। विना नार्थः। सृष्ट इत्येवालम्। तं तं विसृष्टवान् व्यासो वरदो धर्मवत्सलः (भा० आश्रम० ३३।२५)। विशब्दो नार्थान्तरकृत्। आभाते एव भातेऽस्मिन्कृच्छ्रात्सर्गे विसर्गता (यो० वा० ६। (२) १४३।३३)। विसर्गता विसर्गभावः। विसर्गः सृष्टिः, विसृष्टिः=विविधा सृष्टिः। नारायणविसर्गः स प्रजास्तस्याप्ययोनिजाः (हरि० १।१।४५)। तथा विसर्गे कौबेरे वारुणे चैव संयमे (भा० सभा० ७८।१९)। विसर्गे दाने। तथापि तच्छक्तिविसर्गः (भा० पु० ६।१७।२३)। विसर्गः पुण्यपापलक्षणं कर्मेति श्रीधरः। भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः (गीता ८।३)। ज्वरोऽविसर्गी बलवान् (चरके चि० ३।१३४)। अविसर्गी नित्यानुषक्तः। तेषां सृष्टिं विसृष्टिं च वैशम्पायन कीर्तय (हरि० १।७।१)। विसृष्टिर्विविधा सृष्टिः। इयं विसृष्टिर्यत आबभूव (ऋ० १०।१२९।७)। उक्तोऽर्थः। विशब्दो नानात्वे। तस्मै विसृज्योत्तरकोसलानां...प्रभुत्वम् (रघु० १८।७)। विसृज्य समर्प्य।

—सृप् (सृप्लृ गतौ)। अथ हंसा विससृपुः सर्वतः प्रमदावने (भा० वन० ५३। २५)। विससृपुः संचेरुः। यः सुबाहुरिति राक्षसोऽपरस्तत्र तत्र विससर्प मायया (रघु० ११।२९)। मनोरागस्तीव्रं विषमिव विसर्पत्यविरतम् (मालती० २।१) विसर्पति संचरति प्रसरति व्याप्नोति। (बाष्पः) विसर्पन् धाराभिर्लुठति धरणीं

जर्जरकर्णः (उत्तर० १।२६)। विसर्पन् अनुष्यन्दमानः । विस्रप्स्यन्ति च ते यशः (भा० पु० ४।१।३१)। अन्तर्णीतण्यर्थः सृपिः । विसृमरतां नेष्यन्तीत्याह । विष-विसर्पो विषसंचारः । विसर्पो विसर्पणशीलाऽनार्द्रा कण्डूः । आर्द्रा सा पामोच्यते । तथा च काश्यपसंहितायां प्रयोगः—न विना रक्तपित्ताभ्यां वैसर्पो जातु जायते (का० सं० खिल० विसर्पचि० श्लो० १६) । विसर्प एव वैसर्पः ।

—सो (षो अन्तकर्मणि)। पूषा ते बिलं विष्यतु (आप० ध० २।२।६।१) । अपावर्तयत्वित्याह । तत् (दाम) ते विष्याम्यायुषे (अथर्व० ६।६३।१) । विष्यामि विमुञ्चामि । स्यतिरुपसृष्टो विमोचने (नि० १।१७) । प्रकृते कर्मन् विष्यति (ग्रन्थिम्) (श० ब्रा० २।६।१।२५) । विष्यति विस्रंसयति, शिथिलयति, मुञ्चति । ईशानो विष्या दृतिम् (अथर्व० ७।१८।१) । विष्या विष्य विवृणु । ग्रन्थिं न विष्य ग्रथितं पुनान ऋजुं च गातुं वृजिनं च सोम (ऋ० ९।९७।१८) । विष्य शिथिलय ।

—स्कम्भ् (स्कम्भु रोधनार्थः स्तम्भनार्थो वा सौत्रः) । विष्कम्भोऽर्गलं न ना (अमरः) । तद् द्विगुणविष्कम्भं खाताद् वप्रं कारयेत् (कौ० अ० २।३।५) । विष्कम्भ आयामः । एषामन्तरविष्कम्भो योजनानि सहस्रशः (भा० भीष्म० ६।६) । विष्कम्भो विस्तारः ।

—स्तन् (स्तन गदी देवशब्दे) । वितस्तनुः खे सुरदुन्दुभिस्वनाः (अवदा० ६।१६) । जगर्जुरित्यर्थः ।

—स्तम्भ् (स्तम्भु धारणार्थः सौत्रः) । आहोस्वित् प्रसवो ममापचरितैर्विष्टम्भितो वीरुधाम् (शा० ५।६) । विष्टम्भितो रुद्धः । विष्टब्धं विद्रुमस्तम्भैर्वैदूर्यफलकोत्तमैः (भा० पु० १०।६९।६) । विष्टब्धं धृतम्, अवलम्बितम् । अत्युच्छ्रिते मन्त्रिणि पार्थिवे च विष्टभ्य पादावुपतिष्टते श्रीः (मुद्रा० ४।१३) । विष्टभ्य समासज्य, दृढं निधाय । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् (गीता १०।४२) । विष्टभ्य व्याप्य, आक्रम्य । स्फिग्देशेनोपविष्टः स दोर्भ्यां विष्टभ्य मेदिनीम् (भा० शल्य० ६१।२४) । विष्टभ्य=अवलम्ब्य । पार्श्वतः करणं प्राज्ञो विष्टम्भित्वा प्रकारयेत् (भा० शां० १४२।६) । विष्टम्भित्वा=विष्टभ्य=निश्चित्य, अवधार्य ।

—स्तॄ (स्तॄञ् आच्छादने)। पटस्य विस्तारः । प्रथने वावशब्दे (३।३।३३)। इत्यत्र वृत्तावुदाहरणम् । तृणविस्तर इति तार्णं शयनीयमाह ।

—स्था (ष्ठा गतिनिवृत्तौ) । विज्ञायते च—ऋषे ऋषेर्वा एता निर्मिता यत्सामिधेन्यः, ता यदसंयुक्ताः स्युः प्रजया पशुभिर्यजमानस्य वितिष्ठेरन् (आप० श्रौ० इष्टिहौत्रकल्पे ११।१०) । वितिष्ठेरन् वियुञ्जीरन् । यस्त

आत्मा पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे (आप० श्रौ०२।३।१०।५)। देवानां विष्ठां विशिष्टां स्थितिमवस्थामनुरुध्य वितिष्ठतेऽवतिष्ठते। महः संवरणाद् व्यस्थात् (वा० सं० १५।६५)। संवरणमरणिकाष्ठम्। ततो व्यस्थात् व्युदस्थात्। निरक्रामत् आविरासीत्। दिवः सदांसि बृहती वितिष्ठसे (नि० ६। २६।२)। वितिष्ठसे विष्टभ्य तिष्ठसीति दुर्गः। य एतावन्तश्च भूयांसश्च दिशो रुद्रा वितस्थिरे (वा० सं० १६।६३)। दिशो व्याप्य स्थिता इत्याह। ततो वि तिष्ठे भुवनानि विश्वा (अथर्व० ४।३०।७)। व्याप्य स्थितोऽस्मीत्यर्थः। प्रेति पशवो वितिष्टन्ते (श० ब्रा० १।४।१।६)। वितिष्ठन्ते प्रतिष्ठन्ते (गोचराय)। वितिष्ठन्तां मातुरस्या उपस्थान्नानारूपाः पशवो जायमानाः (अथर्व० १४।२। २५)। वितिष्ठन्तां प्रवर्तन्ताम्। शोकबुद्धिं तदा चक्रे न चैकत्र व्यतिष्ठत (भा० आदि० १७७।७)। नैकत्र स्थेमानमलभत। अनवस्थितोऽभूदित्यर्थः। यथेयं पृथिवी मही दाधार विष्ठितं जगत् (अथर्व० ६।१७।४)। विष्ठितं स्थावरमचलम्। जगत् चलम्। पशुं नः सोम रक्षसि पुरुत्रा विष्ठितं जगत् (ऋ० १०।२५।६)। अनन्तरोदीरित एवार्थः। सायणस्तु सुरनरतिर्यग्योन्यादिभावेनावस्थितमित्येवं व्याख्यात्। भूतोपहतचित्तेव विष्ठिता विस्मृता स्थिता (रा० २।५८।३४)। विष्ठिता निःस्पन्दा। क्षमायां विष्ठितं जगत् (रा० १। ३३।६)। विष्ठितमवस्थितमाधृतं लम्बमानम्। एकं वर्षसहस्रं तु वामाङ्गुष्ठाग्रविष्ठितः (भा० अनु० १४।६८)। विष्ठितः स्थितः।

—स्पर्ध् (स्पर्ध सङ्घर्षे। सङ्घर्षः पराभिभवेच्छा)। येन विस्पर्धसे नित्यं यदर्थं घटसेऽनिशम् (भा० शां० २।२४)। विस्पर्धसे स्पर्धसे। नेह विरर्थान्तरयति। संघर्षसीत्येवार्थः।

—स्फुर् (स्फुर ईषच्चलने)। नदन्तं विस्फुरन्तं च पशुमारममारयत् (भा० सौप्तिक० ८।१६)। विस्फुरन्तं विचेष्टमानम्। आर्त्नी इमे विष्फुरन्ती अमित्रान् (ऋ० ६।७५।४)। विष्फुरन्ती विष्फुरन्त्यौ विघ्नत्याविति यास्कः (नि० ६।४०)। विस्फुरन्ती यथाकामं मैथुनायोपचक्रमे (रा० ७।८०।१६)। विस्फुरन्ती परिसर्पन्ती चेष्टमाना। किं नाम विस्फुरन्ति शस्त्राणि (उत्तर० ४)। चकासति, उन्मयूखानि भवन्ति। एकोपि विस्फुरितमण्डलचापचक्रं कः सिन्धुराजमभिषेणयितुं समर्थः (वेणी० २।२६)। विस्फुरितमाकृष्टम्। मुखेन विस्फूर्य सुवीरराष्ट्रपं ततोऽब्रवीत्तं द्रुपदात्मजा पुनः (भा० वन० २६८।१)। विस्फूर्य फूत्कारं कृत्वा। विस्फार्य सुमहच्चापम् (भा० द्रोण० १३५।४०)। विस्फार्य वितत्य। विस्फुरोर्णाविस्यात्वविकल्पः।

—स्फूर्ज् (टुओ स्फुर्जा वज्रनिर्घोषे)। अस्त्येवं जडधामता च भवतो

यद् व्योम्नि विस्फूर्जसे (का० प्र० १०।४४४)। क्व च विक्रान्तता याता क्व च विस्फूर्जितं महत् (भा० शल्य० ३१।३३)। **विस्फूर्जितं गर्जितम्, स्तनितम्।** तत्सर्वं सुरलोकदेवसदृशं धर्मस्य विस्फूर्जितम् (भर्तृ० २।१२५)। **विस्फूर्जितम् फलं विपाकः, परिणामः।** त्वद्भ्रूवत्तेर्विस्फूर्जितमिदम् (महिम्नः स्तोत्रे ११)। **उक्तचर एवार्थः।** धाराणां च निपातेन वायोर्विस्फूर्जितेन च (भा० वन० १८६।६)। **विस्फूर्जितेन प्रचण्डेन वेगेन।** विश्वं विध्वंसयन् वीर्यशौर्यविस्फूर्जितभ्रुवा (भा० पु० ४।२४।५७)। **विस्फूर्जिताऽऽकुञ्चिता। अन्यत्र दुर्लभोर्थः।**

**—स्मि (ष्मिङ् ईषद्धसने)।** उभयोर्न तथा लोकः प्रावीण्येन विसिष्मिये (रघु० १५।६८)। **विसिष्मिये=विस्मयमाप साश्चर्यो बभूव।** न विस्मयेत तपसा (मनु० ४।२३६)। **न विस्मयेत् न दृप्येत्, न गर्वयेत।** विस्माययन् विस्मितमात्मवृत्तौ (रघु० २।३३)। **विस्माययन् विस्मयं कुर्वन् (जनयन्)।** वीर्यवान् न च वीर्येण महता स्वेन विस्मितः (रा० २।१।१३)। **विस्मितो गर्वितः।** शमीजातं तु तं दृष्ट्वा अश्वत्थं विस्मितस्तदा (हरि० १।२६।४४)। **विस्मितो विस्मयान्वितः।**

**—स्मृ (स्मृ चिन्तायाम्)।** कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोस्येनां कथम् (शा० ५।१)। यदा त्वन्यसङ्गात्पूर्ववृत्तं विस्मृतो भवान् (शा० ६)। **विस्मृतिः स्मृतिसम्प्रमोषः।** अनिर्देश्यसुखः स्वर्गः कस्तं विस्मारयिष्यति (विक्रम० ३।१८)।

**—स्यन्द् (स्यन्दू स्रवणे)।** शम्भुमयोभूभ्यां विष्यन्दयति (कौ० सू० ४३, ३-१२)। **आसिञ्चतीत्यर्थः।** मारुतं विष्यन्दमानं (पयः)। **क्वथ्यमानमित्यर्थः।**

**—स्रंस् (स्रंसु अवस्रंसने)।** उतो त्वस्मै तन्वं वि सस्रे (ऋ० १०।७१।४)। **विसस्रे विवृणोति।** तस्मादु हैतद् यः सर्वमाजिमेति व्यवस्रंसते (श० ब्रा० ६।१२)। **विस्रंसते शिथिली भवति, श्राम्यतीत्यर्थः।** अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः (कठ० उ० २।२।४)। अथ विस्रंस्य ग्रन्थिम् (श० ब्रा० १।३।३।५)। **ग्रन्थिं शिथिलीकृत्य, विसाय, विषीव्य।**

**—स्रम्भ् (स्रम्भु विश्वासे)।** सुविस्रब्धैरङ्गैः पथिषु विषमेष्वप्यचलता मुद्रा० ३।३)। **विस्रब्धैर्विश्वस्तैः प्रत्ययितैः स्वशक्तौ कृतश्रद्धैः।** विस्रब्धं क्रियतां वराहततिभिर्मुस्ताक्षतिः पल्वले (शां०२।६)। **विस्रब्धमनाशङ्कम्, अशङ्कितम्।**

**—स्रु (स्रु गतौ)।** स तु वाणवरोत्पीडाद् विस्रवत्यसृगुल्वणम् (भा० वन० २१।८)। **विस्रवति मुञ्चति। उल्बणमुत्कटम्।** छिद्रो हि यज्ञो भिन्न इवोदधिर्विस्रवति। (गो० ब्रा० उत्तर० २।५)। **विस्रवति श्च्योतति क्षरति।**

उदधिः कलशः। जलं विस्रावयेत्सर्वमविस्राव्यं च दूषयेत् (भा० शां० ६९। ३९)। विस्रावयेत् परिवाहयेत्।

—स्वन् (स्वन ध्वन शब्दे)। वेश्च स्वनो भोजने (८।३।६९)। इत्यत्र विष्वणतीत्युदाहृतं वृत्तौ। तस्य सशब्दं भुङ्क्त इत्यर्थः। अभ्यवहारक्रियाविशेषोऽभिधीयते यत्र स्वननमस्तीति वृत्तिः।

—स्वप् (ञिष्वप् शये)। तदाहुर्नाग्निरुपस्थेयः कश्श्रेयांसं विषुप्तं बोधयिष्यतीति (आप० श्रौ० ६।७।२।७।१)। विषुप्तं प्रसुप्तं सुषुप्तम्।

—हन् (हन हिंसागत्योः)। विघ्नन्ति रक्षांसि वने क्रतूंश्च (भट्टि० १। १९)। विघ्नन्ति क्रतून्=क्रतुष्वन्तरायमाचरन्ति। गतिर्विजघ्ने नहि तद्रथस्य (रघु० ५।२७)। न विहता प्रतिरुद्धाऽभूदित्यर्थः। न व्यहन्यत कदाचिदर्थिता (रघु० ११।२)। उक्तोऽर्थः। पद्मान्यशोकपुष्पाणि दृष्ट्वा दृष्टिर्विहन्यते। सीताया नेत्रकोषाभ्यां सदृशानीव...(रा० ४।१।७१)। विहन्यते रुध्यतेऽपसार्यते। पद्मकोशपलाशानि द्रष्टुं दृष्टिर्हि मन्यते। सीताया नेत्रकोशाभ्यां सदृशानीति लक्ष्मण॥ इति पाठान्तरम्। तत्रापरीक्ष्य प्रवर्तमानोऽर्थाद् विहन्येत, अनर्थं चाप्नुयात् कदाचित (मी० शा० भा० १।१।५)। विहन्येत रुद्धो वारितः स्यात्। अर्थं नासादयेदित्याह। तद्यथा शङ्कुभिश्चर्म विहन्यात् (श० ब्रा० २।१।१।१०)। वितानयेदित्याह। मुण्डमिश्रश्लक्ष्णेति (३।१।२१) सूत्रे तूस्तानि विहन्ति वितूस्तयतीत्युदाहृतं वृत्तौ। वितूस्तयति विशदी करोति। तूस्तानि जटीभूताः केशाः। तान्विहन्ति विश्लेषयति पृथक् करोतीत्यर्थः। प्रारभ्य विघ्नविहता विरमन्ति मध्याः (भर्तृ०)। विघ्नविहताः प्रत्यूहैः प्रतिहतप्रसराः। (अलं) सहसा संहतिमंहसां विहन्तुम् (कि० ५।१७)। विहन्तुम् अपनेतुम्। तत एष्याम्यतीतेऽग्नौ विहन्तुं पांसुसंचयम् (भा० आदि० २३०।१८)। उक्तपूर्व एवार्थः। तद्भूतनाथानुग नार्हसि त्वं सम्बन्धिनो मे प्रणयं विहन्तुम् (रघु० २।५८)। विहन्तुम् पराकर्तुं प्रत्याख्यातुं प्रत्यादेष्टुम्। विश्वा अग्ने अभियुजो विहत्य (अथर्व०.७।७७।९)। विहत्य विशेषेण हत्वा। अभियुजोऽभियोक्तॄन्।

—हस् (हसे हसने)। किमिति विषीदति रोदिति विकला विहसति युवतिसभा तव सकला (गीत० ९)। विहसति उपहसति। विरुद्धो हासो विहासः। गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः (मेघ० ५२)। विहस्य उपहस्य। किं चिद् विहस्यार्थपतिं बभाषे (रघु० २।४६)। विहस्य स्मितं कृत्वा। इह विशब्द ईषदर्थे। विहसितं सस्वनं स्यात् (अग्निपु० ३४२।१०)। इह विर्वैशिष्ट्ये।

—हा (ओहाक् त्यागे)। विहाय लक्ष्मीपतिलक्ष्म कार्मुकं जटाधरः

सञ्जुहुधीह पावकम् (कि० १।४४)। **विहाय संन्यस्य परित्यज्य।** ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः (मेघ० ४३)। **विहातुमुत्स्रष्टुम् उज्झितुम्।**

—हा (ओहाङ् गतौ)। विजिहीष्व लोकम् (अथर्व० ६।१२१।४)। **विविधं गच्छेत्यर्थः।** वराहेण पृथिवी संविदाना सूकराय वि जिहीते मृगाय (अथर्व० १२।१।४८)। **विजिहीते विवरं ददातीत्यर्थः।** स वायुमागच्छति तस्मै स तत्र विजिहीते (श० ब्रा० १४।८।१२।१)। **विजिहीतेऽपसर्पति अवकाशं ददाति।** वि पर्वाणि जिहतां सूतवा उ (अथर्व० १।११।१)। **प्रसवनिरोधकाः सन्धिबन्धा विजिहतां विगच्छन्तु विश्लथा भवन्त्विति सायणः।** विजिहीष्व वनस्पते योनिः सूष्यन्त्या इव (ऋ० ५।७८।५)। **विजिहीष्व=विगच्छ विवृता भव। वनस्पतिर्वनस्पतिविकारः पेटिका।** अथास्या ऊरू विहापयति (श० ब्रा० १४।६।४।२०)। **विहापयति पृथक्करोति। वियौति वियुनाति।** वि योनिं हापयामसि (अथर्व० १।११।३)। **विहापयामसि विहापयामो विवृणमः।** सुकीर्तिना काक्षीवतेन योनिं व्यहापयत् (ऐ० ब्रा० ५।१५)। **व्यहापयद् गर्भनिःसरणायावकाशमकरोदित्याह।** इदं तच्छीर्षकपालं विहाप्य यदिदमन्तरतः शीर्ष्णो वीर्यं तदस्मिन्दधाति (श० ब्रा० ७।५।२।२५)। **विहाप्य विदार्य।**

—हूर्च्छ् (हुर्च्छा कौटिल्ये)। तस्माद्यो मनुष्याणां मेद्यत्यशुभे मेद्यति विहूर्च्छति हि, न ह्ययनाय चन भवति (श० ब्रा०२।४।२।६)। **विहूर्च्छति पादावस्य विषमौ भवत इत्याह।**

—हृ (हृञ् हरणे)। विहरति हरिरिह सरसवसन्ते (गीत० १)। **विहरति क्रीडति, आत्मानं विनोदयति।** कीर्तिं बहुभ्यो विहर द्विराजे (अथर्व० ५।२०।९)। **विहर विभज बहुलं वितर।** न वीरपत्नीं विहरेत नारीम्। **न विहरेत न विभजेत। स्थ्यन्तरकरणेन धर्मार्थकामेषु तां विभागवतीं न कुर्यादित्यर्थः।** एषा ह वा अस्य सहस्रम्भरता यदेनमेकं सन्तं बहुधा विहरन्ति (ऐ० ब्रा० १।२८)। **व्याहरन्तीत्यर्थः।** अथ यदेनमेकं सन्तं बहुधा विहरन्ति तदस्य वैश्वदेवं रूपम् (ऐ० ब्रा० ३।४)। **पूर्वोक्त एवार्थः।** स पच्छः प्रथमे सूक्ते विहरति, अर्द्धर्चशो द्वितीय ऋक्शस्तृतीये (गो० ब्रा० उ० ६।८)। **स्थानविपर्ययं करोतीत्यर्थः।** पञ्चशब्दादिलक्षणायां भुवि पादो विहरति (साङ्ख्यका० ३४, गौडपादः)। **विहरति गतिं करोति, क्रामति।** ग्रामं विहरति (उद्द्योते नागेशः)। **गच्छतीत्यर्थः।** इति बाष्पं विहरति (शा०६)। **मुञ्चतीत्यर्थः।** पार्श्वतो विहरिष्यामि इत्येवं याचितो वरः (बाणेन) (हरि० १।३।७७)। **त्वत्सन्निधौ विचरिष्यामीत्यर्थः।** न सख्यमजरं लोके विद्यते जातु कस्य चित्। कालो वैनं विहरति क्रोधो वैनं रहत्युत (भा० आदि० १३१।६८)॥ **विहरत्यपनयति**

**अपाकरोति ।** एनमिति पुन्निर्देशो लिपिकरप्रमादजः । अग्नीदग्नीन् विहर (श० ब्रा० ४।२।५।११) । **विहर पृथक्पृथक् प्रणय रचय ।** यस्त ऊरू विहरत्यन्तरा दम्पती शये (ऋ० १०।१६२।४)। **विहरति पृथक्करोति ।** तस्मात्स्त्र्यूरू विहरति (ऐ०ब्रा०२।३५)। **अनन्तरोदीरित एवार्थः ।** तद्यदेतावग्नी आहवनीयाद् विह्रियेते (श० ब्रा० १२।६।३।१३) । **पूर्वेण समोऽर्थः ।** यस्य दस्युगणा राष्ट्रे ध्वाङ्क्षा मत्स्यान् जलादिव । विहरन्ति परस्वानि...(भा० शां० १४२।२६) ।। **विहरन्ति अपहरन्ति, आच्छिन्दन्ति, विलुम्पन्ति ।** पततश्चापरो राजन् विजहारासिना शिरः (भा० कर्ण० २८।३८) । **विजहार अपजहार, चिच्छेद ।** व्यहरन्नुत्तमाङ्गानि पाण्डवा गजयोधिनाम् (भा० भीष्म० ६२।४२) । **उक्तोऽर्थः ।** हिंसया विहरिष्यन्तो धर्मं पितृकृतेन वै० (हरि० १।१६।५) । **पित्रर्थं धर्मं श्राद्धमुद्दिश्य हिंसया विहरिष्यन्तो जीवन्त इत्यर्थः ।** ये पाकशंसं विहरन्त एवैः (अथर्व० ८।४।६) । **विहरन्ते विशेषेण हरन्ति उपक्षपयन्ति यथाकामं परिवदन्तीत्यर्थ इति सायणः ।** ते देवा आग्नीध्रादेव सदस्यानग्नीन् विहरन्त (ऐ० ब्रा० २।३६) । **विहरन्त=व्यहरन्त । अडभावश्छान्दसः । आहरन्नित्यर्थः ।** गृह्येऽग्नौ पाकयज्ञान् विहरेत् (वा० गृ० १।२) । देवरथस्यैव तदन्तरौ रश्मी विहरत्यलोभाय (ऐ० ब्रा० २।३७) । **विहरति संगृह्णाति । अलोभाय=अनाकुलत्वाय ।** मासमेकं विजह्रुस्ते ससैन्य.न्तःपुरा वने (भा० आश्रम० २६।७) । **विजह्रुः, श्रेमुः पर्याटुः ।** विहरेत्स्वास्थ्यमिदं च मे न सङ्गः (बुद्ध० ५।३५) । **विहरेत् अपहरेत् नाशयेत् ।** स विद्युच्छुरितं चापं विहरन्वै तलात्तलम् (भा०वन० १७।४) । **विहरन् सव्यापसव्यहस्ततलपरिवर्तेन कर्षन्नित्यर्थः ।** एतां रात्रिं विहरेयाताम् (गो० गृ० १।६।६)। **नयेयातां विगमयेयाताम् ।** यथालिङ्गं वा विहरन् (गो० गृ० ३।४।२१) । **विहरन् व्यवहरन् इति सत्यव्रतः सामश्रमी । विहारो विकर्षणं पृथक्करणम् । एतत्कालत्रये मन्त्रान्विभजन् इत्यर्थ इति ।** विहरन्ननु संहरेच्चक्षुरसीति (द्रा० गृ० ३।१।१६) । **विहरन्व्याहरन् । आङ् परिहृतः ।** स्थानासनाभ्यां विहरन्तः (आप० ध० १।६।२५।१०) । **कालं क्षिपन्तः क्षपयन्त इत्यर्थः ।** विहारावसथोद्यानकूपारामसभाप्रपाः । वप्राणां चैव कर्तारः (भा० अनु० २३।९९) । **विहारा भिक्षुनिकाय्याः ।** कुर्याद् विहारमाहारं निर्हारं विजने सदा (शुक्र० ३।११२) । **विहारो व्यवायो रतम् ।** यथाश्रुति विहारे (आप० ध० २।६।१६) । **विहारो यज्ञकर्म ।** शमीमय्यः स्रुचो भवन्ति हिरण्यमय्यो वा दक्षिणस्य विहारस्य (भा० श्रौ० ८।६।६) । **उक्तोऽर्थः ।** न विहारार्थं जल्पेत् (लौ० गृ० १।२०) । **विहारः क्रीडा । तदर्थं परिहासादिकं न वदेत् । अथवा विहारो मलमूत्रोत्सर्गमाह । विहारार्थं न जल्पेदनुज्ञाग्रहणायेत्यर्थ इति देवपालः ।** सविहारं सुखं जग्मुर्नगरं नागसाह्वयम् (भा० आदि० २०७।११) ।

सविहारं सलीलम् । अन्तरेण खल्वपि शब्दप्रयोगं बहवोऽर्था गम्यन्तेऽक्षिनिकोचैः पाणिविहारैश्च (पा० २।१।१ भाष्ये) । पाणिविहारैर्हस्तचेष्टाभिः । न समावृत्ता वपेरन्नन्यत्र विहारात् (आप० ध० १।३।१०।७) । विहारो यागदीक्षा । वपेरन्नित्यत्र केशानिति शेषः । यथा तर्हि रथाङ्गानि विहृतानि प्रत्येकं व्रजिक्रियां प्रत्यसमर्थानि भवन्ति (पा० १।२।४५ सूत्रभाष्ये) । विहृतानि विक्षिप्तानीति कैयटः । विहरतिरिह पृथक्करणे वर्तत इति नागेशः । महाव्याहृतीश्च विहृता ओङ्कारान्ताः (गो० गृ० २।१०।४०)। विहृता विकृष्य हृताः पृथक्कृताः । यदस्य हृतं विहृतं यत् पराभृतम् (अथर्व० ५।२९।५)। उक्तोर्थः । कुत आगम्यते सौते क्व चायं विहृतस्त्वया । कालः कमलपत्राक्ष शंसैतत्पृच्छतो मम (भा०आदि० १।७)।। विहृतो नीतः नीलकण्ठः । विहृत्य नीत इति तु वयम् । विहृतम् । अवसरागतस्याभाषणं व्याजादिना दर्शितेङ्गितम् (दशरूपके २।३०)। निगदव्याख्यातम् । विहृतिमियाय रुचिस्तडिल्लतानाम् (कि० १०।१९) । विहृतिर्विवृद्धिः । विवृतिमिति पाठान्तरम् । आध्यादीनां विहर्तारं धनिने दापयेद् धनम् (याज्ञ० २।२६)। विहर्तारमपनेतारम् (उपभोगादिना) । आङो दोऽनास्यविहरणे (पा० १।३। २०) । विहरणं व्यादानम् । मूलतो विहरणं पृथक्करणमित्यधस्तादसकृदुक्तम् । ओष्ठपुटयोः पृथक्करणमेवास्यविहरणम् । वेः पादविहरणे (पा० १।३।४१) । इह विहरणं विक्षेपः । विक्रमते वाजीत्युदाहरणम् । सुष्ठु पदानि विक्षिपतीत्यर्थः । अश्वादीनां गतिविशेषो विक्रम इति च वृत्तिः । उपानदधिनहनपूर्वोत्तरपदविहरण-पथिभोजनशय्यासनोदकपानाद्यासु (नि० १।१।११ इत्यत्र दुर्गः) । उक्तोऽर्थः । वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् (सां० का० २८ इत्यत्र गौडपादः) । उक्तपूर्व एवार्थः । निष्कालन-प्रवेशने तन्त्री-विहरणम् (गो० गृ० ३।६।९) । तन्त्र्या बन्धनरज्ज्वा दाम्नः पृथक्करणमिह विहरणमुक्तम् । अग्निविहरणम् । स्वस्थानाद् विभज्यान्यत्र नयनम् (ऐ० ब्रा० ४।३ इत्यत्र सायणः)। गार्हपत्याद् दक्षिणाग्निमुद्धृत्य तस्मादाहवनीयं प्रणीय दक्षिणाग्नेस्तदायतने निधानं विहरणम् (श्रौ० प० नि०) । गार्हपत्यकुण्डस्थानामग्नीनामाहवनीयदक्षिणाग्निकुण्डयोर्विहारो वितानम् इति (मनु० ६।९ इत्यत्र कुल्लूकः) । उत्तरत उपचारो विहारः (बौ० ध० १।७।१५।१) । विहृता अग्नयो यस्मिन्देशे स विहारः । जपत्युत्तरतो विहारस्य (आप० श्रौ० १।१।४) । विहारं प्रपद्यते पूर्वेणोत्करमपरेण प्रणीताः (आश्व० श्रौ० १।१।४) । विहारो विहृताग्निमध्यगः प्रदेशः । न विहारेण व्यवेयात् (आश्व० गृ० १।५।४ इत्यत्रानाविलायामुद्धृतम्) । विहारवेलाविलोले पर्यटति पत्नीजने (हर्ष० तृ० उ०) । विहारो वह्निसन्धुक्षणमग्निहोत्रार्थम् इति शङ्करसङ्केतः । स्थाना-

समविहारैः (याज्ञ० ३।५१)। विहारः क्रीडा विनोदो वा। विहारयोगान्व्याख्यास्यामः (आप० शुल्ब० १)। विहारो विमानम्।

—ह्वल् (ह्वल ह्मल चलने)। अन्तर्भिन्नं भ्रमति हृदयं विह्वलत्यङ्गमङ्गम् (मालती० ५।२०)। विह्वलति विचलति वेपते। क्षणमात्रसखीं (स्रजम्) सुजातयोः स्तनयोस्तामवलोक्य विह्वला (रघु० ८।३७)। विह्वला परवशेति मल्लिः। संज्ञां नोपलभे सूत मनो विह्वलतीव मे (भा० आदि० १।२१८)। भ्रमतीत्यर्थः। वित्तव्याधविकारविह्वलगिरां नामापि न श्रूयते (भर्तृ० ३।५६)। विह्वला क्लिष्टा, दूना।

—ह्वृ (ह्वृ कौटिल्ये)। इममग्ने चमसं मा विजिह्वरः (अथर्व० १८।३।५३)। कुटिलं मा कार्षीरित्यर्थः।

—ह्वे (ह्वेञ् स्पर्धायां शब्दे च)। यदिन्द्राग्नी जना इमे विह्वयन्ते तना गिरा (ऋ० ८।४०।७)। नाना ह्वयन्त इत्यर्थः।

## व्यति (वि+अति)

—अस् (असु क्षेपे)। न च व्यत्यसनीयानि (वस्त्राणि निर्णेजकेन) (याज्ञ० २।२३८ इत्यत्र मिताक्षरा)। न व्यत्यासं विपर्ययं नेतव्यानीत्याह। वाससामन्यदीयानां परकीयैर्वासोभिर्निर्हरणमिह वस्त्रव्यत्यास उक्तः। न च वासांसि वासोभिर्निहरेदिति मनुवचनम् (८।३९६)। अन्यदीयवाससामन्यस्मै परिधानार्थं दानमपि निर्हरणं भवति। व्यत्यस्तपाणिना कार्यमुपसङ्ग्रहणं गुरोः (मनु० २।७२)। व्यत्यस्तपाणिनेति शिष्यविशेषणम्। अपसव्यस्योपरि सव्यं निधाय हस्तं गुरुपादौ गृह्णीयादित्याह। उचथ्यभारद्वजौ व्यत्यस्य भार्ये जग्मतुरित्यापस्तम्बधर्मसूत्रे २।१३।६ उज्ज्वलायां हरदत्तः। व्यत्यस्य विपर्ययं कृत्वा। उचथ्यस्य भार्यां भारद्वाजो जगाम, उचथ्यश्च भारद्वाजस्येति विपर्ययो व्यत्यासः। माता व्यत्यस्य दैवेन दुहित्रे स्वं चरु ददौ (हरि० १।२७।२५)। व्यत्यस्य विपर्यस्य विपरीतं विसृज्य, परिवर्त्येत्यर्थः।

—इ (इण् गतौ)। यं यं व्यतीयाय पतिंवरा सा (रघु० ६।६७)। व्यतीयाय=अतिक्रम्याग्रतोऽगच्छत्। नृपं तं···सा व्यत्यगादन्यवधूर्भवित्री। महीधरं मार्गवशादुपेतं स्रोतोवहा सागरगामिनीव (रघु० ६।५२)। व्यत्यगात् अतीत्य गता। पञ्चैव वर्षाणि तथा व्यतीयुरधीयतां जपतां जुह्वतां च (भा० वन० ५०।१२)। रेखामात्रमपि क्षुण्णादा मनोर्वर्त्मनः परम्। न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः (रघु० १।१७)॥ रेखामात्रमपि परं नातिक्रान्तवत्य इत्याह। अस्य वर्षस्य शेषं चेद् व्यतीयुरिह पाण्डवाः (भा० वि० २६।४)। व्यतीयुर्गम-

येयुः क्षपयेयुः । यो व्यतीयाद् युधि श्रेष्ठमपि चक्रधरं स्वयम् (भा० आदि० १६२।१७) । व्यतीयात् लङ्घयेत्, अभिभवेत्, विजयेत । ततो रथाभ्यां रथिनौ व्यतीयतुरमर्षणौ (भा० वि० ३२।२६) । व्यतीयतुः=अवतेरतुः । व्यतीतस्य ते धर्मात् (रा० ४।१७।३२) । व्यतीतस्य विचलितस्य प्रच्युतस्य भ्रष्टस्य । व्यतियतामपि तद्वः (नै० ५।१३) । व्यतियतामतिक्रामतामुपेक्षमाणानां परिहरताम् । व्यतीत्य न हि शीतांशुं चन्द्रिका स्थातुमर्हति (अवदा० विश्वन्तर० ९९)। व्यतीत्य, अतिक्रम्य, अतिहाय, विरहय्य । दैवयोगात् क्षणे तस्मिन्नूर्मिकाव्यत्ययोऽभवत् (राज० ७।८०३) । व्यत्ययो व्यत्यासः । दित्सितेऽङ्गुलीयके दातव्येऽदित्सितमदीयतेत्यर्थः ।

—कॄ (कॄ विक्षेपे) । महान्व्यतिकरो रौद्रो योधानामन्वपद्यत (भा० कर्ण० २४।७४) । व्यतिकरः समागमः । तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वोः (रघु० ८।९५) । तोयव्यतिकरोऽपां संमिश्रणम् । रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा (माल० १।४) । व्यतिकरः सम्पर्कः । चतुर्णां यत्र वर्णानां धर्मव्यतिकरो भवेत् (भा० शां० २८७।३७) । व्यतिकरः संकरः । यथा वज्रेण वै दीर्णं पर्वतस्य महच्छिरः । व्यतिकीर्णाः प्रदृश्यन्ते तथा सूता महीतले (भा० वि० २४।२) ॥ व्यतिकीर्णा विकीर्णा विक्षिप्ताः ।

—क्रम् (क्रमु पादविक्षेपे) । तदन्तःपुरमासाद्य व्यतिचक्राम तं जनम् (रा० २।१४।२६) । व्यतिचक्राम=अतीत्य जगाम । अतिपूर्वः क्रमिर्यमर्थमाह तमेव व्यतिपूर्वः । शब्दोपजनो नार्थोपजनः । तस्यां वसन्त्यां वर्षाणि पञ्च पञ्च च राघव । विश्वामित्राश्रमे राम सुखेन व्यतिचक्रमुः ॥ व्यतीयुरित्यर्थः । इहाकर्म्मको व्यतिक्रमिः । पुराणि च व्यतिक्रामन् राष्ट्राणि विविधानि च (भा० उ० ८४।१६) । व्यतिक्रामन् अतिलङ्घमानः । व्यतिक्रमं न वेत्स्यामि (रा० २।२७।२१) । व्यतिक्रमोऽत्ययः । (वर्षशतस्य वर्षसहस्रस्य वा) । स्वरव्यञ्जनव्यतिक्रमे तत्कालप्रसङ्गः (स्थानेन्तरतमः १।१।५० इत्यत्र वार्त्तिकम्) । व्यतिक्रमः परिवृत्तिः । को रामस्य व्यतिक्रमः (रा० ३।३९।२४) । व्यतिक्रमो दोषः ।

—क्षिप् (क्षिप प्रेरणे) । आय नार्ययोर्व्यतिक्षेपे कर्मणः साम्यम् (गौ० ध० २।१।६९) । व्यतिक्षेपो व्यत्यासः, कर्मव्यतिहारः ।

—गम् (गम्लृ गतौ) । कथमर्जुन कालोऽयं स्वर्गे व्यतिगतस्तव (भा० वन० ११९३७) । व्यतिगतोऽतिक्रान्तोऽतीतः ।

—तन् (तनु विस्तारे) । वियति व्यत्यतन्वातां मूर्ती हरिपयोनिधी (भट्टि० ८।३) । व्यतिविस्तारितवन्तौ । स्पर्धयेति गम्यते । अत्र यथाकथंचित्कर्मव्यतिहारो व्याख्येयः ।

—तॄ (तॄ प्लवनतरणयोः) । यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति (गीता २।५२) । उत्तरिष्यतीत्यर्थः ।

—पठ् (पठ व्यक्तायां वाचि) । कर्तरि कर्मव्यतिहारे (१।३।१५) इत्यत्र प्रतिषेधे हसादीनामिति वार्त्तिकोदाहरणे व्यतिपठन्तीति वृत्तौ स्थितम् । तत्र परस्परं पठन्तीत्यर्थः ।

—पत् (पत्लृ गतौ) । व्यतीपातादिसर्वदोषाभिषङ्गरहितेऽहनि (हर्ष० चतुर्थ उच्छ्वासे) । गगने हिमकरार्कौ युगपत्स्यातां यदैकमार्गस्थौ । भगणार्धेऽर्कश्च यदा शशी स भवेद् व्यतीपातः ।। इति लाटाचार्य इति तत्र शङ्करमिश्रोपस्कारः । व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः (याज्ञ० १।२१८) । व्यतीपातो विष्कम्भादिसप्तविंशतियोगान्तर्गतसप्तदशो योग इति मिताक्षरा ।

—भू (भू सत्तायाम्) । व्यतिभवतेऽर्कमिन्दुः (वोपदेवः) । सूर्येण स्पर्धते चन्द्रः, तमभिभवितुमीहत इत्यर्थः ।

—या (या प्रापणे, प्रापणमिह गतिः) । वि वारमव्यं समयाति याति (ऋ० ९।९७।५६) । व्यतियाति=अतिविध्यति । दिवसाः सुभगाः पुण्यास्त्वरिता व्यतियान्ति नः (रा० ३।२२।१०) । अतिक्रामन्तीत्याह ।

—यु (यु मिश्रणामिश्रणयोः) । अन्योन्यं स्म व्यतियुतः शब्दाञ्शब्दैस्तु भीषणान् (भट्टि० ८।६) । व्यतियुतः=मिश्रयतः । अन्योन्यम् अन्योऽन्यस्य ।

—रिच् (रिचिर् विरेचने) । ससस्यानां च सीमानां न लक्ष्मीर्व्यतिरिच्यते (हरि० २।१०।२८)। न व्यतिरिच्यते (अन्योऽन्यस्य) नातिशेते । स्तुतिभ्यो व्यतिरिच्यन्ते दूरेण चरितानि ते (रघु० १०।३१) । सुदूरमतिक्रामन्ति । निःशेषेण स्तोतुं न शक्यन्त इत्यर्थः । न मत्तो व्यतिरिच्यते । न मद् भिद्यत इत्यर्थः । कृत्स्नं विकारजातं सत्त्वरजस्तमांसि न व्यतिरिच्यन्ते (सुश्रुत० १।९०।६) । विकारजातात्पृथग्भूत्वा न वर्तन्ते, किन्तर्हि सहैव वर्तन्त इत्याह ।

—वृत् (वृतु वर्तने) । सा रात्रिर्व्यत्यवर्तत (भा० ३।१६७२२) । अत्यक्रामत् अत्यगात् ।

—सञ्ज् (षञ्ज सङ्गे) । व्यतिषजति पदार्थानान्तरः कोपि हेतुः (उत्तर० ६।१२) । व्यतिषजति सम्बध्नाति, संयुनक्ति । इमांश्च तल्लोकानेताश्च देवता व्यतिषजति (श० ब्रा० ६।३।३।१६) । उक्तोऽर्थः । व्यतिषजेद्याज्यानुवाक्याः (ऐ० ब्रा० १।११) । व्यतिषङ्गो व्यत्यासः । याः प्रायणीयस्य पुरोऽनुवाक्यास्ता उदयनीयस्य याज्याः कुर्यात् इति मूल एव व्यतिषङ्गस्वरूपमुक्तम् । तेषां काष्ठमयं पाशकं पादे व्यतिषज्यते तदुच्यते शृङ्खलमिति शृङ्खलमस्य बन्धनं करभे ५।२।७९ सूत्रे वृत्तौ । व्यतिषज्यते बध्यते । व्यतिषक्त इव पुरुषः पाप्मना (ऐ०

ब्रा० ४।४)। व्यतिषक्तः संयुतः संयुक्तः संहितः। व्यतिषक्ताभ्यां (मन्त्राभ्यां) जुहोति (श० ब्रा० ६।३।३।१६)। संमिश्रिताभ्यां सहोच्चारिताभ्यामविच्छेदेनो-दाहृताभ्याम्। सर्वे एते स्मार्ता वैदिकैर्व्यतिषक्ताः। परस्परं सम्बद्धा इत्यर्थः।

—सिच् (षिच क्षरणे)। पश्य भूतानि दुःखेन व्यतिषिक्तानि सर्वशः (भा० शां० १७४।१३)। व्यतिषिक्तानि अभिषिक्तानि अभिवृष्टानि। व्याप्तानीत्यार्थिकोऽर्थः।

—हन् (हन हिंसागत्योः)। व्यतिघ्नन्ति राजानः (कर्तरि कर्मव्यतिहारे १।३।१४ इत्यस्य प्रतिषेधके न गतिहिंसार्थेभ्यः १।३।१५ इत्यत्रोदाहृतं वृत्तौ)। परस्परं घ्नन्तीत्यर्थः।

—हृ (हृञ् हरणे)। हिरण्यं व्यतिहरतः (लौ० गृ० १६।२)। परस्परं दत्तः। अपि वा कन्यामूल्यभूतं स्वर्णं निश्चिनुत इत्यर्थ इति देवपालः। पयस्याप्रचरणकाले मेषी व्यतिहरतः (आप० श्रौ० ८।६।१६)। इह व्यतिहारोऽन्योन्यं वैपरीत्येन स्थापनम्। पूर्वं मारुत्यां विहितं मेषं वारुण्यां पयस्यायां स्थापयेदध्वर्युः, प्रतिप्रस्थाता तु वारुण्यां विहितं मारुत्यां स्थापयेदित्येष व्यतिहारः। अत्र मेषप्रतिकृती व्यतिहरतः (आप० श्रौ० ८।२।६।१६)। व्यतिहरतो विनिमयेन हरतः। पर्युक्षणान्तान् व्यतिहरन्। प्रतिलोमीकुर्वन्। अभ्यन्तरतः कुर्वन्नित्यर्थः। हुत्वा दश बलीन्हरेत् प्रदक्षिणं प्रतिदिशमवान्तरदेशेष्वानुपूर्व्येणाति व्यतिहरन् (गो० गृ० ४।७।२५)। विक्रमव्यतिहारेण (रघु० १२। ९३)। व्यतिहारः पर्यायक्रमः। यत्रैकोऽन्यस्य योग्यां क्रियां करोति सोपि कर्मव्यतिहारो भवतीति (पा० १।३।१४ सूत्रे काशिका)।

व्यनु (वि+अनु)

—धा (डुधाञ् धारणपोषणयोः)। वयो न पक्षान् व्यनु श्रियो धिरे (ऋ० १।१६६।१०)। व्यनुधिरे=व्यनुदधिरे। यो जागारेत्यत्रेवाभ्यासलोपो द्रष्टव्यः। श्रियो व्यनुधिरे शोभां विजृम्भयन्तीत्यर्थः।

—नद् (णद अव्यक्ते शब्दे)। नभश्च पृथिवीं चैव तुमुलो (घोषः) व्यनुनादयन् (गीता १।१९)। व्यनुनादयन् नादेन पूरयन्।

व्यन्वाङ् (वि+अनु+आङ्)

—रभ् (रभ राभस्ये)। तेनो स उभौ व्यन्वारभमाण एतीमं चामुं च लोकम् (ऐ० ब्रा० ६।८)। सर्वतः संस्पृशन्नित्यर्थः।

व्यप (वि+अप),

—इ (इण् गतौ)। यथा काष्ठं च काष्ठं च समेयातां महोदधौ। समेत्य

च व्यपेयातां तद्वद् भूतसमागमः (भा० शां० १७४।१५) ॥ समेत्य तु व्यपेयातां कालमासाद्य कंचन (रा० २।१०५।२६)। व्यपेयाताम्=वियुज्येयाताम्, विश्लेषमाप्नुयाताम्। न खलु तदुपश्लेषादस्य व्यपैति रुचिर्मनाक् (प्र० च०)। व्यपैति अपयाति। अपचीयते। स्मृत्याचारव्यपेतेन मार्गेण (याज्ञ० २।५)। अपेतो व्यपेत इत्यनर्थान्तरम्। विश्लिष्टः, पृथग् भूतः। विरुद्ध इति स्वार्थिकोऽर्थः। वृथान्नाचमनोत्थानव्यपेतानि (गौ० ध० २।८।१९)। अपेतादन्यद् व्यपेतं संहितमिति हरदत्तः। स्वस्थोऽव्यपेतः पश्यामि भूतानां प्रभवाप्ययौ (भा० शां० २२२।२९)। अव्यपेतः=देहाद्यभिमानेन स्वरूपादप्रच्युत इति नीलकण्ठः। शुचिव्यपाये वनराजिपल्वलम् (रघु० ३।३)। शुचिव्यपायो निदाघविगमः, वर्षोपक्रमः।

—ईक्ष् (ईक्ष दर्शने)। न व्यपैक्षत समुत्सुकाः प्रजाः (रघु० १९।६)। न व्यपैक्षत नावैक्षत। नाद्दृतवानित्यर्थः। समुत्सुका दर्शनकाङ्क्षिणीः। व्यपेक्षा नैव कर्तव्या गतोऽस्तमिति भास्करः (भा० द्रोण० १४६।६६)। व्यपेक्षाऽऽदरः। धर्मं समाचर कुरु स्वजनव्यपेक्षाम् (दूतघट० १।५२)। उक्तपूर्व एवार्थः। वरेषुधी चापधरौ परन्तपौ व्यपेक्षमाणौ सह सीतया गतौ (रा० २।८६।२५)। व्यपेक्षमाणौ सावेक्षौ सावधानौ। अवेक्षा प्रतिजागरः।

—ऊह् (ऊह वितर्के)। तदेतन्मे मनोदुःखं व्यपोह त्वं पितामह (भा० अनु० १३७।१)। व्यपोह=अपाकुरु। क्षुधा निर्णुदति प्रज्ञां धर्मबुद्धिं व्यपोहति (भा० आश्व० ९०।९०)। अपाकरोति, अपनयति, अपहरतीत्याह। पूर्वां सन्ध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति (मनु० २।१०२)। उक्तोऽर्थः। व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च। अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति (मनु० ११।१९७)॥ पापमिति शेषः। दुर्योधनो मदेनैव क्षमं राष्ट्रं व्यपोहति (भा० सभा० ६३।३)। व्यपोहति विनाशयति।

—कृष् (कृष विलेखने)। यैरभ्युपायैरेनांसि मानवो व्यपकर्षति (मनु० ११। २१०)। व्यपकर्षति निर्णुदति निरस्यति। नास्ति लज्जा हि ते सीतां चौरवद् व्यपकर्षतः (रा० ६।८८।२२)। व्यपकर्षतोऽपहरतः। अद्य धर्मात्मता चैव व्यपकृष्टा युधिष्ठिरात् (भा० सभा० ३७।२४)। व्यपकृष्टा दूरं गता। व्यपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे ततः (भा० आदि० १३०।३६)। व्यपकृष्टाम्बरां स्रस्तवस्त्राम्।

—क्रम् (क्रमु पादविक्षेपे)। प्रक्षाल्य च तयोः पादौ व्यपाक्रामत् (रा० २।८७।२१)। व्यपाक्रामत्=अपाक्रामत्, अपासरत्।

—गम् (गम्लृ गतौ)। क्षुत्पिपासे च सर्वेषां क्षणेन व्यपगच्छताम् (भा०

वन०)। व्यपगच्छतां व्यपागच्छताम् अनश्यताम्। धर्माद् व्यपगतः (रा० ४। १७।५०)। धर्मात्प्रच्युत इत्याह। अर्कात्सिते द्वितीये बुधेऽथवा युगपदेव स्थितयोः। व्यपगतयोर्वा (वृ० सं० ८।३९)। व्यपगतयोर्विप्रकृष्टयोः सान्तरयोः।

—दिश् (दिश अतिसर्जने)। मित्रं च मां व्यपदिशस्यपरं च यासि (चारु० ४।४)। व्यपदिशसि सम्बोधयसि आलपसि। मित्रं च मां व्यपदिशसि विपरीतं च मयि व्यवहरसि। तदसाम्प्रतम् (इति वयम्)। तेन पुरुषो बध्यते पुरुषो मुच्यते पुरुषः संसरतीति व्यपदिश्यते येन संसारित्वं विद्यते (गौड० साङ्ख्य० का० ६२ )। व्यपदिश्यते व्यवह्रियते। इति तद्दुहितृत्वेन व्यपदिश्यते। तस्य दुहितेत्यभिलप्यते। यदा चितिरेव पुरुषस्तदा किमत्र केन व्यपदिश्यते (यो० सू० १।९ भाष्ये)। व्यपदिश्यते विशेष्यते। भ्रातरं राजराजानं महेश्वरसखं प्रभुम्। धनेश्वरं व्यपदिशन्। धनेश्वरं भ्रातेति कीर्तयन् इत्यर्थः। कुलं व्यपदिशन्वीर समरे कोऽभिधास्यति (रा० ३।२९।१९)। कुलं व्यपदिशन् कुलीनत्वं प्रख्यापयन्। अभिधास्यति स्वस्तवमिति शेषः। कथं वैश्रवणं देवं सर्वदेवनमस्कृतम्। हितमुक्तं त्वया देवि स्निग्धया सदृशं वचः॥ कुलं व्यपदिशन्त्या च धर्मज्ञे जनकात्मजे (रा० ३।१०।२)। उक्तोऽर्थः। भ्रातरं व्यपदिश्य त्वमशुभं कर्तुमिच्छसि (रा० ३।४८।२१)। वैश्रवणो मम भ्रातेति कीर्तयित्वेत्यर्थः। श्लाघ्या च व्यपदेश्या च यथा देवी ह्यरुन्धती (रा० ३।१३।७)। व्यपदेश्या महति कुले प्रसूततया कीर्तनीया। नारी सौजन्यचर्चासु व्यपदेश्या भविष्यसि (यो० वा० ६ (१) १०९।३१)। व्यपदेश्या विशिष्य कीर्तनीया। अलं ते व्यपदेशेन प्रमाणा यदि ते वयम् (भा० आश्व० ५७।१४)। व्यपदेशो व्याजः। प्रमाणाः प्रमाणम्। इत्यनुमानं व्यपदेशादवगम्यते, प्रत्यक्षस्तु वेदवचनेन प्रत्ययः (मी० शा० भा० १।१।२)। व्यपदेशोऽपदेशो हेतुः। कापि कुन्तलसंव्यानसंयमव्यपदेशतः। बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत्स्फुटम् (सा० द० ३।१२९)॥ व्यपदेशो व्याजः। व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुम् (शा० ५।२१)। व्यपदेशः कुलम्। व्यपदेशकुले जाताः पूजिताश्चाप्यभीक्ष्णशः (रा० ४। ६४।२१)। विगतोऽपदेशः कलङ्को यस्मात्तादृशे कुले। महाकुलप्रसूतस्य वसिष्ठव्यपदेशिनः (रा० १।१९।२)। वसिष्ठव्यपदेशिनो वसिष्ठगोत्रजस्य। कतकस्त्वन्यथा व्याचष्टे। व्यपदेशो नियोगोऽस्यास्तीति तस्येति। असौ गौरसावश्व इत्येवमेवैतद् व्यपदिष्टं भवति (श० ब्रा० १४।६।५।१)। व्यपदिष्टं व्यवहृतं भवति। गौरित्यादिनामधेयप्रयोगोऽस्य भवति।

—दृश् (दृशिर् प्रेक्षणे)। न वै किञ्चिद् व्यपदृश्यते भूतं तमोभूते सायकैरन्तरिक्षे (भा० द्रोण० १७९।२२)। व्यपदृश्यते व्यक्तिपरिच्छेदेन दृष्टे-

विषयो भवतीत्याह । प्रज्ञायत इति वा । प्रापतसत्रेति पाठान्तरम् । तद-सङ्गतम् ।

—नश् (णश अदर्शने) । यस्ते युद्धमयं दर्पं कामं च व्यपनाशयेत् (भा०) व्यपनाशयेत् विनाशयेत् ।

—नी (णीञ् प्रापणे) । व्यपनिन्युः सुदुःखार्तां कौसल्यां व्यावहारिकाः (रा० २।६६।१३) । व्यपनिन्युर् व्यपचकृषुः, ततोऽन्यत्र निन्युः । न दैवं व्यपनयति विमार्गं नास्ति दैवे प्रभुत्वम् (भा० अनु० ६।४७) । व्यपावपार्थको । नयतीत्येव पर्याप्तम् । विप्रकर्षविरोधयोर्विमार्गशब्देनैवोक्तेः । व्यावहारिका व्यवहारे नियुक्ता अमात्यादयः । शरे तु तस्मिन्व्यपनीतमात्रे (गोरेसियो सं० रा० २।६५।४६) । व्यपनीतमात्रे समुद्धृत एव । तन्मया त्वत्कृते ह्येतदन्यथा व्यपनायितम् (भा० द्रोण० २९।३७) । अस्त्रमित्यनुषङ्गः । अन्यत्र प्रापितं हारितम् इत्यर्थः । व्यपनामितमिति पाठान्तरम् । अर्थस्तु निर्विशेषः ।

—नुद् (णुद प्रेरणे) । अलक्ष्मीं व्यपनोत्स्यथ (भा० वन० १०६९५) । व्यपनोत्स्यथ विप्रकृक्ष्यथ । परिवेष्टनमेतेषां क्षिप्रं चैव व्यपानुद (भा० वि० ४१। ८) । ज्येष्ठस्य पाण्डुपुत्रस्य शोकं भीष्म व्यपानुद (भा० शां० ५०।३१) । व्यपानुद व्यपकर्ष । व्यपानुदेत्यत्रापशब्दस्य च्छान्दसो दीर्घ इति केचित् ।

—या (या प्रापणे, प्रापणमिह गतिः) । तथैव गच्छतस्तस्य व्यपायाद्रजनी शिवा (रा० २।४९।२) । व्यपायात् व्यत्यैत्, अत्यक्रामत् । व्यपयाहि रणादितः (भा० उ० १८५।१३) । निर्याहि, अपवाहयात्मानम् इति वाक्यार्थः । संस्मरन्तो विमनसो व्यपयाता नराधिप (भा० सभा० १४।४८) । व्यपयाता विप्रस्थिताः । व्यपयातेषु वासाय सैन्येषु (भा० द्रोण० ७२।२) । सर्वेष्विति पाठान्तरम् । उक्तोऽर्थः ।

—रुध् (रुधिर् आवरणे) । अतिक्रान्तवया राजा मा स्मैनं व्यपरोरुधः । कुमारराज्ये जीवस्व तस्यैवाज्ञाप्रवर्तनात् (रा० २।५८।२३) । अयं रामस्य भरताय सन्देशः । वृद्धं राजानं पितरं राज्यान्मा स्म भ्रंशयः, मा स्म तं राज्याद् विना करोरित्याह ।

—रुह् (रुह बीजजन्मनि) । प्रीतिपूर्वं महाबाहुः प्राणैर्न व्यपरोपयत् (भा० आश्व० ७४।२०) । व्यपरोपयत् व्यपारोपयत्=व्ययूयुजत् । अररहत् । अत्याजयत् । अधिरोप्य पादुके व्यपरोप्य च (गोरेसियो० रा० २।१२३। २१) । व्यपरोप्य=अवमुच्य ।

—वह् (वह प्रापणे) । युक्त्या बल्लापुरादौ वो व्यपोढं व्यसनं मया (राज० ७।२७०) । व्यपोढं=दूरीकृतम् । तया ते मानुषं कर्म व्यपोढम्

(भा० ८।१६१०)। व्यपोढमाविर्भावितम्, प्राकाश्यं नीतम्। व्यपोढे च ततो घोरे तस्मिंस्तेजसि भारत (भा० द्रोण० २००।२२)। व्यपोढेऽपगते प्रशान्ते। व्यपोढपार्श्वैरपवर्तितत्रिकाः (कि० ४।१५)। व्यपोढानि विपरीतानि पार्श्वानि येषु तानि विकर्षणानि तैः।

—वृज् (वृजि वृजी वर्जने)। न तु सर्प इव त्वचं पुनः प्रतिपेदे व्यपवर्जितां श्रियम् (रघु० ८।१३)। व्यपवर्जिता परित्यक्ता। त्वङ् निर्मोकः।

—वृत् (वृतु वर्तने)। चेतः कथं कथमपि व्यपवर्तते मे (मालती० १।१८)।

—व्यध् (व्यध ताडने)। आश्रमपदं व्यपविद्धवृसीमठम् (भा० वन०)। व्यपविद्धं विकीर्णं विशीर्णम्।

—श्रि (श्रिञ् सेवायाम्)। भवतु, पुत्र व्यपश्रयिष्ये तावदेनम् (मध्यम० १)। प्रार्थयिष्य इत्यर्थः। व्यपश्रयिष्ये तावद् भवन्तम् (पञ्च० १)। अनन्तरोदीरित एवार्थः। मित्राणि वा व्यपाश्रयेत् (कौ० अ० ४।३)। संश्रयेदित्यर्थः। अत्रापशब्दयोगो नार्थस्योपकरोति, प्रत्युत विरोधमिवाचरति। तथापि रूढ एष व्यवहार इत्यनुवृत्त्योऽकामेनापि। ससादाथ च पाञ्चाल्यो व्यपाश्रयत च ध्वजम् (भा० द्रोण० २००।७१)। ध्वजदण्डं प्रतिश्रयमकरोदित्याह। अद्य योत्स्येऽर्जुनमहं पौरुषं स्वं व्यपाश्रितः (भा० द्रोण० १४५।३१)। मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः (गीता ९।३२)। व्यपाश्रित्य = आश्रित्य। छिन्नो हि दक्षिणो बाहुः स हि तस्य व्यपाश्रयः (रा० ६।९१।१५)। व्यपाश्रय आश्रयः, अवलम्बः, अवष्टम्भः। त्रिविधमौषधमिति दैवव्यपाश्रयं युक्तिव्यपाश्रयं सत्त्वावजयश्च (चरक० सू० ११।५४)। दैवव्यपाश्रयं विधितन्त्रम्। निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् (काव्यादर्श १।९५)। व्यपाश्रय आश्रयः। यतिष्यन्तेन राज्याय स हि तेषां व्यपाश्रयः (भा० आदि० २०१। १२)। व्यपाश्रयः संश्रयः शरणम्। कथं तेषां जयो न स्याद्येषां धर्मो व्यपाश्रयः (भा० शल्य० १९।२७)। उक्तोऽर्थः। हन्याच्छत्रून् व्यपाश्रयः (का० नी० सा० १८।५९।६२)। व्यपाश्रयः परमनाश्रितः, आत्मश्रित इत्यर्थः। आश्रयः पराश्रयः। स व्यपगतोऽस्य। इह व्यपौ स्थाने। महती खल्वस्य व्यपाश्रयणा (स्वप्न० १)। प्रार्थनेत्यर्थः।

—स्फुर् (स्फुर् स्फुल सञ्चलने)। सोमे वोत्तरे व्यपस्फुरणश्रुतेरसम्भवाच्च (का० श्रौ० ५।३।३०)। व्यपस्फुरणं स्पर्धा। व्यपस्फुरेते वा एते वेदिश्चोत्तरवेदिश्च (श० ब्रा०)। उक्तोऽर्थः।

—हृ (हृञ् हरणे)। व्यपाहरच्छिरः क्रुद्धश्चक्रेणामित्रकर्षणः (भा०

सभा० ४५।२५)। व्यपाहरत्=अच्छिनत्। सारथेश्चास्य वेगेन तुण्डेनैव महच्छिरः। पुनर्व्यपाहरत् (रा० ६।५१।१८)। उक्तपूर्व एवार्थः।

### व्यपाङ् (वि+अप+आङ्)

—कृ (डुकृञ् करणे)। केऽयुध्यन्के व्यपाकुर्वन् के क्षुद्राः प्राद्रवन्भयात् (भा० द्रोण० २४।१७)। व्यपाकुर्वन्=परास्यन्।

—कृष् (कृष विलेखने)। ततो दुःशासनो राजन् द्रौपद्या वसनं बलात्। सभामध्ये समाक्षिप्य व्यपाकृष्टुं प्रचक्रमे (भा० सभा० ६८।४०)। व्यपाकृष्टुं व्यपरोपयितुमवातरयितुम्।

—नुद् (णुद प्रेरणे)। परिवेष्टनमेतेषां क्षिप्रं चैव व्यपानुद (भा० वि० ४१।८)। ज्येष्ठस्य पाण्डुपुत्रस्य शोकं भीष्म व्यपानुद (भा० शां० ५०।३१)। व्यपानुद व्यपकर्ष।

### व्यभि (वि+अभि)

—चर् (चर गतिभक्षणयोः)। न सत्तां पदार्थो व्यभिचरति (यो० सू० ३।१७ भाष्ये)। व्यभिचरति लङ्घते (वृक्ष इत्युक्तेऽस्तीति गम्यते)। सेयमाकृतिर्न व्यभिचरति शीलम्। न व्यभिचरति न जहाति। शीलनान्तरीयका भवतीत्यर्थः। न जातु धूमो व्यभिचरति वह्निम्। न वह्निं विरहय्य वर्तते। वह्न्यभावे नास्तीत्यर्थः। ते मां यथा व्यभिचरन्ति नित्यम् (भा० आदि० ७६।५२)। मामभिद्रुह्यन्ति, मयि विरुद्धमाचरन्ति। अधुना स्वामिनोऽपि व्यभिचरितं (त्वया) (तन्त्रा० १।१६)। स्वामिनमहासीः, ततः पराचीनोऽभूरित्यर्थः। अन्योन्यस्याव्यभीचारो भवेदामरणान्तिकः (मनु० ६।१०१)। अव्यभीचारः=अव्यभिचारः। उपसर्गाद् घञ्यमनुष्ये बहुलम् (पा० ६।३।१२२) इति दीर्घः। अव्यभिचारोऽवियोगः। पृष्टो यदब्रुवं सत्यं व्यभिचारोऽत्र को मम (भा० आदि० ६।२)। व्यभिचारोऽपचारो व्यतिक्रमो दोषः। यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः (कु० ५।५६)। अव्यभिचारि ऐकान्तिकम्, अविप्लुतार्थम्। रन्ध्रोपनिपातिनोऽनर्था इति यदुच्यते तदव्यभिचारि वचः (शा० ६)। उक्तोऽर्थः। पर्वसु हि रक्षःपिशाचा व्यभिचारवन्तो भवन्ति (बौ० ध० १।११।२१।२१)। विविधं गच्छन्ति विविधं च भक्षयन्ति। स्त्र्यभिगमनमांसाशनवन्तो भवन्तीति गोविन्दस्वामी विवरणकारः।

—हस् (हसे हसने)। व्युपतोदव्युपजपव्यभिहास—(आप० ध० १।८।१५)। व्यभिहास आभिमुख्येन हासः।

**व्यव (वि+अव)**

**—इ (इण् गतौ)।** नेदेकवचनेन बहुवचनं व्यवेयाम् (श० ब्रा० १३।५।१।१८)। **व्यवेयां व्यवदध्याम्।** गार्हपत्याहवनीयौ न व्यवेयात् (का० श्रौ० १।८।२३)। तौ नान्तरा गच्छेदित्यर्थः। नान्तरा यज्ञाङ्गानि व्यवेयात् (कौ० सू० १।२७)। उक्तोऽर्थः। क्षैप्रवर्णाश्च संयोगान्व्यवेयात्सदृशैः स्वरैः (ऋक्-प्रा० १७।१३)। **व्यवेयात् पृथक् कुर्यात्।** अधीयानेषु वा यत्रान्यो व्यवेयात् (आप० ध० १।३।१०।१८)। **अन्तराऽऽगच्छेदित्यर्थः।** तथाग्निराधेयो यथाऽऽहुतिर्न व्यवेयात् (आप० श्रौ० ६।१।२।६)। **व्यवेयात् प्रच्यवेत प्रस्कन्देत्।** अग्निं हित्वा भूमिं न प्राप्नुयादित्याह। वचनेन व्यवेतानां संयोगत्वं विहन्यते (अथर्व० प्रा० १।१०१ इत्यत्र वृत्तिः)। **व्यवहितानामित्यर्थः।** अव्यावृत्ति यज्ञाङ्गैरव्यवायं चेच्छेत् (खा० गृ० १।१।२५, द्रा० गृ० १।१।२७)। **अव्यवायमव्यवधानम्।** अमात्यानां राज्ञा सह समवाये पारतन्त्र्यं व्यवाये स्वातन्त्र्यम् (पा० १।४।३ भाष्ये)। **व्यवायः पृथग्भावः, असन्निधिः।** तैर्व्यवाये दुःखं समवाये च सुखम् (यो० सू० भाष्ये)। **व्यवायः पृथग्भावोऽसंसर्गः, विनाभवः।** अयमर्थः कथान्तरेण व्यवायाद् विस्मृतः स्यादिति पुनः स्मार्यते (इति वयम्)। **व्यवायो व्यवधानम्।** अट्कुप्वाङ्नुम्व्यवायेपि (पा० ८।४।२)। उक्तोऽर्थः। व्यवायं कुरुते नित्यं धीरो भूतानि धारयन् (भा० आश्व० २०।१०)। व्यवायः संचारः। **व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् इत्यमरः।** व्यवायिनोऽन्तरम् (पा० ६।२।१६६)। अत्र **व्यवायी व्यवधातेति वृत्तिः।** वस्त्रान्तरः। वस्त्रमन्तरं व्यवधातृ व्यवधायकं यस्य सः। व्यवायि तद्यथा भङ्गा फेनं चाहिसमुद्भवम् (शार्ङ्ग० सं १।४।१९)। **व्यवायि संचारि संक्रमि।** दारेषु चास्य व्यवायी भविष्यामि (यो० सू० २।३३ भाष्ये)। **व्यवायो मैथुनम्। मैथुनी भविष्यामि। मैथुनमाचरिष्यामीत्यर्थः।** प्राणानेव तन्नाशक्नोद् व्यवैतुम् (ऐ० ब्रा० ३।१४)। व्यवैतुं वियोजयितुम्।

**—कल् (कल गतौ संख्याने च)।** अथ संकलितव्यवकलितयोः करणसूत्रं वृत्तार्धम् इति लीला०। **व्यवकलितं हीनीकृतम्।**

**—कृत् (कृती छेदने)।** हत प्रहरताभीता विध्यत व्यवकृन्तत (भा० द्रोण० १६१।६)। खण्डशः कुरुतेत्यर्थः।

**—कृष् (कृष विलेखने)।** कृताशं कृतनिर्देशं कृतभक्तं कृतश्रमम्। भेदैर्ये व्यवकर्षन्ति ते वै निरयगामिनः (भा० अनु० २३।७०)॥ **व्यवकर्षन्ति=अपरञ्जयन्ति, विमुखी कुर्वन्ति।** व्यपकर्षन्तीति पाठान्तरम्। **अर्थस्तु निर्विशेषः।**

**—क्रुश् (क्रुश आह्वाने रोदने च)।** णचः स्त्रियामञ् (पा० ५।४।१४)। अत्र व्यावक्रोशीत्युदाहृतं वृत्तौ। अन्योन्यस्यावक्रोशनं व्यावक्रोशी भवति।

**—गाह् (गाहू विलोडने)।** तमुवाचाथ सावित्री रजनी व्यवगाहते (भा०

वन० २९७।७३)। व्यवगाहतेऽवतरति । व्यवयोरुपसर्गयोः शक्य एकतरो हातुम् । इहैवाग्रिमे श्लोके विगाढा रजनी चेयं निवृत्तश्च दिवाकर इति श्रवणात् । तत्र विगाढाऽवतीर्णेत्येवार्थः । दुर्योधनो महाराज व्यवागाहत तद्बलम् (भा० द्रोण० १५३।११) । सुदूरं प्राविशदित्यर्थः । तत्तोयं व्यवगाढवान् (भा० वन०) । तोये निमग्नवानित्यर्थः ।

—ग्रह् (ग्रह उपादाने)। अथ यदुत्तरं (कपालं) सा द्यौस्तद् व्यवगृहीतान्तमिव भवति । व्यवगृहीतान्तेव हि द्यौः (श० ब्रा० ७।५।१।२) । व्यवगृहीतान्तं नतान्तम् । व्यवगृहीतमित्युद्गृहीतस्य प्रत्यनीकम् ।

—छिद् (छिदिर् द्वैधीकरणे) । अत्राध्यवसायग्रहणेन संशयं व्यवच्छिनत्ति। व्यावर्तयतीत्यर्थः । शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली (काव्यादर्शे १।१०)। व्यवच्छिन्नाऽवच्छिन्ना विशिष्टा ।

—द्रु (द्रु गतौ) । यत्रापः प्रतीचीर्गार्हपत्याद् व्यवद्रवेयुः । (का० सं० २५।३) । स्यन्देरन्नित्यर्थः ।

—धा (डुधाञ् धारणपोषणयोः) । एवं च दीर्घसमाससङ्घटना...कदाचिद् रसप्रतीतिं व्यवदधाति (ध्वन्यालोके ३।६ इत्यत्र लोचने) । व्यवदधाति रुणद्धि, विलम्बयति । व्यवदधाति दर्भपिञ्जूलानि (शा० ब्रा० १८।८, ऐ० ब्रा० १।३) । इतस्ततो निदधातीत्यर्थः । चात्वालादपरेणाध्वर्युश्चमसानद्भिः पूरयित्वोदीचः प्रणिधाय हरितानि तृणानि व्यवदधाति (गो०ब्रा०उ० ४।६) । तृणैरास्तृणाति, तृणानि व्यवधानमास्तरणं करोतीत्यर्थः । भार्याश्च पुत्राश्च सुहृदश्च वसूनि च समेत्य व्यवधीयन्ते (गोरेसियो सं० रा० २।११४।१३) । व्यवधीयन्ते वियुज्यन्ते । एतां स्मृतिं ते...न ह्येष व्यवधात्कालः (भा० पु० १:६।४) । व्यवधात्=व्यवाधात्=अरुधत्=अन्तरा प्रत्यबध्नात् । आचमनानन्तरमेव भुञ्जीत न तु क्रियान्तरेण व्यवदधीत । अन्तरा क्रियान्तरं न कुर्यादित्यर्थः । आचमनभोजनयोरव्यवहितमानन्तर्यमिष्यत इत्याह । अस्यतितृषोः क्रियान्तरे कालेषु (पा० ३।४।५७) इत्यत्र द्व्यहतर्षं गाः पाययति । तर्षणेन गवां पानक्रिया व्यवधीयते इति वृत्तिः । व्यवधीयते विच्छिद्यत इत्यर्थः । शापव्यवहितस्मृतिः (शा०) । शापेन व्यवहिता विच्छिन्ना स्मृतिर्यस्य सः। व्यवहितजनाक्रन्दं भेरीरवैरतिभैरवैः (राज० १।३६६) । उक्तपूर्व एवार्थः । न्यक्कृतस्तिरस्कृतो वा जनाक्रन्दो लोकाक्रोशो यत्र तत् । भेर्यभिघातेनाधरीकृत आक्रन्दध्वनिरिति तात्पर्यार्थः । अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे (भा० पु० ३।२९।१२) । अव्यवहिता दैत्रान्तरमकृत्याऽविच्छिन्ना । व्यवहितार्थप्रत्ययं विलष्टम् । यद् विलम्बितार्थ-

प्रतीतिकं तत् क्लिष्टमुच्यत इत्यर्थः । शार्दूलचर्मव्यवधानवत्याम् (कु० ३।४४)। व्यवधानमावरणम् । महार्हशयनीयोचितः स सम्प्रत्यव्यवधानायामिलायां शेते । अहो कालविपर्ययः (इति वयम्) । अव्यवधानाऽनावरणाऽनास्तरणा । कुट्टिमे स्वमेवोत्तरीयकर्पटं व्यवधाय (दशकु०) । व्यवधानमास्तरणं कृत्वेत्यर्थः । तत्र न व्यवधातव्यम् (भा० शां० १३४।२) । व्यवधानं विघ्नोऽन्तरायः । स न कर्तव्य इत्याह । व्यवधाञोऽकर्मकः प्रयोगः ।

—धाव् (धावु गतिशुद्ध्योः)। व्यवधावेत्ततस्तूर्णं ससर्पाच्छरणादिव (शां० भा० २८७।४७) । व्यवधावेत् पलायेत । एवं भार्याश्च पुत्राश्च ज्ञातयश्च वसूनि च । समेत्य व्यवधावन्ति ध्रुवो ह्येषां विनाभवः (रा० २।१०५।२७) ॥ नानादिक्षु यान्ति ।

—धू (धूञ् कम्पने)। परोगव्यूति होतव्यस्तथा हैनं न व्यवधूनुते (काठक० ३७।११) । अवधूनोतीत्यर्थः । नार्थो विना । तानि बाणसहस्राणि चर्मणा व्यवधूय (हरि० ३।१।१२)। व्यवधूय=प्रत्यस्य, प्रतिक्षिप्य । परस्परज्ञाः संहृष्टा व्यधूताः सुनिश्चिताः । अपि पञ्चाशतं शूरा मृद्नन्ति महतीं चमूम् (भा० भीष्म० ३।८२८३) ॥ व्यवधूता दारादिष्वनासक्ताः ।

—नी (णीञ् प्रापणे) । (सोमग्रहान्) चमसेषु व्यवनीय (श० ब्रा० ५। १।२।१६) । एकैकशो निनीय आसिच्येत्यर्थः । विर्नानात्वे । अवोऽधोर्थे ।

—मुच् (मुच्लृ मोक्षणे) । सोऽधिरुह्य नरव्याघ्रः पादुके व्यवमुच्य च (रा० २।११२।२२) । व्यवमुच्य=अवमुच्य । विर्व्यर्थः । पादुकाभ्यामवरुह्येत्यर्थः ।

—लोक् (लोकृ दर्शने) । अतिथिजनदिदृक्षया व्यवलोकयतः (अवदा० जा० ७) । व्यवलोकयत इतश्चेतश्च विलोकयतः ।

—वद् (वद व्यक्तायां वाचि) । वाचं यच्छन्ति यज्ञमेव तद् यच्छन्ति यद् व्यववदेयुर्यज्ञं निर्ब्रूयुः (पञ्च० ब्रा० ६।७।११) । व्यववदेयुः=वाचं विसृजेयुः ।

—शद् (शद्लृ शातने) । अग्निर्व्यवशशादाग्नेर्व्यवशादमन्वसुरा व्यवशेदुः (श० ब्रा० २।१।२।१६) । अग्निरित्यग्निर्वेदिर्गृह्यते । व्यवशशाद=अवपपात ।

—शम् (शमु उपशमे) । यदङ्गारेषु व्यवशान्तेषु लेलायद्वीव चरति तद् देवानामास्यम् (आप० श्रौ० ६।३।६।२) ।

—सद् (षद्लृ विशरणगत्यवसादनेषु) । जत्रुदेशे भृशं वीरो व्यवासीदद्रथे तदा (भा० वन० १७।२२) । विशेषेणावसादं प्राप्तः । व्यवासीदद् इति लङि रूपम् ।

—सृज् (सृज विसर्गे) । इदमेवैतत् सर्वमिमाः प्रजा यथायथं व्यवसृजति (श० ब्रा० ४।३।१।२६) । व्यवसृजति क्रमेण युक्ताः करोति । तां (शक्तिं) व्यवासृजदाविध्य (भा० द्रोण० १४०।६६) । व्यवासृजत् अवासृजत् प्राहरत्

**प्रास्यत्** । दण्डव्यवसर्गयोश्च (पा० ५।४।२) । अत्र द्विशतिकां व्यवसृजति इति वृत्तावुदाहरणम् । दानं व्यवसर्गः । व्यवसृजति ददाति ।

**—सो (षो अन्तकर्मणि)** । वि पितापुत्रावावस्यतः (श० ब्रा० १३।२।४।४) । **व्यवस्यतः पृथग्भवतः** । अन्तशब्दः पृथक्त्वमपि ब्रूते यथा मैत्रेयीति होवाच याज्ञवल्क्यः कात्यायन्या तेऽन्तं करवाणीत्यत्र । अन्तो विभागः । अथ ते न व्यवस्यन्ति प्रणिपाताय धीमतः (भा० उ० ३।१३) । **न व्यवस्यन्ति नानुमन्यन्ते, न निर्णयन्ति, न निश्चिन्वन्ति** । न व्यवस्यति पाण्डूनां प्रदातुं पैतृकं वसु (भा० उ० ३।१२) । **उदितचर एवार्थः** । केचिदेनं व्यवस्यन्ति पितामहसुतं प्रभुम् (भा० शल्य० ४६।१८) । **व्यवस्यन्ति विजानन्ति**। भारं हि रथकारस्य न व्यवस्यन्ति पण्डिताः (भा० वि० ४६।४) । **उक्तोऽर्थः** । यो विचिन्त्य धिया धीरो व्यवस्यति स बुद्धिमान् (भा० आदि० १०५।२२) । **व्यवस्यति निश्चिनोति**। व्यवस्य सर्वमस्तीति नास्तिक्यं भावमुत्सृज (भा० वन० ३१।४०)। **व्यवस्य निश्चिनु । लोटि रूपम्** । सतीं त्वामहमत्यन्तं व्यवस्याम्यसतीं सतीम् (रा० २।१२।७६) । **उक्तोऽर्थः** । पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या (शा० ४।६) । **न व्यवस्यति न चिन्तयति, न बुद्धौ करोति, नेच्छति** । कस्त्वेतद् व्यवसेदार्यस्त्वदन्यः पुरुषाधमः (भा० द्रोण० १९८।१४) । **व्यवसेद्=व्यवस्येद्=कुर्यात्** । अपि वोढ्वन्धनादीनि परीतानि व्यवस्यति (भा० आश्व० १७।१३) । **व्यवस्यति करोति** । तथापि वक्तुं व्यवसाययन्ति मां निरस्तनारीसमया दुराधयः (कि० १।१८) । **व्यवसाययन्ति=उद्योजयन्ति** । साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः (गीता ९।३०) । **व्यवसितः कृतनिश्चयः । कर्तरि क्तः** । न ह्यव्यवसितः शत्रुं राक्षसं तं विशेषतः । समर्थस्त्वं रणे हन्तुम्...(रा० ४।२७।३६)।। **अव्यवसितोऽनुद्यमी** । श्रुत्वा तथा करिष्यामि व्यवसायं गिरां तव (भा० वन० २६०।३६) । **व्यवसायो निश्चयोऽवधारणम्** ।

**—स्था (ष्ठा गतिनिवृत्तौ)** । शब्दरूपाश्रया चेयं द्विलिङ्गता क्वचिदर्थभेदेनापि व्यवतिष्ठते (अर्धर्चाः पुंसि च २।४।१ इत्यत्र काशिका) । **व्यवतिष्ठते नियम्यते** । व्यवस्थितस्तं सुतमीक्षमाणः (रा० २।४०।५१) । **व्यवस्थितः स्वां गतिं निरुध्य स्थितः** ।

**—हृ (हृञ् हरणे)** । तौ व्यवाहरतां तत्र महात्मानौ महाबलौ । अन्योन्यमभिगर्जन्तौ गोष्ठेषु वृषभाविव (भा० वि० ३२।२४) ।। **व्यवाहरताम् प्राचरतां व्यचरताम् पर्यक्रामताम्** । तैः (शूरसेनैः) व्यवाहरदार्यात्मा मुहूर्तादिव सात्यकिः (भा० द्रोण० १४१।१०) । **उचितसमाचारं समाचरदित्यर्थः** । कथं कार्यविनिमयेन व्यवहरति मय्यनात्मज्ञः (माल० १) । **वर्तते आचरति** । व्यवहृपणोः समर्थयोः (पा०२।३।५७)। **इत्यत्र शतस्य व्यवहरतीति वृत्तावुदाहृतम्** । शतस्येति

कर्मणि शेषे षष्ठी। व्यवहरति पणते क्रयविक्रयव्यवहारं वा करोति। शलाकां व्यवहरतीति तत्र प्रत्युदाहरणं स्थितम्। व्यवहरति गणयतीति दीक्षितः। परिगणयतीति न्यासकारः। विक्षिपतीति तु वृत्तिकारः। आपदि व्यवहरेत् पण्यानाम् (ब्राह्मणः) (आप० ध० १।७।२०।११)। क्रयश्च विक्रयश्च व्यवहारः। वंशकठिने व्यवहरति वांशकठिनिकः। कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति (पा० ४।४।७२) इत्यत्र वृत्तावुदाहृतम्। व्यवहारः क्रियातत्त्वम्। वंशा वेणवः कठिना यस्मिन् देशे स वंशकठिनः। तस्मिन्देशे या क्रिया यथानुष्ठेया तां तथाऽनुतिष्ठतीत्यर्थः। इदमेव क्रियातत्त्वमित्युक्तं वृत्तिकारेण। नाराजके जनपदे सिद्धार्था व्यवहारिणः (रा० २।६७।१६)। कमप्यर्थमुद्दिश्यान्योन्यं विवदमाना व्यवहारिणः, अथवा पण्यजीविनः। वि नानार्थेऽव सन्देहे हरणं हार उच्यते। नानासन्देहहरणाद्व्यवहारः प्रकीर्तितः (इति कातीयम्)॥ ऋणादीन्यष्टादश विवादस्थानानि व्यवहाराः। अर्थपतिर्व्यवहर्तुमर्थगौरवादभियोक्ष्यते (दशकु०)। व्यवहर्तुं व्यवहारायाऽधिकरणे निर्णयाय।

व्याङ् (वि+आङ्)

—आप् (आप्लृ व्याप्तौ)। स्वेदापूरो युवतिसरितां व्याप गण्डस्थलानि (शिशु० ७।७४)। व्याप व्यानशे। तेजोमहिम्ना पुनरावृतात्मा तद् (आसनं) व्याप चामीकरपिञ्जरेण (रघु० १८।४०)। कात्स्न्येनाध्यासाञ्चक्रे। उपाधिविधुरं नियतं साहचर्यं व्याप्तिः। तस्मात्तमेव होतारं वृणीष्वेत्येतस्य लोकस्य व्याप्तये (गो० ब्रा० पू० २।२४)। विशिष्टाऽऽप्तिर्व्याप्तिः।

—कू (कूङ् शब्दे)। व्याकूतय एषामिताथो चित्तानि मुह्यत (अथर्व० ३।२।४)। व्याकूतयो विरुद्धाः सङ्कल्पाः।

—कृ (डुकृञ्)। एता एना व्याकरं खिले गा विष्ठिता इव (अथर्व० ७।११५।४)। व्याकरं विविच्य आकरोमि। द्विधा करोमीत्यर्थः। व्याकरोमि हविषाहमेतौ (अथर्व० १२।२।३२)। पृथक् करोमीत्यर्थः। स्थशो जन्मानि सविता व्याकः (ऋ० २।३८।८)। दैवं चैव तत् पित्र्यं च (कर्म) व्याकरोति (श० ब्रा० १३।८।२।६)। व्याकरोति विविनक्ति। दृष्ट्वा रूपे व्याकरोत्सत्यानृते प्रजापतिः (वा० सं० १९।७७)। व्याकरोत् व्यवेचयत्, विविक्तस्वरूपे अकरोत्। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुद्यते (तै० सं० ६।४।७।४)। व्याकरोत् प्रकृतिप्रत्ययादिविभागेन व्यभजत्। येनैव वाचं व्याकरोति (ऐ० ब्रा० ५।२२)। शब्दमुच्चारयतीत्यर्थः। तन्नामरूपाभ्यामेव व्याक्रियत (श० ब्रा० १४।४।२।१५)। नामरूपभेदेनात्मानं भिन्नवत्। अन्यैरेवैनं (अश्वं) तत्पशुभिर्व्याकुर्वन्ति (श० ब्रा० १३।२।८।१)। श्रेयस्तया विशिषन्ति पृथक् कुर्वन्तीत्याह। हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनु-

प्रविश्य नामरूपे व्याकरवाणि (छां० उ० ६।३।२)। अथ खल्वयं पुरुषो मिथ्या व्याकरोति (व० धर्म० २२।१)। व्याहरतीत्यर्थः। समान एव कर्मन्व्याक्रियते (श० ब्रा० १।८। ३।६)। वक्तव्यं चैव यत्तत्र तद्भवान् व्याकरोतु नः (रा० ५।५६।५)। **व्याकरोतु व्याख्यातु व्याचष्टाम्**। एवमुत्सुकवशात्पयोधरं व्याचकार हरिदिग्विलासिनी (रामचरिते २।८२)। **व्याचकार प्रकटयामास**। मातॄणामेकां वत्सेन व्याकृत्य (श० ब्रा० १।७।१।४)। **व्याकृत्य पृथक्कृत्वा**। अतिनीय मानुषं कालं सायन्दुग्धमपररात्रे प्रातर्दुग्धमपराह्णे व्याकृत्या एव दैवं चैवैतन्मानुषं च व्याकरोति (श० ब्रा० १।१।२।१६)। **व्याकृत्यै विवेकाय पार्थक्याय**। स्वमतव्याक्रियैव परमतनिराक्रिया (इति विदुषां सत्त्ववतां दर्शनम्) **व्याक्रिया व्याख्यानम्**। व्यवसायात्मिका बुद्धिर्मनो व्याकरणात्मकम् (भा० शां० २५२।११)। **व्याकरणं संशय इति नीलकण्ठः**। **एतस्य साधुत्वे सन्दिह्महे वयम्**। स्वलक्षणं तु यो वेद स मुनिः श्रेष्ठ उच्यते। सर्वार्थानां व्याकरणाद् वैयाकरण उच्यते (भा० उ० ४३।६०-६१)॥ **व्याकरणात् प्रकटीकरणात्**। श्रुतौ संक्षिप्तयोर्दर्शपूर्णमासयोर्व्याकरणेन (म्यूलरप्रणीते सङ्ग्रहे)। **सविस्तरेण व्याख्यानेन**। गर्भव्याकरणम्। **व्याकरणं रचना कल्पना निर्माणमाकारग्रहणम्**। इति पूर्वश्लोके ब्रह्माञ्जलिशब्दार्थव्याकारः (मनु० २।७१ इत्यत्र कुल्लूकः)। **व्याकारो व्याक्रिया स्पष्टीकरणम्**। तस्माद् व्याकरणीय एवायं प्रश्नः (यो० सू० ४।३३ भाष्ये)। **व्याकरणीयो व्याख्यानीयः, विवरीतव्यः**। ततः पदं प्रविभज्य व्याकरणीयं क्रियावाचकं वा कारकवाचकं वा (यो० सू० ३।१७ भा०)। **उक्तोऽर्थः**।

**—कृष् (कृष विलेखने)**। स्रस्तव्याकृष्टवसनाः (रा० ५।५४।१५)। **व्याकृष्टं व्यपरोपितम्**।

**—क्रुश् (क्रुश आह्वाने रोदने च)**। हा प्रिये क्वासि नष्टासि व्याक्रोशन्न्यपतत् क्षितौ (रा० ३।६८।२)। **व्याक्रोशन् उच्चैराक्रोशन्**।

**—क्षिप् (क्षिप प्रेरणे)**। ततो ज्यामभिमृज्याशु व्याक्षिपद् गाण्डिवं धनुः (भा० कर्ण० ७४।२)। **व्याक्षिपद् आतनोत्**। **आधूनोत्**। अथ प्रहस्याधिरथिर्व्याक्षिपद् धनुरुत्तमम् (भा० कर्ण० ७८।२१)। **उक्तोऽर्थः**। अधिज्यं तरसा कृत्वा गाण्डीवं व्याक्षिपद्धनुः (भा० वि० ४५।२६)। **व्याक्षिपत् टणत्-कारितवानिति नीलकण्ठः**। संहृत्य भीमसेनाय व्याक्षिपत्सहसा करम् (भा० वन० १०६)। संप्रयुद्धौ हि तौ दृष्ट्वा बलिनौ रामरावणौ। व्याक्षिप्तहृदयाः सर्वे परं विस्मयमागताः (रा० ६।६१।३)॥ **व्याक्षिप्त-हृदया हृतहृदयाः**। **अव्याक्षिप्तोऽक्षिपल्लेखं** स स्नानकलशे ततः (राज० ३।३७१)। **अव्याक्षिप्तः समाहितः**। चित्तव्याक्षेपादिना पारोक्ष्यम् (परोक्षे लिट् ३।२।११५ सूत्रे दीक्षितः)। **व्याक्षेपो व्यासङ्गः विषयान्तरगमनम्**। **अव्याक्षेपो भविष्यन्त्याः**

कार्यसिद्धेर्हि लक्षणम् ( रघु० १०।६ ) । अव्याक्षेपोऽविलम्बः । कथमेतावन्ति दिनानि शत्रुजये व्याक्षेपो भविष्यति (वि० पु० ४।१३।४८)। उक्तोऽर्थः । बहुव्याक्षेपयुक्तानि त्वामाह वचनानि सः (भा० शां० १५६।३)। व्याक्षेप आक्षेपः । यत्राभिहिते लक्षणे प्रवादान्तरव्याक्षेपात् तत्त्वनिश्चयो न भवति तत्र परपक्षव्युदासार्थं परीक्षाऽधिक्रियते (त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरिति वात्स्यायनीये वाक्ये प्रशस्तपादभाष्ये कन्दलीकारस्य वचनम्)। तत्र व्याक्षेपोऽन्तरा क्षेपः पातः । यावदहमपि शयनमुपगम्य नयनव्याक्षेपं करोमि (बालच०२)। शयनं शयनीयम्। नयनव्याक्षेपो विषयान्तरेभ्यो दृशोर्व्यपवृत्तिः।

—ख्या (ख्या प्रकथने)। व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्व (श० ब्रा० १४।५।४।४)। व्याख्यास्यामि विवरीष्यामि। रावणस्यापि ते जन्म व्याख्यास्यामि जनेश्वर (भा० वन० २७४।१०)। विस्तरेणाख्यास्यामीत्यर्थः । इदं शतसहस्रं हि श्लोकानां पुण्यकर्मणाम्। सत्यवत्यात्मजेनेह व्याख्यातममितौजसा (भा० आदि० ६१।१४)। व्याख्यातं पठितम्। व्याचख्युश्चैव हतं प्रहस्तम् (भट्टि० १४।११३)। ज्ञापयामासुः, वेदयाञ्चक्रुः। विद्वद्वृन्दैः···व्याख्याता सा विद्युन्माला (श्रुत० १५)। व्याख्याता कथिता, उदिता। संज्ञितेति तात्पर्यार्थः। तस्य मतिर्जाता व्याख्यातुं पितरं स्वकम् (रा० १।६।२७)। व्याख्यातुं सविस्तरं वर्णयितुम्।

—चक्ष् (चक्षिङ् व्यक्तायां वाचि)। ऋचां सूक्तं व्याचक्षाणः (श० ब्रा० १३।४।३।३)। व्याख्यां कुर्वाणः। इति शुश्रुम पूर्वेषां ये नस्तद् व्याचचक्षिरे (केन १।३)। व्याख्यातवन्त इत्यर्थः।

—दा (डुदाञ् दाने)। एतमु एवान्ततोऽवित्त्वोत्क्रामति व्याददात्येवान्ततः (छां० उ० १।२।६)। व्याददाति व्यात्तास्यो भवति। मुखं व्याददाति (आङो दोऽनास्यविहरणे १।३।२० सूत्रे वृत्तिस्थं प्रत्युदाहरणम्)। विहरति विवृणोतीत्यर्थः। नदी कूलं व्याददाति। विदारयतीत्यर्थः। विपादिकां व्याददाति। पादस्फोटो विपादिका। व्याददाति विपाटयति। व्यादत्ते पिपीलिका पतङ्गस्य मुखम्। विवृणोतीत्यर्थः। मुखं व्यादाय स्वपिति। व्यादाय विवृत्य।

—दिश (दिश अतिसर्जने)। तच्छ्रुत्वा राघवो वाक्यं लक्ष्मणं व्यादिदेश ह (रा० ३।४।२४)। व्यादिदेश उवाच। दिशिरुच्चारणक्रिय इति भाष्यम्। किन्तु व्यादिश मे देशं सोदकं बहुकाननम्। यत्राश्रमपदं कृत्वा···(रा० ३।१३।११)॥ व्यादिश, निर्दिश, कथय। समीरणो नोदयिता भवेति व्यादिश्यते केन हुताशनस्य (कु० ३।२१)। व्यादिश्यत आदिश्यते आज्ञाप्यते। अतिरिक्तो विः। व्यादिदेशान्नपानानि शय्याश्चाप्रतिमानुषाः (भा० आश्व ८५।२०)।

**दीयन्तामित्यादिदेशेत्यर्थः**। आसनं चास्य भगवान्वसिष्ठो व्यादिदेश ह (रा० १।५२।२)। व्यादिदेश सबाह्यानां भक्ष्य-भोज्यमनुत्तमम् (भा० भीष्म० १। १०)। **उक्तपूर्व एवार्थः**। यद् व्यादिशेत्कार्यमवेक्ष्य धर्मम्… (रा० २।२१।५६)। **व्यादिशेत्=आदिशेत्**। शीघ्रं व्यादिश नो राजन्वधायैषाम् (रा० ५।८६।५१)। **उक्तोऽर्थः**। दृष्ट्वा च विश्वकर्माणं व्यादिदेश पितामहः। सृज्यतां प्रार्थनीयैका प्रमदा (भा० आदि० २११।११)॥ **पूर्वेण समानोऽर्थः**। नकुलं सहदेवं च व्यादि-देश द्विजान्प्रति (भा० वन० १७६।४८)। **व्यादिदेश विससर्ज, प्रेषयामास**। व्यादिशत् सैनिकान्कांश्चित् ऋष्यशृङ्गाय। **उदितचर एवार्थः**। प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् (तै० सं० १।७।३।२)। **विभज्याददात्**। यज्ञेषु तेषु तेष्वा-**भजत देवानित्यर्थः**। नक्तंचराणां भूतानां व्यादिदेश बलिं तदा (भा० आश्व० ६५।६)। **व्यादिदेश जहार ददौ**। प्रजापतिर्देवेभ्यो भागधेयानि व्यादिशत् (काठक० १०।१०)। **विभज्याददात्। व्यतरत्**। तं (पुरोडाशं) यजमानो व्यादिशतीदं ब्रह्मण इदं होतुरिदमध्वर्योरिदमाग्नीध्र इति (आप० श्रौ० ३।१। ३।३)। **व्यादिशति। विविधं विविच्य आदिशति निर्दिशति**। एकादश (गाः) दक्षिणा व्यादिशति (का० श्रौ० २२।१५)। **निर्दिशतीत्यर्थः**। अपश्यत महा-त्मानं (मणिभद्रं) व्यादिशन्तं (देवतानां) युधिष्ठिर (भा० शां० २७१।१५)। **देवेभ्यः फलयाचकान् निवेदयन्तम्। अथवा देवाज्ञया याचकेभ्यः फलानि समर्पयन्तम्** (नीलकण्ठः)। व्यादेशः सर्वयोधानामद्यैव क्रियतामिह (रा० ५। ८१।५४)। **व्यादेश आदेशः**। अन्वेषणेऽनिरुद्धस्य चरान्व्यादिष्टवांस्तदा (हरि० २।१२१।३५)। **व्यादिष्टवान् आदिष्टवान्। स चरान् दिष्टवांस्तदेति पाठान्तरम्**। ते ह देवा ऊचुः। व्यादिष्टोऽयं देवताभ्यो यज्ञः (श० ब्रा० ४।१।२।७)। **विभज्य वितीर्ण इत्यर्थः**। ततः क्रमेण राज्यानि व्यादेष्टुमुपचक्रमे (हरि० १।४।१)।

**—दीप् (दीपी दीप्तौ)**। क्षणेन सर्वे विहिताः प्रदीपा व्यादीपयन्तो ध्वजिनीं तवाशु (भा० द्रोण० १६३।१७)। **व्यादीपयन्तः=सविशेषं प्रकाशयन्तः**।

**—दृश् (दृशिर् प्रेक्षणे)**। व्योम्नि प्रविष्टतमसा न स्म व्यादृश्यते पदम् (भा० पु० ३।१७।६)। **व्यादृश्यते व्यक्तं दृश्यते**।

**—धा (डुधाञ् धारणपोषणयोः)**। स चेद् व्याधीयीत…सर्वं प्राश्नीयात् (बौ० ध० २।१।१।२०)। **व्याधीयीत व्याधितः, उपतप्तः स्यात्, रुज्येत**। एतद्वै परमं तपः। यद् व्याहितस्य तप्यते (श० ब्रा० १४।८।११।१)। **व्याहितो व्याधितो रुग्णः**। प्रेतो यन्तु व्याध्यः (अथर्व० ७।११६।२)। **व्याध्यः=विशिष्टा मनो-निष्ठाः पीडाः। आधय इत्यर्थः**। विविधान्याध्यानानि वेति सायणः। **व्या-धीयतेऽपथ्यैरिति स्वामी। व्याधीयते विरुद्धो विपरीतः सञ्जन्यते**।

—धु (धुञ् कम्पने)। करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरम् (शा० १।२१)। व्याधुन्वत्या इतस्ततश्चलयन्त्याः। व्याधूयन्ते निचुलतरुभिर्मञ्जरीचामराणि (विक्रम० ४।४)। विविधं वीज्यन्ते।

—नी (णीञ् प्रापणे)। यदि प्रतिप्रस्थातुः पृषदाज्यं भवति तस्य द्वेधा व्यानयते (श० ब्रा० २।५।२।४१)। स्रुक्षु प्रत्येकमासिञ्चतीत्यर्थः।

—पद् (पद गतौ)। पवित्रं हि सोमो न तस्मिन्भक्षिते पात्रं व्यापद्यते (मी० शा० भा० ३।५।२२)। व्यापद्यते दुष्यतीत्यर्थः। न हि यत्र महाबाहुर्वासुदेवो व्यवस्थितः। किञ्चिद् व्यापद्यते तत्र…(भा० द्रोण० ८४।३४)। व्यापद्यते हिंस्यते हीयते विक्रियते। तेषामन्तर्हितधर्माणामधर्म-प्रधानानामपक्रान्तदेवतानामसवो व्यापद्यन्ते (चरक० विमान० ३।२४)। व्यापद्यन्ते विक्रियन्ते। यत्र विसर्जनीयो व्यापद्यते (ऋ० प्रा० ४।११)। व्यापद्यते लुप्यते। न श्रूयते इत्यर्थः। शीतोष्णवातवर्षाणि खलु विपरीतान्योषधीर्व्यापादयन्त्यपश्च (सुश्रुत० १।२१।११)। व्यापादयन्ति दूषयन्ति विकृतिं नयन्ति। अधर्मोत्तरता नाम कृत्स्नं व्यापादयेज्जगत् (भा० आदि० ३७।२०)। व्यापादयेत् प्रणाशयेत्। यदि तावन्तरेणान्यो दीक्षेत लोकमोपधिभिर्व्यापादयेत् (गो० ब्रा० पू० ४।२)। व्यापादयेद् विहीनं कुर्यात्। व्यापन्नेऽस्मिन् महत्यर्थे यत्नः श्रेयस्तदुच्यताम् (भा० सौप्तिक० १।६६)। व्यापन्ने व्यूढे विनष्टे। अव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम् (मेघ० १।१०)। अव्यापन्नाम्=जीवाम्, जीवन्तीम्, ध्रियमाणाम्। औदासीन्यं न युक्तं प्रियसुहृदि गते मत्कृते चातिघोराम्। व्यापत्ति…(मुद्रा० ६।२१)। व्यापत्ति विपत्तिम्। तस्य व्यापदमनुशोचत्यात्मव्यापदं मन्वानः (यो० सू० २।५ भाष्ये)। व्यापदं विपत्तिम्। योनिव्यापादो बीजोपघातश्च (न्याय० २।१५८ वात्स्यायन भा०)। योनिव्यापादो योनिविकारः। व्यापादो द्रोहचिन्तनम् (अमरः)। इत्युदीर्य नृपः सुज्जेः सज्जो व्यापादसिद्धये (राज० ८।२११०)। व्यापादो निबर्हणम् प्रमापणम्। व्यापत्तिं कर्मणां दृष्ट्वा जुगुप्सन्ति जनाः सदा (भा० शां० २६३।३४)। कर्मणां कर्मफलानां व्यापत्तिरसिद्धिर्विलोपो विनाशः। प्रधानद्रव्यव्यापत्तौ साङ्गावृत्तिस्तदादेशात् (का० श्रौ० १।७।२७)। व्यापत्तिर्विनाशः। अथाप्यन्तव्यापत्तिर्भवति ओघो मेघो नाधो गाधो वधूर्मध्विति (नि० २।२१)। व्यापत्तिर्विकारः। हन्तेः पाठार्थे वर्तमानस्य…वर्णव्यापत्त्या ओघशब्दवद् हकारस्थाने घकारः (नि० १।१।६ इत्यत्र दुर्गः)। उक्तोऽर्थः। तस्मात्तदा गर्भस्य जन्म व्यापत्तिमद् भवति (चरक० शारीर० ४।२४)। मरणाय भवतीत्यर्थः। यदि पङ्कमग्नां समुद्धरतां परिश्रमेण गोर्व्यापत्तिः स्यान्न तदोद्धर्तारो दुष्येयुः। व्यापत्तिर्मरणम्। न तत्र कर्मणो व्यापत् कथं

चिदपि विद्यते (भा० द्रोण० १११।३२)। व्यापद् विनाशः फलवैधुर्यम् ।

—पृ (पृङ् व्यायामे)। प्रायेणायं व्याङ्पूर्वः। अद्यत्वे कथमात्मना व्याप्रियसे। (इति वधम्)। क्व कर्मण्यासक्तिमान् भवसीत्याह। कथमात्मा व्यापार्यते। पूर्वेण समानोऽर्थः। व्यापारयामास करं किरीटे (रघु० ६।१९)। व्यापारयामास हस्तं न्यास। (उमामुखे) व्यापारयामास विलोचनानि (कु० ३। ६७)। लोचनत्रितयं प्रेरयामास पातयामासेत्यर्थः। मा व्यापृतः परकार्येषु भूस्त्वम् (भा० सभा० ६४।६)। परकार्येषु मा स्म प्रसाङ्क्षीः, मात्मानं व्यापीपरः।…वनद्विपानां त्रासार्थं…व्यापारितः शूलभृता (रघु०२।३८)। व्यापारितो नियुक्तः। व्यापारितं शिरसि शस्त्रमशस्त्रपाणेः (वेणी० ३।१९)। व्यापारितं प्रयुक्तं प्रहृतम् प्रास्तम् ।

—भाष् (भाष व्यक्तायां वाचि)। व्याभाषमाणाश्चान्योन्यम् (भा० वन० २५२।१५)। व्याङोर्योऽर्थः कर्मव्यतिहारलक्षणः सोऽन्योन्यमित्यनेनैवोक्तः। तेन शब्दोपजनः केवलं नार्थोपजनः। इङ्गितानां प्रकारैश्च रूपव्याभाषणेन च (रा० ४।२।२४)। व्याभाषणं विविधमाभिमुख्येन भाषणम्। तत्तत्प्रसङ्गे दीयमानेनोत्तरेणेत्यर्थः।

—मृश् (मृश आमर्शने। आमर्शनं स्पर्शः)। तेषां भुजपरामर्श-व्यामृष्ट-परिघाशनि (राक्षसानां बलम्) (रा० ६।७५।६०)। व्यामृष्टाः संस्पृष्टाः परिघाः परिघातनाः।

—यम् (यम उपरमे)। व्यायच्छत्स शरान्कर्णः कुन्ती-पुत्र-जिघांसया (भा० द्रोण० १४०।७३)। व्यायच्छत् अक्षिपत्, प्रास्यत्। ब्राह्मणश्च शूद्रश्च चर्मकर्ते व्यायच्छेते (तै० ब्रा० १।२।६)। व्यायच्छेते विवदेते कलहायेते। शूद्रार्यौ चर्मणि परिमण्डले व्यायच्छेते (का० श्रौ० १३।३।९)। मदीयमिदं मदीयमिदमिति स्पर्धया स्वामिमुखं बलादाकर्षत इत्यर्थः। विवदेते कलहायेते इति तु कश्चिदन्यः। राष्ट्रे व्यायच्छन्ते येऽश्वं रक्षन्ति (श० ब्रा० १३।१।६। ३)। राष्ट्रे राष्ट्रस्यार्थे व्यायच्छन्ते संग्रामयन्ते इत्यर्थः। अन्योन्यस्पर्धया राजन् व्यायच्छन्त महारथाः (भा० भीष्म० ४४।२४)। व्यायामं चक्रुरित्यर्थः। व्यानो व्यायच्छते येन (हरि० १।४०।५८)। व्यायामं बलसाध्यं कर्म करोतीत्यर्थः। इदं श्रेयः परमं मन्यमाना व्यायच्छन्ते मुनयः (भा० वन० १८६। २६)। व्यायच्छन्ते परमं यतन्ते। उद्यच्छन्ते। उद्यममाचरन्ति। स कस्मात्त्वं जानतां ज्ञानवान्सन् व्यायच्छसे सञ्जय कौरवार्थे (भा० उ० २९।१७)। व्यायच्छसे निग्रहं करोषीति नीलकण्ठः। ततो व्यायच्छतामस्त्रैः पृथक्पृथग-

जिह्मगैः (भा० द्रोण० १२९।३९)। व्यायच्छतां प्रहरताम्। वरं व्यायच्छतो मृत्युर्न गृहीतस्य बन्धने (मृच्छ० ६।१७)। व्यायच्छतो युध्यमानस्य। तस्य व्यायच्छमानस्य रामस्यार्थे स रावणः (रा० ३।५१।४१)। उक्तोऽर्थः। अन्ये तु वीरा नृपपुत्रपौत्राः कृष्णागतैर्नेत्रमनःस्वभावैः। व्यायच्छमाना ददृशुर्न तान्वै सन्दष्टदन्तच्छदताम्रनेत्राः (भा० आदि० १८७।११)। व्यायच्छमाना व्याददानाः। चक्षुः प्रसार्य कृष्णां द्रौपदीमेव ददृशुर्न पाण्डवान्। व्यश्वी गदाव्यायतसम्प्रहारी (रघु० ७।५२)। व्यायतो दीर्घः। कंसोपि कोपरक्ताक्षः प्राहोच्चैर्व्यायतान्नरान् (वि० पु० ५।२०।८२)। तन्न मे दानातिशयव्यवसाये विघ्नाय व्यायन्तुमर्हन्ति भवन्तः (अवदा० जा० २)। व्यायन्तुम् उद्योक्तुम् उद्यन्तुम्। व्यायामेन परीप्सस्व जीवितं कौरवात्मज (भा० वि० ६९।६)। व्यायामेन नित्यं देशान्तरसंचारेण। रक्षांसि व्यायामे सहामहे (अथर्व० २।४।४)। व्यायामे संचरणे। सहामहेऽभिभवामः। अन्ये साम प्रशंसन्ति व्यायाममपरे जनाः (भा० शां० २१।७)। व्यायामो युद्धम्। व्यायामकृतसंकल्पः सरयूमन्वगां नदीम् (रा० २।६३।२०)। व्यायामो मृगयाविहारः। श्रमव्यायामकुशलाः समपद्यन्त यौवनम् (भा० आदि० १०९।१८)। व्यायामो बाहुयुद्धाद्यभ्यासः। व्यायामं मुष्टिभिः कृत्वा तलैरपि समागतैः (भा० वन० १६७।४०)। व्यायामः सङ्घट्टनम्। व्यायामसहमत्यर्थम् (भा० वि० )। आकर्षणसमर्थम्।

—रभ् (रभ राभस्ये)। यदृचैव हौत्रं क्रियते यजुषाऽऽध्वर्यवं साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवति (ऐ० ब्रा० ५।३३)। व्यारब्धा सम्यग् दृढं वा सर्वतो वा धृता भवति।

—वर्ण् (वर्ण वर्णक्रियाविस्तारगुणवचनेषु)। हर्षराजाश्रया चर्चाकथा व्यावर्णयिष्यते (राज० ७।८७३)। व्यावर्णयिष्यते। उपवर्णयिष्यते, विस्तरेण वर्णयिष्यते। व्यावर्णितमिदं चेष्टमलङ्कारतयैव नः (काव्या० २।३६७)। उक्तोऽर्थः।

—वृ (वृञ् वरणे)। व्यावृणु वरवर्णिनि विवक्षितम् (हर्ष० प्र० उच्छ्वासे)। प्रकटयेत्यर्थः। गाण्डीवमुक्तैरिपुभिर्महात्मा सर्वा दिशो व्यावृणोदप्रमेयः (भा० द्रोण० १४५।९३)। व्यावृणोद् विशेषेणाच्छादयत्।

—वृज् (वृजि वृजी वर्जने)। तामन्नाद्याय व्यावृज्यासते (पञ्च० ब्रा० १०।३।९)। तां चतुर्धा व्यावृज्य गायेत् (षड्० ब्रा० २।२)। व्यावृज्य विभज्य। ऊरुवातविनिर्भिन्ना द्रुमा व्यावर्जिताः पथि (भा० वन० १७९।५२)। व्यावर्जिता भुग्नाः।

—वृत् (वृतु वर्तने)। व्यावर्तत नदी भीता हलमार्गानुसारिणी (हरि०

२।४६।३५)। व्यावर्तत विविधं प्रवोढुं प्रवृत्ता। बुद्धिर्व्यावर्तते चास्य विनाशे प्रत्युपस्थिते (भा० आश्व० १७।७)। व्यावर्तते निवर्तते परावर्तते, अपैति। युगेष्वावर्तमानेषु धर्मो व्यावर्तते पुनः। धर्मे व्यावर्तमाने तु लोको व्यावर्तते पुनः (भा० वन० १४९।३६)॥ व्यावर्तते आवर्तते आवृत्त्या पुनरुपतिष्ठते। समाना ऋतव एकेन पदेन व्यावर्तन्ते (तै० सं० ५।३।१।२)। व्यावृत्ता व्यतिरिक्ता भिन्ना भवन्ति। वाक् सृष्टा न व्यावर्तत (काठक० २७।३)। न व्यावर्तत—अव्याकृताऽऽसीत्। द्वा वा एता अस्य पन्थाना अन्तर्बहिश्चाहोरात्रेणैतौ व्यावर्तेते (मैत्र्युप० ६।१)। व्यावर्तेते अहोरात्रेण=अह्ना रात्र्या चात्मानं विविङ्क्तः। लौकिक्या वाचा व्यावर्तते ब्रह्म (आप० ध० १।४।१३।७)। मिश्रं न भवतीत्यर्थः। ते समावद्वीर्या एवासन्न व्यावर्तन्त (ऐ० ब्रा० ३।४९)। विवादं न व्यवातिष्ठिपन्, न समापयन्। अस्त्रे ते वारुणाग्नेये ताभ्यां बाणसमाहिते। न यावदभ्यपद्येतां व्यावर्तदथ भास्करः (भा० द्रोण० ९८।५३)॥ व्यावर्तत मध्याह्नतः परावृत्तोऽभूत्। अवालम्बत। संशयः…हृदि व्यावर्तते लोलः कल्लोल इव सागरे (यो० वा० ४।२१।२)। व्यावर्तते भ्राम्यति। ताः सृष्टाः पराच्य एवायन् न व्यावर्तन्त (ऐ० ब्रा० ३।३६)। ताः (प्रजाः) न व्यावर्तन्त न पुनरागताः। मखस्य शिरोसीति पिण्डं कृत्वा यथाभागं व्यावर्तेथामिति विभज्य (आप० श्रौ० १।८।२४।५)। व्यावर्तेथाम्=पृथग्भवेतम्। शुक्लादयो हि गवादिकं सजातीयेभ्यः कृष्णगवादिभ्यो व्यावर्तयन्ति (सा० द०)। व्यावर्तयन्ति पृथक्कुर्वन्ति। व्यावर्तये रथं तूर्णं नदीवेगमिवार्णवात् (भा० कर्ण० २६।१४)। व्यावर्तये निवर्तये। इमे जीवा वि मृतैराववृत्रन् (ऋ० १०।१८।३)। व्याववृत्रन्=व्यावीवृतन्। विविञ्चन्ति पृथक्कुर्वन्त्यात्मानमित्यर्थः। व्यावर्तमानं तु महद् भवद्भिः पुण्यकीर्तिभिः। धृतं यदुकुलम्…(हरि० २।२२।१९)। व्यावर्तमानम्=विनश्यत्। व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता (रघु० १।२७)। व्यावृत्ता निवृत्ता व्यपगता। (सा मृता) व्यावृत्तनेत्रभ्रमरा पद्मिनीव हिमाहता (कथा० ५२।१५२)। व्यावृत्तं लक्ष्म सोमस्य (भा० भीष्म० २।३२)। व्यावृत्तम् अपगतम्। व्यावृत्तेऽर्यम्णि (भा० द्रोण० १।२१)। परावृत्ते सूर्ये लम्बमाने दिवाकरे। लभे जातमशाखाजं बहुपर्णशाखमप्रतिशुष्काग्रमसुषिरमव्यावृत्त० (आप० श्रौ० ७।१।१७)। अव्यावृत्तोऽवलितः। पलाशादेरव्यावृत्तस्य यूपं कुर्यादित्याह। सोमपीथस्य चैषा सुरापीथस्य च व्यावृत्तिः (ऐ० ब्रा० ८।८)। व्यावृत्तिर्भेदः। अव्यावृत्तिं यज्ञाङ्गैरव्यवायं चेच्छेत् (खा० गृ० १।१२५)। अव्यावृत्तिम् अपराङ्मुखताम्। ऋतुव्यावृत्तौ सूयवसे (आप० श्रौ० ७।८।२८।७)। व्यावृत्तौ परिवृतौ। न श्रद्दधाम्युदधनग्रहणं त्वयोक्तं व्यावर्तनं करतलैरिव मन्दरस्य

(प्रतिज्ञा० २।६)। व्यावर्तनं भ्रमणम्। य एवं विद्वान् व्यावृत्य दक्षिणां प्रतिगृह्णाति (तै० ब्रा० २।२।५।१)।

—व्यध् (व्यध ताडने)। विस्मयाच्चोत्तरीयाणि व्याविध्यन्सर्वतो नृपाः (भा० भीष्म० १२१।२८)। व्याविध्यन् प्राक्षिपन्। गर्भो व्याविद्धं परिवर्तते (का० सं० खिल० रक्त० श्लो० ५७)। इदं क्रियाविशेषणम्। आविद्धं कुटिल भुग्नमिति चामरः। तेन विरत्रातिरिक्तः सुपरिहरः। क्व च शस्त्रं क्व च क्षात्रं तपः क्व च वनं क्व च व्याविद्धमिदम् (रा० ३।६।२७)। व्याविद्धं परस्परव्याहतम्, संकुलम्। अथ त भग्नसर्वाङ्गं व्याविद्धनयनाम्बरम्। (भा० वि० २२। ७७)। परित्यक्तनेत्राभिधानदुकूलवसनम्। चिक्षेप तरसा वीरो व्याविध्य (गदां) सत्यविक्रमः (भा० वन० १६।१६)। व्याविध्य भ्रमयित्वा। अभ्याहतो घटः, येन तस्योपरि शतकपालो व्याविद्धसक्तुर्निपतितः (तन्त्रा० ५।१)। व्याविद्धसक्तुर्विकीर्णसक्तुः। धानाचूर्णं सक्तवः स्युः (इत्यमरः)। व्याविद्धैरिव मीननक्रमकरैः (मृच्छ० ५।५)। व्याविद्धैर्भ्रान्तैः।

—श्रि (श्रिञ् सेवायाम्)। वृक्षाश्चौषधयश्चैव व्याश्रयन्त परस्परम् (भा०)। व्याश्रयोऽन्योन्याश्रयः। षष्ठ्या व्याश्रये (पा० ५।४।४८)। व्याश्रयो नानापक्षसमाश्रयः। देवा अर्जुनतोऽभवन्। आदित्याः कर्णतोऽभवन्निति व्याश्रयस्योदाहरणं वृत्तौ स्थितम्। व्याश्रिताश्च भवन्ति। केचित्कंसभक्ताः केचिद् वासुदेवभक्ताः। (हेतुमति च ३।१।२६ सूत्रे भाष्ये)। व्याश्रिता नानापक्षसमाश्रिताः।

—सञ्ज् (षञ्ज सङ्गे)। बाहूबाहवि व्यासजेताम् (शिशु० १८।१२)। आसत्याऽयुध्येताम् इत्यर्थः। कर्मव्यतिहार आत्मनेपदम् इति मल्लिः। तथा सति यकि सति व्यासज्येतामिति स्यात्। छन्दोभङ्गश्च स्यात्। तारापीडो व्यासङ्गविघातार्थं बहिर्नगराद् ...विद्यामन्दिरमकारयत् (काद०)। व्यासङ्गश्चित्तस्यान्यत्र गमनम्। व्यासज्यवृत्तिर्धर्मः। अनेकद्रव्यसमवेतो गुणादिः।

—सिध् (षिध गत्याम्, षिधू शास्त्रे माङ्गल्ये च)। तत्सर्वं निन्दयामासुर्यज्ञव्यासेधकारिणः (वि० पु० १।६।३०)। व्यासेधो विरोधो निषेधः। यत्रेदमुक्तमैकान्तिकत्वं व्यासेधद्भिः (योग सू० २।२३ इत्यत्र वैशारद्यां वाचस्पतिमिश्रः)। प्रतिषेधद्भिरित्यर्थः।

—स्था (ष्ठा गतिनिवृत्तौ)। आ ते राष्ट्रमिह रोहितोऽहार्षीद् व्यास्थन् मृधः (अथर्व० १३।१।३५)। व्यास्थन् मृधः शत्रवो विप्रस्थिताः, नाना दिशो भेजुरित्यर्थः। व्यास्थापयति (तै० ब्रा०)। नाना दिक्षु विसृजतीत्यर्थः।

—हन् (हन हिंसागत्योः)। पूर्वेण पश्चिमस्यानुपपत्तिर्व्याघातः। (को०

अ० २।१०।२८)। व्याहतामिव पश्यामो धर्मस्य विविधां गतिम् (भा० आश्व० ४६।१)। व्याहतां परस्परविरुद्धां, संकुलाम्। न ते कञ्चिदभिप्रायं व्याहन्तुमहमुत्सहे (रा० २।१०।३४)। न ते काममपीच्छां विहन्तुं प्रत्यूहितुं विरोद्धुमीहे। क्व चारण्यं क्व च क्षात्रं क्व च पालनम्। ईदृशं व्याहतं कर्म न भवान् कर्तुमर्हति (रा० २।१०६।१८)॥ व्याहतं विप्रतिषिद्धम्।

—हृ (हृञ् हरणे)। यदि व्याहरते राजन्विप्राणां धर्मवादिनाम्। ततो धर्मकृतात् क्षिप्रमपवादात्प्रमुच्यते (भा० अनु० ११२।६)। व्याहरते संभावते विप्रैरित्यर्थः। अनुत्पन्नेषु वाक्येषु चोद्यमाना विवक्षया। किं नु पूर्वं तदा देवी व्याजहार सरस्वती (भा० आश्व० २१।२४)॥ व्याजहार उवाच। किं नु तत्त्वं विशेषेण आजहार आहृतवतीति तु नीलकण्ठः। प्रश्नानुच्चरितानद्य व्याहरिष्यसि चेन्मम (भा० वन० १८०।१७)। व्याहरिष्यसि वक्ष्यसि प्रतिवक्ष्यसि। स्नातस्तु वरुणस्तेजो जुह्वतोऽग्निः श्रियं हरेत्। भुञ्जानस्य यमस्त्वायुस्तस्मान्न व्याहरेत् त्रिषु (कृत्य० द्वि० खण्डे समुद्धृतं शातातप-वचनम्)॥ न व्याहरेन्नोच्चारयेच्छब्दम्। वाग्यतः स्यात्, जोषमासीत। ततो राज्ञो धृतराष्ट्रस्य गृहे गोमायुरुच्चैर्व्याहरदग्निहोत्रे (भा०)। व्याहरत्=अक्रोशत्, अरौत्। वृतो गोपालकैः प्रीतो व्याहरत् कुरुनन्दन (भा० वन० २४०।६)। व्याहरत् व्यहरत्। विहारमकरोत्। आङधिकः। नामभिर्व्याहरन्तौ च सवत्सा गाः परन्तपौ (हरि० २।१४।३)। व्याहरन्तौ आकारयन्तौ। अव्याहृतं व्याहृताच्छ्रेय (भा० उ० ३६।१२)। व्याहृतमुच्चारितं वाचाभिव्यक्तीकृतम्। प्रश्नमिच्छामि वै किञ्चिद् व्याहृतं भवता स्वयम् (हरि० १।२६।३२)। व्याहृतं प्रत्युक्तमुत्तरितम्। अनुत्पन्ने च कार्यार्थे मां त्वं व्याहृतवानसि (भा० द्रोण० ५५।१७)। व्याहृतवान् शप्तवान्। अन्यत्रास्मिन्नर्थे प्रायेणानुव्याहरतेः प्रयोगो दृश्यते। श्ववायसैर्व्याहृतमांसशोणितं परत्र कस्त्वा धनयाच्ञया तुदेत् (अवदा० जा० २८, श्लो० ४४)॥ व्याहृतमभ्यवहृतं खादितम्। अपूर्वोऽर्थोऽन्यत्र सुदुर्लभः। व्याहार्य स ततस्तत्र सबालस्थविरां पुरीम् (बृ० श्लो० सं० २।२८)। आकार्येत्यर्थः।

—ह्वे (ह्वेञ् स्पर्धायां शब्दे च)। उभयतस्तर्हि निविदं व्याह्वयीत (व्याह्वयेत्)। उच्चारयेदित्यर्थः।

## व्युद् (वि+उद्)

—अस् (असु प्रक्षेपे)। व्युदस्यत्यसंख्याताः शर्कराः (कौ० सू० ५०)। व्युदस्यति विकिरति, विस्तारयति। मुञ्जवज्जर्जरीभूता बहवस्तत्र पादपाः। चीराणीव व्युदस्तानि रेजुस्तत्र महावने (भा० वन० ११।४९-५०)॥ चीराणि

वृक्षवल्कलानीव । व्युदस्तानि इतस्ततः क्षिप्तानि । त्वं तु हेतूनतीत्यैतान् कामक्रोधौ व्युदस्य च (भा० सभा० १३।५१) । व्युदस्य परिहृत्य विनीय विनमय्य । सीमन्तिनी भुजलतागहनं व्युदस्य (शान्तिशतके शिह्लणकृते) । उक्तोऽर्थः । गुप्तिः क्षितिव्युदासेपि (अमरः) । क्षितिव्युदासो भूगर्त इति स्वामी । शाश्वतश्च क्षितिव्युदासं दीर्णं विवरमाह । अयं गुप्त्यर्थान् ब्रुवन्नेवं पठति—गुप्तिः कारा च रक्षा च दीर्णं च विवरं भुव इति ।

—ऊह् (ऊह वितर्के) । गार्हपत्यं चेष्यन्पलाशशाखया व्युदूहति (श० ब्रा० ७।१।१।१) । संमार्ष्टीत्यर्थः । तद्धैके । उभयत्रैव पलाशशाखया व्युदूहन् (श० ब्रा० ७।३।१।७) । संमार्गमकुर्वन्नित्यर्थः । अथैनं पलाशशाखया व्युदूहति (श० ब्रा० १३।८।२।३) । व्युदूहति उन्मृद्नाति । अथैने (कुम्भ्यौ) व्युदूहति । दक्षिणस्यां शृतमासादयति उत्तरस्यां दधि (आप० श्रौ० २।३।११।६)। व्युदूहति विभज्य गमयतीति रुद्रदत्तः ।

—क्रम् (क्रमु पादविक्षेपे) । इन्द्रियाणि वीर्याणि व्युदक्रामन् (श० ब्रा० १२।७।१।६)। व्युदक्रामन् पृथक्त्वशः प्राचलन् । द्वन्द्वं रहस्यमर्यादेति सूत्रे (८।१। १५) व्युत्क्रमणे—द्वन्द्वं व्युत्क्रान्ता इत्युदाहरणं वृत्तौ । व्युत्क्रमणं भेदः पृथगवस्थानम् । द्विवर्गसम्बन्धेन पृथगवस्थिता द्वन्द्वं व्युत्क्रान्ता इत्युच्यन्ते इति तत्रैव तद्व्याख्यानम् । निर्णिक्तमनस पूता व्युत्क्रान्तरजसोऽमलाः (भा० आश्व० ४७।३) । व्युत्क्रान्तं निष्क्रान्तमपगतम् । आसन्गृहस्था भूयिष्ठा अव्युत्क्रान्ताः स्वकर्मसु (भा० शां० २७०।८) । अव्युत्क्रान्ता अनतिक्रान्ता अनतिक्रमवन्तः । आदरवन्त इत्यर्थः ।

—चर् (चर गतिभक्षणयोः) । यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे लोकाः सर्वे देवा भूतानि सर्व एवात्मानो व्युच्चरन्ति (श० ब्रा० १४।५।२३) । व्युच्चरन्ति=निष्क्रामन्ति । व्युच्चरन्त्याः पतिं नार्याः (भा० आदि० १२२।१७) । व्युच्चरन्त्या व्यभिचरन्त्याः । तासां व्युच्चरमाणानां कौमारात्सुभगे पतीन् (भा० आदि० १२२।५) । उक्तोऽर्थः । व्युच्चरंश्च महादोषं नर एवापराध्यति (भा० शां० २६६।३८) । व्युच्चरन् आचरन् । महादोषं पारदार्यम् ।

—छिद् (छिदिर् द्वैधीकरणे)। अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः (वि० पु० १।२।२६) । अव्युच्छिन्ना अनवरताः । ऋक्सामयजुषां घोषो ज्याघोषश्च महात्मनः । अव्युच्छिन्नोऽभवद् राज्ये…(हरि० १।४१।५२) ॥ उक्तोऽर्थः ।

—पद् (पद गतौ) । शक्तस्य प्रतिभाति शक्तश्च व्युत्पद्यते (काव्यमी० ४,

पदवाक्यविवेके) । व्युत्पद्यते जानाति । एतत्सर्वं पश्यन्नन्यो व्युत्पित्सुः फलसद्भावप्रतिपादने शब्दस्य सामर्थ्यं व्युत्पद्यते (शास्त्रदीपिका १।२) । व्युत्पद्यते बुध्यते । नाम रूढमपि व्युदपादि (शिशु० १०।२३) । उणादयोऽव्युत्पन्नानि प्रातिपदिकानि । धातुतो नोत्पद्यन्ते स्म । धातुजातानि न भवन्तीत्यर्थः । अव्युत्पन्नो बालभावः । मुग्धोऽपटुरित्यर्थः । तस्य भार्या व्युत्पन्नचारित्राऽजस्रं मित्रस्वजनैः प्रतिबोध्यते । न च तस्मात्परपुरुषसंसर्गान्निवर्तते (तन्त्रा० ३।८) । व्युत्पन्नं विकृतम् । व्युत्पन्नै रचितं न चैव वचनैः (ध्वन्या० १ कारिका-व्याख्यायाम्) । व्युत्पन्नैश्चातुर्ययुक्तैः सुन्दरवचनैः । किमेभिरज्ञैर्व्युत्पादितैः । शिक्षितैः प्रबोधितैः सद्भिः । अथ भगवताऽक्षपादेन निःश्रेयसहेतौ शास्त्रे प्रणीते व्युत्पादिते च पक्षिलस्वामिना किमपरमवशिष्यते यदर्थं वार्तिकारम्भः (न्या० वा० तात्० टी०) । व्युत्पादिते व्याख्याते । न च चित्रगुरित्यादौ... लक्षणा । बहुव्युत्पत्तिभञ्जनापत्तेः (परमलघुमञ्जूषायां समासनिरूपणायाम्) । व्युत्पत्तिर्नियम इति व्याख्यातारः । सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् (का० प्र० ६।४८) । व्युत्पत्तिं विशेषेणोत्पत्तिं सन्निवेशम् । व्युत्पत्तिरावर्जितकोविदापि न रञ्जनाय क्रमते जडानाम् (विक्रमाङ्क० १।१६) । व्युत्पत्तिर्बाहुश्रुत्यम्, पाण्डित्यम् । लोकव्युत्पादनार्थत्वाच्छास्त्रस्य । व्युत्पादनम् प्रबोधनम् प्राज्ञत्वकरणम् । एवमलङ्कारध्वनिमार्गं व्युत्पाद्य तस्य प्रयोजनवत्तां स्थापयितुमिदमुच्यते (ध्वन्यालोके २।२७ व्याख्यायाम्) । व्युत्पाद्य अनुशिष्य उपदिश्य ।

—सद् (षद्लृ विशरणगत्यवसादनेषु) । तस्य क्रीतस्य मनुष्यानभ्युपावर्तमानस्य दिशो वीर्याणीन्द्रियाणि व्युदसीदन् (ऐ० ब्रा० ३।१) । व्युदसीदन् विशीर्णतां गतानि ।

—स्था (ष्ठा गतिनिवृत्तौ) । यथा परं शक्तिधृतेर्न व्युत्थास्ये कथं चन (भा० अनु० २०।२६)। न व्युत्थास्ये मर्यादाया न विचलिष्यामि । धर्मातिचरणं न करिष्य इत्यर्थः । शक्यः खल्वेष राक्षसमतिपरिगृहीतोपि व्युत्तिष्ठमानः प्रज्ञया निग्रहीतुम् (मुद्रा० १) । व्युत्तिष्ठमानो विरुद्धमुद्यच्छमानः । चकर्ष यमुनां रामो व्युत्थितां वनितामिव (हरि० २।४६।३४) । व्युत्थितां लङ्घितमर्यादाम् । भ्रातृजाया ततः सा नो व्युत्थिता दाप्यतामिति (बृ० श्लो० सं० ४।२५) । व्युत्थिता विरुद्धाचारा प्रत्यभिनिविष्टा वा । प्रजोपपीडके तस्मिन् राजनि व्युत्थिताः प्रजाः (राज०) । विरोधमाचरन् प्रकुपिता अभूवन् । व्युत्थानं प्रतिरोधे च विरोधाचरणेऽपि चेत्यमरः । तथैव व्यवहारोपि व्युत्थाने मे भविष्यति (यो० वा० ६ (१) १२८।५८) । व्युत्थानं समाधेरुत्थानम् । इदं श्रेय इदं श्रेय इत्येवं व्युत्थितो जनः (भा० आश्व० ४९।१४) । व्युत्थितो

विप्रतिपन्नः, नानाप्रतिपत्तिको विरुद्धमतिः। स खलु कालः··· व्युत्थितदर्शनानां वस्तुस्वरूप इवावभासते (यो० सू० भाष्ये ३।५२)। भ्रान्तानामित्यर्थः। एवं व्युत्थापिते धर्मे बहुधा विप्रबोधिते। निश्चयं नाधिगच्छामः ··· (भा० आश्व० ४६।१३)। व्युत्थापिते प्रस्थानभेदं गमिते। मायामोहेन ते दैत्याः प्रकारैर्बहुभिस्तथा। व्युत्थापिताः (वि० पु० ३।१८।३२)। व्युत्थापिता विचालिताः। ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति (श० ब्रा० १४।७।२।२६)। व्युत्थाय निष्क्रम्य अतिहाय। न रोचते हि व्युत्थानम् (भा० अनु० २०।२६)। धर्मातिचरणम्। व्युत्थानं केवलं जरा (तन्त्रा० २।४।११८)। व्युत्थानं व्यायामः प्रयत्न उद्योगः।

—हृ (हृञ् हरणे)। द्वयोः पात्रयोर्व्युद्धृत्य (भा० श्रौ० ८।२।२)। व्युद्धृत्य भेदेन उद्धृत्य।

व्युप (वि+उप)

—अस् (असु क्षेपे)। अथ सुवर्णरजतौ रुक्मौ व्युपास्यति (श० ब्रा० १२।८।३।११)। व्युपास्यति=व्यस्यति, विभज्य ददाति।

— जप (जप जल्प व्यक्तायां वाचि, जप मानसे च)। व्युपतोदव्युपजाप० ···(आप० ध० १।२।८।१५)। व्युपजापः श्रोत्रयोर्मुहुर्मुहुर्जल्पनम्।

—तुद् (तुद व्यथने)। व्युपतोदव्युपजापोदामन्त्रण-नामधेयग्रहणानीति गुरोर्वर्जयेत् (आप० ध० १।१।८।१५)। व्युपतोदोऽङ्गुल्यादिघट्टनं यदाभिमुख्यार्थं क्रियते।

—नी (णीञ् प्रापणे)। आग्नेयमेवाग्निष्ठे नियुञ्ज्यादथेतरान्व्युपनयेयुर्यथापूर्वम् (श० ब्रा० ३।६।१।२२)। एकैकशो नयेयुरित्यर्थः।

—युज् (युजिर् योगे)। नासंपृष्टो व्युपयुङ्क्ते परार्थे (भा० उ० ३३।२२)। व्युपयुङ्क्ते वाग्व्ययं करोति।

—रम् (रमु क्रीडायाम्)। योधा व्युपारमन्युद्धात् (भा० द्रोण० १३६।५४)। व्युपारमन्, विरता अभवन् इत्यर्थः। व्युपरमं हैके (आश्व० श्रौ० ७।११।२०)। विविधम् उपरम्योपरम्य। उपरमणं चात्र विलम्बनमुच्यते नावसानमिति नारायणः। इन्द्रियाणां व्युपरमे मनोऽव्युपरतं यदि (भा० शां० २७५।२४)। व्युपरमो विरामो विरतिर्विषयेष्वप्रवृत्तिः।

विनि

—अस् (असु क्षेपे)। गुणांश्च सूपशाकाद्यान्पयो दधि घृतं मधु। विन्यसेत् प्रयतः पूर्वं भूमावेव···(मनु० ३।२२६)॥ विन्यसेत्=विन्यस्येत् विभज्य न्यस्येत् निदध्यात्। त्वदर्थमिव विन्यस्ता···शिला (रा० २।९६।६)। विन्यस्ता

निहिता। सुतविन्यस्तपत्नीकः (याज्ञ० ३।४५)। पुत्रार्पितपत्नीक इत्यर्थः। व्यूढौ विन्यस्तसंहतौ (अमरः)।

—कृ (डुकृञ् करणे)। यो ज्येष्ठो विनिकुर्वीत लोभाद् भ्रातॄन्यवीयसः (मनु० ६।२१३)। विनिकुर्वीत वञ्चयेतेति कुल्लूकः। अपकुर्यात्, अपराध्नुयात्, तदर्थं हन्याद् इत्यन्ये। तत्त्वया चरता लोके धर्मो विनिकृतो महान् (रा० ६।११।१८)। विनिकृतो लङ्घितः। विश्वामित्रो विनिकृतो विनिःश्वस्येदमब्रवीत् (रा० १।५६।२२)। विनिकृतस्तिरस्कृत इति कतकः। निरस्तसर्वशक्तिरिति तिलककारो रामः। वीरो विनिकृतो भ्रात्रा जगद् भ्रमति दुःखितः (रा०४।३।२०)। विनिकृतो निरस्तः। राज्याद् विनिकृतोऽस्माभिः कथं सोऽस्मासु विश्वसेत् (भा० शल्य० ५।७)। विनिकृतो विनाकृतः। शरण्यं सर्वभूतानां (मुनिं) पित्रा विनिकृतं तव (भा० आदि० ५०।७)। विनिकृतमपकृतं तिरस्कृतम्। नामित्रो विनिकर्तव्यः (भा० शां० ६६।१५)। निकृत्या वञ्चयितव्य इत्यर्थः।

—कृत् (कृती छेदने)। विनिकृत्तानि दृश्यन्ते शरीराणि शिरांसि च (भा० वन० १६०।५३)। विनिकृत्तानि खण्डितानि शकलीकृतानि।

—कॄ (कॄ विक्षेपे)। विनिकीर्णानि योधानां वदनानि चकाशिरे (भा० द्रोण० ८६।८)। इतस्ततो विक्षिप्तानीत्यर्थः। विनिकीर्णधनुर्बाणं दृष्ट्वा निहतमर्जुनम् (भा० वन० ३१३।२)। उक्तोऽर्थः। विनिकीर्णः...भीमबलाद् हतः (राक्षसः) (भा० वन० ११।७३)। व्यायताङ्गः पतित इत्यर्थः। सिद्धचारणसङ्घैश्च विनिकीर्णः...(महाशैलः) (रा० ४।४१।३३)। विनिकीर्ण आकीर्णः। क्व नु मां त्वदधीनजीवितां विनिकीर्य क्षणभिन्नसौहृदः। ...असि विद्रुतः (कु० ४।६)॥ विनिकीर्य सावहेलं परित्यज्य।

—क्षिप् (क्षिप प्रेरणे)। रक्षांसि रक्षांसि विनिक्षिपन्ति (रा० ५।११।१२)। अधः पातयन्ति। या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् (याज्ञ० १।१।२३०)। विनिक्षिपेत्। निदध्यात, दद्यात्। कृत्स्नमेते विनिक्षिप्ताः प्रतिरूपेषु कर्मसु (भा० शां ८०।३०)। विनिक्षिप्ता अधिकृताः। प्रतिरूपेष्वनुरूपेषु।

—गम् (गम्लृ गतौ)। तत्रान्यतरार्थं क्रियेत यदि विनिगमनायां हेतुर्भवेत् (मी० शा० भा० ४।१।२२)।

—ग्रह् (ग्रह उपादाने)। द्विपा वा बलिनो राजन् वृषभा वा महाबलाः॥ विनिग्राह्या यदि मया निग्रहीष्यामि तानपि (भा० वि० ४।३३)। विनिग्राह्या वशे करणीयाः, दमनीयाः। न हि दण्डादृते शक्यः कर्तुं पापविनिग्रहः (मनु० ६।२६३)। पापनिरोधः। पापाद् वारणम्। न्यवेति विनिग्रहार्थीयौ (नि०

१।३।१३)। नीचैर्निधानार्थकावित्यर्थः। ग्रह इति च ह इति च विनिग्रहार्थीयौ (नि० १।५।२-३)। अवधारणार्थकावित्यर्थः। विनिग्रहो नाम विभागेनावस्थितयोर्देवदत्तयज्ञदत्तयोरेकतरस्मिन्यज्ञदत्तेऽभिमते गोपायनस्य नियमेन ग्रहणमिति दुर्गः। शिरःसु विनिगृह्यैतान् योधयामास पाण्डवैः (भा० आदि० १२८। १७)। विनिगृह्य दृढं गृहीत्वेत्यर्थः। कर्णस्तु वेदनां धैर्यादसह्यां विनिगृह्य तां (भा० शां० ३।९)। विनिगृह्य विनियम्य।

—धा (डुधाञ् धारणपोषणयोः)। त्रेधात्मानं विन्यधत्त पृथिव्यां तृतीयम् (तै० सं० २।४।१२।३)। तत्त्रेधा विन्यधत्त पशुषु तृतीयम् (तै० ब्रा० १।१।६।१)। विभज्य न्यधादित्यर्थः। तदासां पाप्मनो विनिदध्यात् (श० ब्रा० १४।४।१।११)। उक्तोऽर्थः। विनिधाय ततो भारं संनिधाय फलानि च (भा० आदि० ७३।३१)। विनिधाय स्कन्धादवतार्य, व्यपरोप्य। स्तनविनिहितमपि हारम् (गीत० ११)। विनिहितो निहितः। विशब्दो न विशेषकृत्। मधुगन्धघृतफणितानि विनिधाय द्विगुणा द्वितीयमासे लब्धिः (बृ० सं० ४१।५)। विनिधाय संचित्य संगृह्य एकीकृत्य।

—ध्वंस् (ध्वंसु अवस्रंसने गतौ च)। भूमौ बाणैर्विनिध्वस्तां पतितां ज्यामिवायुधात् (गोरेसियो सं० रा० २।१२५।१३)। विनिध्वस्ताम् अवस्रस्ताम्, व्यायतपातं पतिताम्।

—पत् (पत्लृ गतौ)। एतं कदम्बमारुह्य तदेव शिशुलीलया। विनिपत्य ह्रदे घोरे दमयिष्यामि कालियम् (हरि० २।११।५९)॥ विनिपत्य=अवप्लुत्य। तस्करा विनिपत्य ग्राम्। हृतस्वामनयन् बद्ध्वा स्वपल्लीम्...(कथा० २२। ६२)॥ विनिपत्य उपद्रुत्य, आक्रम्य। त्वदर्थमेतद् विनिपात्यमानं देहं त्वयैव प्रतिमोचितं मे (मार्क० पु० १७२।१५)। विनिपात्यमानं हन्यमानम्। भर्तारं नानुमन्यन्ते विनिपातगतं स्त्रियः (रा० २।३९।२०)। विनिपातगतं कृच्छ्रमुपेतम्। विवेकभ्रष्टानां भवति विनिपातः शतमुखः (भर्तृ० २।१०)। विनिपातः पातः, विपच्च। विधिहेतुरहेतुरागसां विनिपातोपि समः समुन्नतेः (कि० २।३४)। विनिपातो भ्रंशः। जपतां जुह्वतां चैव विनिपातो न विद्यते (मनु० ४।१४६)। विनिपातो दैवमानुषोपद्रवः। विवादे विद्याभिजनसम्पन्ना वृद्धा मेधाविनो धर्मेष्वविनिपातिनः (आप० ध० २।११।२९।५)। विनिपातः प्रमादः। अविनिपातिनोऽप्रमादिनः। विनिपतिततुषारः क्रौञ्चनादोपगीतः (ऋतु० ४।८१)। विनिपतितः पतितः। नार्थो विनिश्याम्। कटेन पातितो यामि (मृच्छ० २।८)।

—पद् (पद गतौ)। एते चान्ये च बहवो बलवन्तो दुरासदाः। विनिपन्ना

मया दृष्टाः (रा० ७।२२।२८)। विनिपन्ना परासवो भूशायिनः। निपद्यतिः शयने रूढः।

—मे (मेङ् प्रणिदाने)। वर्णयार्कणितं मह्यमेह्यालि विनिमीयताम् (नै० २०।११३)। विनिमीयतां परिवृत्तिः क्रियताम्। सम्पद्विनिमयेनोभौ दधतु-र्भुवनद्वयम् (रघु० १।२६)। विनिमयः परस्परं प्रणिदानम्। तेजोवारिमृदां यथा विनिमयः (भा० पु० १।१।१)। इत्यत्र विनिमयो व्यत्ययोऽन्यस्मिन्नन्या-नावभास इति श्रीधरः। कवेरभिमतोऽयमर्थः कल्पितोऽन्यत्र दुर्लभः।

—यम् (यम उपरमे)। यथा कूर्म इहाङ्गानि प्रसार्य विनियच्छति। एवमेवेन्द्रियग्रामं बुद्धिः सृष्ट्वा नियच्छति (भा० शां० २४७।१४)॥ विनि-यच्छति संहरति प्रतिसंहरति संकोचयति। प्रमोहं विनियच्छति (भा० अनु० १४।४१७)। वारयति, विधेयीकरोतीति वाऽर्थः। विनियताहारः (रा० ३। ६।७)। मिताहार इत्यर्थः।

—युज् (युजिर् योगे)। विनियुञ्जीत राज्ये त्वां गोविन्दवचनेन च (भा० शल्य० ४।४७)। विनियुञ्जीत नियुञ्जीत निवेशयेत्। विशब्द इहार्थान्तरप्रती-तिकृन्न। यथा सम्राडेवाधिकृतान् विनियुङ्क्ते (प्रश्नोप० ३।४)। उक्तोऽर्थः। गृहाणीव हि मर्त्यानामाहुर्देहानि पण्डिताः। कालेन विनियुज्यन्ते ··· (भा० स्त्री० ३।८)॥ विनियुज्यन्ते विप्रयुक्तानि भवन्ति, सापगमानि भवन्तीत्यर्थः। प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो (कु० २।३१)। विनियुक्तः संनियुक्तः। हयेषु विनियुक्तेषु विमुखोभवदाहवे (भा० आदि० १३८।५३)। विनियुक्ता रथेभ्यो वियुक्ता विमुक्ताः विषिता इत्यर्थः। अत्र विर्विरोधवचनः। धात्वर्थविपर्यासकृत्। विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः (याज्ञ० १। २७१)। विनियोजितो व्यापारितः। रक्षार्थं यज्ञवाटस्य पाण्डवान्विनियुज्य च (हरि० २।८४।४)। विनियुज्य व्यापार्य। यज्ञवाटरक्षाकर्म पाण्डवेषु निक्षिप्य समर्प्येत्याह। अहेति विनियोगे च (पा० ८।१।६१)। नानाप्रयोजनो नियोगो विनियोगः। आर्षं छन्दश्च दैवत्वं विनियोगस्तथैव च। अनेनेदं तु कर्तव्यं विनि-योगः प्रकीर्तितः॥ बभूव विनियोगज्ञः साधनीयेषु वस्तुषु (रघु० १७।६७)। विनियोगः प्रयोग उपयोगः। विनियोगप्रसादा हि किङ्कराः प्रभविष्णुषु (कु० ६। ६२)। विनियोगः कृत्यनिर्वहणे व्यापारणा। कर्तव्यभारनिक्षेपः।

—विश् (विश प्रवेशने)। जनपदविनिवेशः (कौ० अ० १)। विनिवेशः संनिवेश एकत्रावस्थितिः। स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः (शा० ६।१५)। विनिवेशश्चिह्नं लक्ष्म।

—वृ (वृञ् आवरणे)। वातोपि निश्चरंस्तत्र प्रवेशे विनिवार्यते (भा० आदि० ४२।३२)। विनिवार्यते प्रतिषिध्यते। अपार्थको विः। निस्तु निषेधस्य

द्योतकः। तत्कर्म कृत्वा विनिवार्य भूयः (श्वेता० उ० ६।३)। विनिवार्य प्रत्यवेक्षणं कृत्वेति शङ्करः।

—वृत् (वृतु वर्तने)। विषया विनिवर्तन्ते निराहारस्य देहिनः (गीता २।५६)। पराङ्मुखा भवन्तीत्याह। सपिण्डता तु पुरुषे सप्तमे विनिवर्तते (मनु० ५।६०)। विनिवर्तते निवर्तते नानुवर्तते विरमतीत्यर्थः। इक्ष्वाकुवंशजो राजा विनिवृत्तः स्ववंशकृत् (हरि० २।२३।५)। विनिवृत्तो विनष्टः। निवृत्तसत्ताक इति तु पदार्थः। यस्मादपत्यकामो वै भर्ता मे विनिवर्तितः (भा० अनु० ८४। ७४)। विनिवर्तितः पराङ्मुखीकृतः।

—स्था (ष्ठा गतिनिवृत्तौ)। एवं व्यादिश्य विप्रौ तु क्रियास्तत्र (नृपवेश्मनि) विनिष्ठितौ (रा० २।३।२०)। विनिष्ठितौ स्थितौ। नेहोपसर्गौ विनी अन्तरमर्थं कुरुतः।

—हन् (हन हिंसागत्योः)। लोकाः स्वस्था भवन्त्यद्य तस्मिन्विनिहतेऽसुरे (हरि० १।११।३७)। विनिहते हते। अपार्थकौ विनी।

—क्रम् (क्रमु पादविक्षेपे)। यथा प्रविश्यान्तरमन्तकस्य को वै मनुष्यो हि विनिष्क्रमेत (भा० वन० १२०।१५)। विनिष्क्रामेत्=निर्गच्छेत्। काले मनुष्यो न विनिष्क्रमेतेति पाठान्तरम्।

## विनिस् (वि+निस्)

—चर् (चर गतिभक्षणयोः)। स यथार्द्रैधाग्नेरभ्याहितस्य पृथग् धूमा विनिश्चरन्ति (श० ब्रा० १४।५।४।१०)। विनिश्चरन्ति निष्क्रामन्ति।

—तप् (तप सन्तापे)। (मत्स्यान्) पक्वान् विनिष्टप्तान् (रा० ३।७६। १०)। विनिष्टप्ता बाढं तप्ताः।

—दिश् (दिश अतिसर्जने)। गजानां च परीमाणमेतदेव विनिर्दिशेत् (भा० आदि० २।२४)। लक्षयेत्, परिच्छिन्द्यात्। तत्र (देशे) शल्यमभिनिर्दिशेत् (सुश्रुत० १।१८।१७)। विद्यात्, जानीयात्, वेदयेद्वा। शुद्धिं तस्य विनिर्दिशेत् (याज्ञ० २।१११)।। शंसेत् कीर्तयेद् घोषयेद्वेत्यर्थः। यमेवंलक्षणं विद्यात्तममित्रं विनिर्दिशेत् (भा० शां० ८०।१५)। एककार्ये विनिर्दिष्टो यो बहून्यपि साधयेत् (रा० ५।३९।३२)। विनिर्दिष्टो व्याविष्ट आज्ञप्तः।

—धू (धू विधूनने, धूञ् कम्पने)। अन्तरीक्षाद् विनिर्धूतास्तस्य वेगेन राक्षसाः। भूमौ निपतिताः···(रा० ६।१६।८६)। विनिर्धूताः पराक्षिप्ता उत्सारिताः पराणुन्नाः।

—पत् (पत्लृ गतौ)। तस्माद् वनगहनाद् विनिष्पपात (अवदा० जा० २६)। निश्चक्रामेत्यर्थः। वानर्यो विनिष्पेतुर्गुहामुखात् (रा० ४।१६।४)। उक्तोऽर्थः। शशवच्च विनिष्पतेत् (मनु० ७।१०६)। उत्प्लुत्य पलायेतेत्यर्थः।

—पिष् (पिष्लृ संचूर्णने)। विनिष्पिपेष चात्मानं प्रगृह्य सुभुजा भुजौ (रा० ४।२।१६)। विनिष्पिपेष संचूर्णयामास।

—लिख् (लिख अक्षरविन्यासे)। तस्माज्जिह्वां विनिर्लिखेत्। सङ्घर्षेदित्यर्थः।

—या (या प्रापणे)। षष्टिः पुत्रसहस्राणि भिन्ने तुम्बे विनिर्ययुः (रा० गोरे० १।४०।१७)। यथा मात्रा कृतास्तस्माद् (हृदयात्) उपदेशा विनिर्ययुः (काठक० १२।८१)।

—वप् (डुवप बीजसन्ताने)। विनिरुप्तेऽभ्युदिते प्राकृतीभ्यश्शेषं तण्डुलभूतेष्वपनयेत् (आप० श्रौ० ६।१।४।७८)। विनिरुप्तेऽर्धनिरुप्ते।

—वृत् (वृतु वर्तने)। स्वशरीराद् विनिर्वृत्ताश्चत्वार इव बाहवः (रा० २।१।५)। विनिर्वृत्ताः संभूता उद्भूताः। साक्षाद् रामाद् विनिर्वृत्तो धर्मश्चापि श्रिया सह (रा० २।२।२६)। उक्तोऽर्थः।

—हन् (हन हिंसागत्योः)। दोषाणां तु विनिर्घातः (आप० ध० १।८।२३।३)। विनिर्घातोऽपनोदोऽपाकरणम्।

—हृ (हृञ् हरणे)। पक्वाशयगतान्दोषान्स्रंसनेन विनिर्हरेत् (का० सं० खिल० अम्ल० श्लो० ३०)। विनिर्हरेत् अपनयेत्, विगमयेत्।

## विपरा (वि+परा)

—इ (इण् गतौ)। यथास्तं विपरेतन (ऋ० १०।८५।२३)। विविधं परागच्छत, निवर्तध्वमित्यर्थः। अस्तमिति गृहनाम। आथर्वणे तु अथास्तं विपरेतनेति पाठः।

## विपरि (वि+परि)

—अय् (अय गतौ)। निधायोदहरणं त्रिर्विपल्ययते (श० ब्रा० ६।१।२।६)। विपल्ययते परिक्रामति। उपसर्गरेफस्य लत्वम्। उदहरणं घटः, उदकुम्भः।

—अस् (असु क्षेपे)। प्रतीकारो व्याधेः सुखमिति विपर्यस्यति जनः (भर्तृ० ३।१६)। विपर्यस्यति भ्रमति मिथ्या बुध्यते। दैवेनोपहतस्य बुद्धिरथवा पूर्वं विपर्यस्यति (मुद्रा० ६।८)। विपर्यस्यति विपर्यासमेति, विकारमापद्यते, अन्यथाभावं भजते। तं यदस्तमेतीति मन्यन्ते, अह्न एव तदन्तमित्वा

ऽथात्मानं विपर्यस्यते (ऐ० ब्रा० ३।४४)। इह विपरिपूर्वोऽसिः सकर्मकः। पात्रं चास्य विपर्यस्येयुः (गौ० ध० ३।२।३)। अधोमुखी कुर्युरित्यर्थः। विपर्यस्तं यथा नाम कुवलाश्वस्य धीमतः (भा० वन० २०१।७)। विपर्यस्तं परिवृत्तम्। हन्त विपर्यस्तः सम्प्रति जीवलोकः (उत्तर० १)। वैपरीत्यं गत इत्याह। अनुत्पन्नं ज्ञानं यदि यदि च सन्देहविधुरं विपर्यस्तं वा स्यात् परिचर वसिष्ठस्य चरणौ (महावीर० ३।३६)। विपर्यस्तं ज्ञानमतत्त्वे तत्त्वबुद्धिः। कथं नाम विपर्यासाद् धुन्धुमारत्वमागतः (भा० वन० २०१।६)। विपर्यासात् विष्णुतेज आवेशात्परिवृत्तेः। विपर्यासं यातो घनविरलभावः क्षितिरुहाम् (उत्तर० २।२७)। विपर्यासो विपर्ययो वैपरीत्यम्। अक्षभङ्गे नद्धविमोक्षे यानविपर्यासे (गो० गृ० २।४।३)। यानविपर्यासे वाहनस्य पराभवने, औत्तराधर्येऽन्यथागमने विपथगमने वा। सुखदुःखविपर्यासः (भा० शां० ३३१।१)। सुखे दुःखधीः, दुःखे च सुखधीरित्याख्यं वैपरीत्यमित्याह। सिद्धविपर्यासश्च। क्तक्तवतू निष्ठा (१।१।५) सूत्रे वार्त्तिकम्। विपर्यासः संशयः। भृगोश्चरुविपर्यासे (हरि० १। २७।३६)। विपर्यासो व्यत्यासः।

—इ (इण् गतौ)। खिन्नस्य हि विपर्येति तत्त्वज्ञस्यापि शेमुषी (राज० ३।२०३)। विपर्येति विपर्यस्यति। विपर्येष्यन्तौ वा एतावग्नि भवतोऽत्येष्यन्तौ (श० ब्रा० ४।२।१।१५)। विपर्येष्यन्तौ परिक्रमिष्यन्तौ। आदित्येनैवायं ज्योतिषा कर्म कुरुते विपर्येति (श० ब्रा० १४।७।१।१२)। विपर्येति परावर्तते। उत्तिष्ठ व्रतिनामग्र्य क्व विपर्येति मद्वचः (राज० २।४६)। विपर्येति विप्लुतार्थं भवति, मृषा भवति। सुखं लोके विपर्येति (भा० शां० २२०।५)। (दान्तः) सुखं यथा स्यात्तथा पर्यटति विचरति लोक इत्यर्थः। अतस्तु विपरीतस्य नृपतेरजितात्मनः (मनु० ७।३४)। विपरीतस्य विपरीताचारस्य। अहो बत महत् कष्टं विपरीतमिदं जगत्। येनापत्रपते साधुरसाधुस्तेन तुष्यति (भा० वन० २।६४)॥ विपरीतमधरोत्तरम्, दुःस्थितम्, आकुलम्। दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता (कठोप० १।२।४)। विपरीते तेजस्तमसी इवात्यन्तविरुद्धस्वभावे। निमित्तानि विपरीतानि (गीता १।३१)। शुभप्रत्यनीकानीत्याह। दैवेनोपहतः पार्थो विपरीतश्च (भा० द्रोण० १४५।१७)। विपरीतोऽन्यथाभूतप्रकृतिः। नष्टचित्तो यथोन्मत्तो विपरीतो यथातुरः (रा० २। १२।५५)। संनिपातादिना विपरीतप्रकृतिरिह विपरीत इत्युक्तः। विपरीतश्च वृद्धश्च विषयैश्च प्रधर्षितः। (रा० २।२१।३)। प्राप्त-प्रकृति-वैपरीत्य इत्यर्थः। सिंहः संहननाद् हिंसेर्वा स्याद् विपरीतस्य (नि० ३।१८।२०)। विपरीतस्य प्राप्तवर्णानुपूर्वीविपर्ययस्य। विपरीत इवाकाशे सूर्यो नक्षत्रमालया (रा० ४।१४। १०)। विपरीतो विशेषेण परीतो वेष्टितः। रूप्तस्यन्तमिति केचित्। परीतं

तु दिवा प्रोक्तं विपरीतं तु शर्वरी । पौर्णमासीगतश्चन्द्रः सूर्यं इत्यभिधीयते ॥ इति तिलकोद्धृतमन्यदीयं वचनम् । सीमाज्ञाने नृणां वीक्ष्य नित्यं लोके विपर्ययम् (मनु० ८।२४६) । विपर्ययो विभ्रमः । आहितो जयविपर्ययोपि मे श्लाघ्य एव परमेष्ठिना त्वया (रघु० ११।८६) । जयविपर्ययो जयविरोध्यर्थः पराजय इत्यर्थः । स्वशरीरशरीरिणावपि श्रुतसंयोगविपर्ययौ यदा (रघु० ८।८९) । विपर्ययः संयोगविरोध्यर्थो वियोग इत्यर्थः । नभसः स्फुटतारस्य रात्रेरिव विपर्ययः (न भाजनम्) (कि० ११।४४) । रात्रेर्विपर्ययो दिवसः । यदा वृश्चिकादिषु पञ्चसु (राशिषु) वर्तते तदाऽहोरात्राणि विपर्ययाणि भवन्ति (भा० पु० ३।२१।५) । विपर्ययाणि विपरीतानि । क्लीबे प्रयोगः किमपि खिन्ते चेतः । शब्दानामर्थे च रूपे च निरर्गलोऽयं कविः । विपर्यये तु (शा० ५) । अन्यथाभावे त्वित्याह । विपर्यये त्वस्याधिपतेरुल्लङ्घितः क्षात्रधर्मः स्यात् (वेणी५० ) । उक्तोऽर्थः । कथमेत्य मतिर्विपर्ययं करिणी पङ्कमिवावसीदति (कि० २।६) । वेषविपर्ययः (पञ्चत० १) । नेपथ्यपरिवर्तनम् । त्यागे श्लाघाविपर्ययः (रघु० १।२२) । विपर्ययोऽभावः । राघवाणामयुक्तोऽयं कुलस्यास्य विपर्ययः (रा० १।२१।२) । विपर्ययो वैपरीत्यं वैसादृश्यम् । निद्रा सज्ञाविपर्ययः (कु० ६।४४) । चेतनाभाव इत्याह । दुःशासनवधं श्रुत्वा कर्णस्य च विपर्ययम् ( ११।६) । विपर्ययो विनाशः । प्रियं त्वत्कृतमिच्छामि मम गर्भविपर्यये (रा० १।४७।३) । गर्भविपर्ययो गर्भवैकृत्यम् । हरिं विशन्ति स्म शरा लोका इव विपर्यये (रा० ७।७।४) । विपर्ययः प्रलयः संवर्तः, भूतसम्प्लवः । भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः (भा० पु० ११।२।३७) । विपर्ययो विभ्रमः ।

—क्रम् (क्रमु पादविक्षेपे) । विपरिक्रामम् (श० ब्रा० ७।५।२।३०) । विपरिक्रम्य, परिक्रम्य, परीत्येत्यर्थः । आहवे विपरिक्रान्तः शूरः पञ्चत्वमागतः (रा० ४।२२। १६) । विपरिक्रान्तः, पराक्रान्तः, दर्शितपराक्रमः ।

—तप् (तप सन्तापे) । यस्या ममाभिषेकार्थं मनो विपरितप्यते (रा० गोरे० २।१६।३) । अत्यन्तं तप्यते, संज्वरतीत्याह ।

—धा (डुधाञ् धारणपोषणयोः) । आचान्तः पुनराचामेद्वासो विपरिधाय च (याज्ञ० १।१९६) । सुप्त्वा भुक्त्वा क्षुत्वा स्नात्वा पीत्वा विपरिधाय च (गो० गृ० १।२।३२) । वाससी विपरिधाय (पा० गृ० ) । अत्रोदाहृतिषु विशब्दोऽनर्थकः । परिधाय आच्छाद्य वसित्वेत्यर्थः । वसितं वासो विहाय वासोन्तरपरिग्रहो वा विशब्दद्योत्यः । यथा यथायथं वि परि दधावहै

पुनस्ते (तै० सं० १।५।१०।१)। व्येवैनेन परिधत्ते (तै० सं० ५।३।११।३) इत्यत्र। नग्नां नोदीक्षेतेति वेति वा मुखं विपरिधापयेत् (गो० गृ० १।२।२)। विपरिधापयेत् आच्छादयेत्।

—धाव् (धावु गतिशुद्ध्योः)। सन्तिष्ठत प्रहरत तूर्णं विपरिधावत (भा० वन० २७१।१)। इतस्ततो धावतेत्याह। धात्रा विहितभक्ष्याणि सर्वभूतानि मेदिनीम्। लोके विपरिधावन्ति रक्षितानि स्वकर्मभिः (भा० शां० २८८।१८)॥ मेदिनीं विपरिधावन्ति भुवमटन्ति भूमिं विचरन्तीत्याह।

—नम् (णम प्रह्वत्वे शब्दे च)। विग्रह इति विपरिणतमनुषज्यते (का० नी० सा० १०।७) इत्यत्र मङ्गला टीका। षष्ठे श्लोके विग्रहस्येति वर्तते। विपरिणतं कृतविभक्तिविपरिणामम्।

—पत् (पत्लृ गतौ)। तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहृत्य पक्षौ संलयायैव ध्रियते (श० ब्रा० १४।७।१।१९)। विपरिपत्य इतस्ततः पतित्वा डयित्वा। यत्रासौ देवदत्तो दात्रहस्तः समन्ततो विपरिपतन् दृश्यते (६।१।८७ सूत्रभाष्ये)। विपरिक्रामन् अटाट्यां कुर्वन् वृथाट्यामाचरन्नित्यर्थः।

—लिख् (लिख अक्षरविन्यासे)। वेदिं विपरिलिखति। विमाय परितो लिखतीत्यर्थः।

—वृत् (वृतु वर्तने)। हेतुनाऽनेन कौन्तेय जगद् विपरिवर्तते (गीता ९।१०)। चक्रवद् भ्रमतीत्यर्थः। सा तु बुद्धिः कृताप्येव पाण्डवान् प्रति मे सदा। दुर्योधनं समासाद्य पुनर्विपरिवर्तते (भा० उ० ४०।३१)॥ विपरिवर्तते परिवृत्ता भवति, अन्यथात्वं भजते। धर्मानभ्यधिको धर्मी पूर्वतत्त्वानतिक्रमात्पूर्वपरावस्थाभेदमनुपतितः कौटस्थ्येनैव विपरिवर्तेत यद्यन्वयी स्यात् (यो० सू० ३।१३ भाष्ये)। विपरिवर्तेत=धर्मि द्रव्यं परिणामात्मकं रूपं परिहाय कौटस्थ्येन परिवर्तेत। भूमौ विपरिवर्तेत तिष्ठेद्वा प्रपदैर्दिनम् (मनु० ६।२२)। लुठन्गतागतं कुर्यादित्यर्थः। ततो विपरिवर्तमानपक्षावलीवलितशिरोधरम् (तन्त्रा० ३।१०)। ततः स व्यायतं कृत्वा वेषं विपरिवर्त्य च (भा० वि० २३।१७)। वेषं सूदालङ्कारं परिवर्त्य गन्धर्ववेषेणेत्यर्थः। नावं न शक्यमारुह्य स्थले विपरिवर्तितुम् (भा० आश्व० ५०।३०)। विपरिवर्तितुम् परिक्रमितुम्।

—हृ (हृञ् हरणे)। न निविदः पदे विपरिहरेत् (ऐ० ब्रा० ३।११)। विपरिहरेत् व्यत्यस्येत्। विपरीतं पठेदित्यर्थः। अथैताभ्यां पयस्याभ्यां प्रच-

रिष्यन्तौ विपरिहरतः (श० ब्रा० २।५।२।३६)। स्थानान्तरे सङ्क्रमयतः। आमिक्षयोर्मेषप्रतिकृती विपरिहरतः (भा० श्रौ० ८।८।१३)। उक्तोऽर्थः।

### विपर्याङ् (वि+परि+आङ्)

—वृत् (वृतु वर्तने)। नाग्निं विपर्यावर्तेत (कौ० सू० १।२६)। पराङ्मुखो नापसरेदित्याह।

### विप्र (वि+प्र)

—आप् (आप्लृ व्याप्तौ)। विराड् विपाशनाद्वा विपाटनाद्वा विप्रापणाद्वा (नि० ६।२६।१)। विप्रापणं विविधा व्याप्तिः, विसृमरतेति यावत्।

—इ (इण् गतौ)। सा त्वं विप्रेहि तिष्ठ वा (भा० आदि० १६७।३८)। विप्रेहि दूरं गच्छ। एते पृष्ठानि रोदसी विप्रयन्तो व्यानशुः (ऋ० ६।२२।५)। एते सोमासः। विप्रयन्तो विसरन्तः प्रथमानाः। यद्यु ते विप्रेताः स्युः (श० ब्रा० ३।२।३।२२)। विप्रेताः स्युरुपरमेयुरिति यावत्।

—ईक्ष् (ईक्ष दर्शने)। अधीरविप्रेक्षितमायताक्ष्याः (कु० १।४६)। विप्रेक्षितमितस्ततः प्रेक्षणम्। उन्मत्त इव विप्रेक्षन्निदं वचनमब्रवीत् (भा० द्रोण० ७३।२०)। विप्रेक्षन्=विप्रेक्षमाण इतस्तत ईक्षमाणः।

—कृ (डुकृञ् करणे)। अविनीत नोऽप्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि (शा० ७)। कदर्थयसीत्यर्थः। न त्विदं केषुचिद् ब्रह्मन् व्याहर्तव्यं कथंचन। विद्यार्थिनो हि मे पुत्रान् विप्रकुर्युः कुतूहलात्॥ विप्रकुर्युर्बाधेरन्। क्रमपरमवश न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः (कु० ६।६५)॥ विप्रकुर्युः=विकारमुत्पादयेयुः, चित्तवृत्तिं दूषयेयुरित्यर्थः। रक्षांसि विप्रकुर्वन्ति तापसान् (रा० ३।१।२०)। बाधन्ते, कदर्थयन्ति। आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्यते (शा० ४)। विप्रकार्यते विरूपं क्रियते। तस्मिन् विप्रकृताः काले तारकेण दिवौकसः (कु० २।१)। विप्रकृता उपपीडिताः। तथा महीं विप्रकृतामनार्यैस्तपोवनादेत्य ररक्ष रामः (बुद्ध० ६।६६)। उक्तोऽर्थः। विधर्मतो विप्रकृतः पिता यस्याभवत्पुरा (भा० शा० ८३।३६)। विप्रकृतः पन्नगः फणां कुरुते (शा० ६।३१)। विप्रकृतः क्षोभितः। उपतप्तो दूनः। ततो वै प्राश्निकाः प्राहुः पशुं विप्रकृतस्त्वया। मांसैरभिजुहोतीति तव राष्ट्रं मुनिर्बकः (भा० शल्य० ४१।२०)॥ त्वया विप्रकृतो बको मुनिः पशुं राष्ट्रं जुहोतीत्यन्वयः। विप्रकृतः तिरस्कृतः। परुषमुक्त इति प्राकरणिकोऽर्थः। ये मां विप्रकृतां क्षुद्रैरुपेक्षध्वं विशोकवत् (भा० वन० १२।१२६)। विप्रकृतामवमानिताम्। खलीकृताम्। भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः (शा० ४।१७)। विप्रकृता=असद् व्यवहृता। एतैः कः सदृशो लोके दूरं विप्रकृतैरपि (का० नी० सा० १८।४८)। विप्रकृतै राजा-

पथ्यकारिभिर्विरुद्धैः । दुष्टानां निर्लज्जानां च विप्रकृत् (भा० पु० ६।१७।११)। विप्रकृत् बाधकः परिभावकः। कश्चान्यो भ्रातृभार्यां वै विप्रकर्तुं तथार्हति (भा० उ० १८२।८) । विप्रकर्तुं निकर्तुं तिरस्कर्तुम् । विप्रकारान्प्रयुङ्क्ते स्म स बहून् मम वेश्मनि (भा० अनु० १७०।३८) । विप्रकारान् विरुद्धानाचारान्, अपचारान्, अपराधान् । विप्रकारमपाक्रष्टुं राक्षसैर्भवतामिमम् (रा० ३।६।२३) । विप्रकारं कदनं वैशसम् । उदीरितां तामिति याज्ञसेन्या नवीकृतोद्ग्राहितविप्रकाराम् (कि० ३।५५)) । विप्रकारोऽधिक्षेपोऽवमानः। शशंसुर्विप्रकारं तं तस्मै तारककारितम् (भा० अनु० ८६।२८) । विप्रकार उपप्लवोऽपायो विनाशः । मत्स्यानां विप्रकारांस्ते बहूनस्मानकीर्तयन् (भा० वि० ४७।६)।

—कृष् (कृष विलेखने)। कामं दुग्धे विप्रकर्षत्यलक्ष्मीम् । (उत्तर० ५।३०)। दूरं गमयतीत्यर्थः । विरुद्धेन लक्ष्येण हि विप्रकृष्टा (भा० आदि० १६३।२४) । पितृकुलात्पतिकुलं प्रापितेत्यर्थः । सा विसृष्टेति पाठान्तरम् । विसृष्टाऽतिसृष्टा निसृष्टेत्यनर्थान्तरम् । इत्थं तिलकभेदा एते (विशेषकादयः) । पर्यायत्वं त्वदूरविप्रकर्षात् (२।६।१२३ अमरोद्घाटने स्वामी) । विप्रकर्षो वैदूर्यम्, भेदो विशेषः । द्रौपद्याविप्रकर्षेण राज्यापहरणेन च (भा० वन० २।६) । विप्रकर्षः कर्षणम् । स्वगुणैरेव मार्गेत विप्रकर्षं पृथग्जनात् (भा० शां० २८७।२५) । विप्रकर्षः प्रकर्ष उत्कर्षः । अन्येषां कर्म सफलमस्माकमपि वा पुनः । विप्रकर्षेण बुध्येत कृतकर्मा यथाफलम् (भा० वन० ३२।४६) ।। विप्रकर्षोऽवसानम् । कृतानां कर्मणामन्त इति नीलकण्ठः । विप्रकर्षेण भेदेन वैलक्षण्येनेति परे ।

कॄ— (कॄ विक्षेपे) । परिघो विप्रकीर्णस्ते बाणैश्छिन्नः समन्ततः (रा० ६। ६५।३६) । विप्रकीर्णः शकलीकृतो विपर्यस्तः । विरथं विप्रकीर्णं च भग्नशस्त्रायुधं तथा (यो हन्ति) (भा० वन० १८।१४) । विप्रकीर्णः प्रसारिताङ्गं भुवि पतितः । स्रजश्च विविधाश्चित्रा विप्रकीर्णा ददर्श सः (रा० ५।१४।५३)। विप्रकीर्णा विपर्यस्ताः । विप्रकीर्णां तु तां दृष्ट्वा राक्षसानां महाचमूम् (रा० ३।३०।३५) । विप्रकीर्णां भग्नाम् । दिवसं विप्रकीर्णानामाहारार्थं च···। समागतानां नीडेषु पक्षिणां श्रूयते स्वनः (रा० ३।५।५) ।। विप्रकीर्णानां व्यपेतानां विप्रयुज्य दिक्षु विदिक्षु च प्रस्थितानाम् ।

—क्रम् (क्रमु पादविक्षेपे) । अधीत्य चाविप्रक्रमणं सद्यः (आप० ध० २।२।५।२) । विप्रक्रमणमपगमनम् । यस्य विप्रक्रान्तमहुतमग्निहोत्रं सूर्योऽभ्युदियात् (आप० श्रौ० ६।२।८।३६) । विप्रक्रान्तं प्रक्रान्तम् । विशब्दोऽनर्थकः ।

—गम् (गम्लृ गतौ) ।। यथागतं विप्रजग्मुर्विदित्वा पाण्डवान् वृतान् (भा० आदि० २००।८) । विप्रतस्थिर इत्याह । प्रजाः सर्वा महाराज विप्र-

जग्मुर्यथागतम् (भा० वन० १०५।१६)। विप्रजग्मुर्नाना दिक्षु प्रतस्थिरे। हतारोहाश्च मातङ्गाः पाण्डवेन कृता रणे। विप्रजग्मुरनीकेषु मेघा वातहता इव (भा० भीष्म० ५४।८३-८४)॥ विप्रजग्मुर्विप्रकीर्णा बभूवुः। घना वाताहता इवेति पाठान्तरम्।

—दुष् (दुष वैकृत्ये)। वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च। न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित् (मनु० २।९७)॥ विप्रदुष्टभावस्य दुष्टस्वभावस्य। विप्रावनर्थकौ।

—द्रु (द्रु गतौ)। भयार्ता विप्रदुद्रुवुः (हरि० २।११६।९८)। पलायाञ्चक्रिरे। यूथपा मत्ताः सयूथा विप्रदुद्रुवुः (रा० २९३।१)। उक्तोऽर्थः। दृष्ट्वा विप्रद्रुता भीता मुनयः शतशो दिशः (रा० १।५५।२२)। विप्रद्रुताः कान्दिशीकाः। विप्रद्रुतानहं मन्ये निमग्नाञ्शोकसागरे (भा० कर्ण० २।१६)। उक्तोऽर्थः।

—धाव् (धावु गतिशुद्ध्योः)। (सेना) विप्रधावति वेगेन भीमस्याभिहता शरैः (भा० कर्ण० ६०।६१)। विप्रधावति विप्रकीर्णा सती धावति।

—नश् (णश अदर्शने)। ब्राह्मणेषु प्रमूढेषु धर्मो विप्रणशेद् ध्रुवम् (भा० १३।३०८३)। विप्रणशेत्, विप्रणश्येत्, तिरोभवेत्, पराभवेत्। अपि श्वपाके शुनि वा न दानं विप्रणश्यति (भा० १३।३२१२)। विप्रणश्यति निष्फलं भवति। अविप्रणाशः सर्वेषां कर्मणामिति निश्चयः (भा० आश्रम० ३४।४)। फलवन्ति कर्माणि भवन्ति नाफलानीत्याह।

—नी (णीञ् प्रापणे)। संवत्सरं विप्रणयेत्तस्माज्जातः पुनर्भवेत् (भा० शां० ९६।४)। विप्रणयेत् शिक्षयेत्। तव दासोऽस्मीति वदेति शिक्षयेदिति प्रकृतेऽर्थः। विप्रणयेदतिक्रमयेत् क्षपयेदिति तु संस्कृतशार्मण्यकोषः। संचये च विनाशान्ते मरणान्ते च जीविते। संयोगे विप्रयोगान्ते को नु विप्रणयेन्मनः (भा० शा० १०४।४४)॥ विप्रणयेद् योजयेत् आसजेत्।

—बुध् (बुध अवगमने, बुधिर् बोधने)। एवं व्युत्थापिते धर्मे बहुधा विप्रबोधिते। निश्चयं नाधिगच्छामः संमूढाः सुरसत्तम (भा० आश्व० ४९।१३)॥ विप्रबोधिते=बोधिते=वर्णिते=निरूपिते। विप्रावनर्थकौ, तदर्थस्य बहुधेत्यनेनैवोक्तत्वात्।

—मुच् (मुच्लृ मोक्षणे)। भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते (भा० उ० ३३।४२)। विप्रमुच्यन्ते बन्धं न लभन्ते। विप्रावनर्थकौ।

—मोक्ष् (मोक्ष असने)। प्रहारविप्रमोक्षार्थं सहसा धरणीं गतः (भा० भीष्म० ४८।९२) प्रहारविप्रमोक्षार्थं। प्रहारपरिहारार्थम्। आघातवञ्चनार्थम्।

—या (या प्रापणे)। विप्रयातांस्तु वो भिन्नान् (भा० कर्ण० ९३।५४)। विप्रयातान् विद्रुतान् नाना दिशो भजमानान्। विप्रयातरथानीकाः समपद्यन्त पाण्डवाः (भा० भीष्म० ५२।११)। विप्रयातो विप्रकीर्णः। विप्रद्रुतानीका इति पाठान्तरम्।

—युज् (युजिर् योगे)। यदि तु चन्द्रमुखमिति विप्रयुज्यते तदा विशेषण-समासायत्तं रूपकम् (रसगङ्गाधरे परिणामालङ्कारे नागेशः)। विप्रयुज्यते विपरीतं प्रयुज्यते। सुकरैर्विप्रयुक्तार्थाः कोशमापूरयन्त्युत (हरि० १।५१।६)। सुकरैर्यथोचितैः करग्रहैर्विशेषेण प्रयुक्तार्था इति नीलकण्ठः। विप्रयुक्तो हि रामेण मुहूर्त्तमपि नोत्सहे। जीवितुम्··· (रा० १।२०।८)॥ विप्रयुक्तो विरहितो विनाकृतः। संयोगा विप्रयोगान्ताः (रा० २।१०५।१६)। विप्रयोगो विरहः, विनाभवः। मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः (मेघ० )।

—लप् (लप व्यक्तायां वाचि)। विभाषा विप्रलापे (पा० १।३।५०)। विप्रलापो विरोधोक्तिरित्यमरः। सत्यं श्रेष्ठं पाण्डव विप्रलापम् (भा० वन० ५।२१)। विगतः प्रलापोऽनर्थकं वचो यस्मात्, सत्यविशेषणम्।। न चेन्मोघं विप्रलप्तं ममेदम् (भा० शां० २९।१४५)। विप्रलप्तम्—विप्रलपितम्। सविस्तरं प्रकर्षेण लपितं भाषितमिह विप्रलपितमुक्तम्। चरमे चरणे पथ्यं मुमूर्षोरिव सुप्रयुक्तम् इत्युक्तेर्विरुद्धवचनमित्यर्थो नेह सङ्गच्छते।

—लभ् (डुलभष् प्राप्तौ)। चन्द्रोपरागं प्रति तु केनापि विप्रलब्धासि (मुद्रा० १)। विप्रलब्धाऽतिसंहिता, मिथ्योक्ता। स वै धर्मो विप्रलब्धः सभायां पापात्मभिः (भा० वन० ४।५)। विप्रलब्धो हिंसितः, अनादरेण लङ्घितः। इत्युक्तास्ते तदा राजन् विप्रलम्भप्रधर्षिताः (भा० मौ० १।१८)। विप्रलम्भो वञ्चना। तृषार्तं सति पानीये विप्रलम्भेन योजयन् (रा० २।७५।५७)। उक्तोऽर्थः। विप्रलम्भेन योजयन् विसंवदन् नास्तीत्युक्त्वाऽप्रयच्छन्नित्युक्तं भवति। यस्माद्याति च लोकोऽयं विप्रलभ्य परस्परम्। ममत्वं न क्षमं तस्मात्स्वप्नभूते समागमे (बुद्ध० ६।४८)॥ विप्रलभ्य वियुज्य।

—ली (लीङ् श्लेषणे)। विद्याकल्पेन मरुता मेघानां भूयसामपि। ब्रह्मणीव विवर्तानां क्वापि विप्रलयः कृतः (उत्तर० ६।६)॥ विप्रलयः सम्पूर्णो लयः, अनवयवेनाभिसंवेशः।

—लुप् (लुप्लृ छेदने)। उभयोर्हस्तयोर्मुक्तं यदन्नमुपनीयते। तद्विप्रलुम्पन्त्यसुराः सहसा दुष्टचेतसः (मनु० ३।२२५)॥ विप्रलुम्पन्ति आच्छिन्दन्ति। संचितान्यस्य वित्तानि विविधानि सहस्रशः। दस्युभिर्विप्रलुप्यन्ताम्···(रा० २।७५।४३)॥ लुण्ट्यन्तामित्यर्थः।

**—वद्** (वद व्यक्तायां वाचि)। विप्रवदन्ते सांवत्सराः विप्रवदन्ति सांवत्सराः। (पा० १।३।५०)। युगपत् परस्परप्रतिषेधेन विरुद्धं वदन्तीत्यर्थः। विप्रवादाः सुबहवः श्रूयन्ते पुत्रकारिताः (भा० अनु० ४९।२)। विप्रवादा विविधाः प्रवादाः।

**—वस्** (वस निवासे)। स हि रामभयादेभिर्नागैर्विप्रवासितः (भा० उ० १४७।२४)। दूरे स्थापित इत्याह। विप्रवासे गुरोराचार्यकुलाय (आप० ध० १।३।३३)। विप्रवासेऽसंनिधौ। विप्रोष्य ज्येष्ठस्य पुत्रस्योभाभ्यां पाणिभ्यां मूर्धानं परिगृह्य जपेत् (गो० गृ० २।८।२१)। कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् (महाभाष्ये पस्पशायाम्)। उक्तोऽर्थः।

**—व्यध्** (व्यध ताडने)। कलशैर्विप्रविद्धैश्च स्रुवैर्भग्नैस्तथैव च (भा० वन० १०२।११)। विप्रविद्धैर्विप्रकीर्णैः। विप्रकीर्णाजिनकुशं विप्रविद्धबृसीकटम् (रा० ३।६०।७)।

**—व्रज्** (व्रज गतौ)। पुत्रान्संनिष्पाद्य ब्रूयुर्विप्रव्रजताऽस्मत् (आप० ध० १।१०।२६।९)। विप्रव्रजत नाना भवत, विविधं प्रकर्षेण स्नेहमुत्सृज्य गच्छतेत्याह।

**—सृ** (सृ गतौ)। अद्य विप्रसरिष्यन्ति राक्षस्यो हतबान्धवाः (रा० ३।३०।१०)। पलायिष्यन्त इत्याह। सूपतीर्थाऽभवद् गङ्गा भूयो विप्रससार च (भा० स्त्री० २७।५)। पात्रं तस्याः पृथुतरमभूदित्यर्थः। एवमनादि दुःखस्रोतो विप्रसृतम् (२।१५ योग० भा०)। विप्रसृतं सन्तानवाहि।

**—सृज्** (सृज विसर्गे)। स ह मैत्रेयः स्वानन्तेवासिन उवाच यथार्थं भवन्तो यथागृहं यथामनो विप्रसृज्यन्ताम् (गो० ब्रा० पूर्व० १।३२)। विप्रसृज्यन्तां विप्रतिष्ठन्ताम्।

**—स्था** (ष्ठा गतिनिवृत्तौ)। यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन् (कौ० उ० ३।३)। विप्रतिष्ठेरन् नाना दिक्षु व्युच्चरेयुः। तांस्तु विप्रस्थितान् दृष्ट्वा शास्त्रैः शास्त्राभिनन्दिनः (भा० शां० २८७।९)। विप्रस्थितान् विविधैर्मार्गैः प्रस्थितान्। विप्रस्थितेषु देवेषु (रा० १।६३।२२)। यथास्वं निकाय्यान् प्रति प्रयातेषु।

## विप्रति (वि+प्रति)

**—इ** (इण् गतौ)। यदि विप्रत्ययो ह्येष तदिदं दर्शयाम ते (भा० शां० १११।१५)। विप्रत्ययः प्रत्ययाभावः, अविश्वासः। विप्रत्ययादहङ्कारात् (बुद्ध० १२।२४)। एवं प्रकाशो नृपतिप्रभावः…भवत्सु विप्रत्ययतो न रूढः (अवदा० मैत्री० १२)। उक्तचर एवार्थः।

**—ज्ञा** (ज्ञा अवबोधने)। प्राप्तां नीवीं विप्रतिजानीते (कौ० अ० २।८।

२६) । अप जानीते, अपलपतीत्यर्थः । विशब्दोऽर्थं विपर्यासयति । प्रतिज्ञानमभ्युपगमो भवति विप्रतिज्ञानमपह्नवः ।

—पद् (पद गतौ) । न हि घटादौ प्रत्यक्षे विषये कश्चिद्विप्रतिपद्यते नास्ति घट इति (बृहदा० उ० ८।८ शां० भा०) । विप्रतिपद्यते विपरीतं जानाति । कृत्वा बहून्यकर्माणि पाण्डवेषु नृशंसवत् । मिथ्यावृत्तिरनार्यः सन्नद्य विप्रतिपद्यसे (भा० उ० १२८।१८)।। विप्रतिपद्यसे विवादं कुरुषे मात्रादिभिः । विदितवेदितव्यास्तु भिषजः सर्वं सर्वथा परीक्ष्यं परीक्ष्याध्यवस्यन्तो न क्वचिदपि विप्रतिपद्यन्ते (चरक० विमान० ७।४) । न विप्रतिपद्यन्ते न मुह्यन्ति । यः कथं चित् प्रामाण्ये विप्रतिपद्येत तम्प्रति न्यायशास्त्रप्रसिद्धहेतुकथनमेतत् । विप्रतिपद्येत शङ्केत, सन्दिहीत । वेत्थ यथेमाः प्रजाः प्रयत्यो विप्रतिपद्यान्तै (श० ब्रा० १४।६।१।२) । विप्रतिपद्यान्तै इति पञ्चमो लकारः । दिक्षु विदिक्षु च प्रचरन्तीत्याह । नाना दिशो गच्छन्ति । येषु विप्रतिपद्यन्ते षट्सु (पञ्चस्विन्द्रियेषु मनसि च) मोहात्फलागमे । तेष्वध्यवसिताध्यायी विन्दते ध्यानजं फलम् (भा० वन० २११।२७) ।। श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।••• बुद्धिः (गीता० २।५३) ।। श्रुतिविप्रतिपन्ना भिन्नार्थकश्रुति-श्रवणवशान् मोहं गता । व्यवस्थाशून्या विचलितेत्यर्थः । यत्र विप्रतिपत्तिः स्याद् धर्मशास्त्रार्थशास्त्रयोः (नारदस्मृतौ १।३३ टीकायाम्) । विप्रतिपत्तिर्विरोधः । उवाच परया सूक्त्या बुद्ध्या विप्रतिपन्नया (रा० २।१०६।१) । विप्रतिपन्नया प्रतिपत्तिरहितया विरोधवत्या । स्वयं विप्रतिपन्ना वा यदि वा विप्रवासिता (वा० धर्म० २८।२) । शास्त्रैरधिगतानामिन्द्रियदौर्बल्याद् विप्रतिपन्नानाम् (आप० ध० २।५।१०।१२) । विप्रतिपन्नानां स्वकर्मणो भ्रष्टानाम् । तस्मिंश्च विद्याकर्मान्तमविप्रतिपन्ने धर्मेभ्यः (आप० ध० १।१।१।१३) । पूर्वोदित एवार्थः । तदिन्द्रियदौर्बल्याद् विप्रतिपन्नम् (आप० ध० २।१०।२७।४) । विप्रतिषिद्धमित्यर्थ इति हरदत्तः । प्रनष्टकूलाः प्रवहन्ति शीघ्रं नद्यो जलं विप्रतिपन्नमार्गाः (रा० ४।२८।२५) । प्रतिबद्धा मार्गा नृणामाभिरिति तिलकः । पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः (आप० ध० १।१।२।१) । विप्रतिपत्तिर्विसंवादः । महाराजस्य विप्रतिपत्त्या का मे विप्रतिपत्तिः । ननु सीतापहरणमेव (अभिषेक० ३) । विप्रतिपत्तिर्विपरीताचरणम् । तेष्विह प्राज्ञस्याघातो न युक्तरूपः प्रागेव विप्रतिपत्तिः (अवदा० जा० ११) । विप्रतिपत्तिः पापचरणम् । राक्षसराजस्य विप्रतिपत्त्या विपद्यमानं राक्षसकुलम् (अभिषेक० ४) । उक्तोऽर्थः । धर्मविप्रतिपत्तावभोज्यम् (आप० ध० १।४।१२) । विप्रतिपत्तिर्विरोधोऽपायो वा । शब्दस्पर्शरूपरसगन्धेष्वविप्रतिपत्तिरिन्द्रियजयः (कौ० अ० १।६।२)। शब्दादिषु यथायथं विशेषाग्रहोऽविप्रतिपत्तिः ।

शब्दमात्रस्याविशेषितस्य प्रतिपत्तिर्बोधो न तु रञ्जकत्वोद्वेजकत्वादेस्तद्विशेषस्य। एवं स्पर्शादिष्वपि बोध्यम्। मम विप्रतिपत्तिश्च केयमस्मिन्ननागसि (अवदा० शरभ० १३)। विप्रतिपत्तिर्विरुद्धा मतिः। वसन् पितृवने रौद्रे शौचे वर्तितुमिच्छसि। इयं विप्रतिपत्तिस्ते…(भा० शां० १११।६)॥ उक्तोऽर्थः।

—भा (भा दीप्तौ)। न चैतत्कारणं ब्रह्मन्नल्पं विप्रतिभाति मे (भा० शल्य० ६३।५)। विप्रतिभाति प्रतिभाति रोचते। नार्थो विना।

—सिध् (षिध गत्यां षिधू शास्त्रे माङ्गल्ये च)। न चास्मै श्रुतिविप्रतिषिद्धमुच्छिष्टं दद्यात् (आप० ध० १।४।५)। विप्रतिषिद्धं निषिद्धम्। विप्रतिषिद्धं चानधिकरणवाचि (पा० २।४।१३)। परस्परविरुद्धं विप्रतिषिद्धमिति वृत्तिः। हरिर्विप्रतिषेधं तमाचचक्षे विचक्षणः। (शिशु० २।६)। विप्रतिषेधस्तुल्यबलविरोधः। क्रव्याद्भ्य इव भूतानामदान्तेभ्यः सदा भयम्। तेषां विप्रतिषेधार्थं राजा सृष्टः स्वयम्भुवा (भा० )॥ विप्रतिषेधार्थं नियमनाय नियन्त्रणाय।

—सृ (सृ गतौ)। चेतसि सविप्रतिसारे (शिशु० १०।२०)। विप्रतिसारोऽनुशयोऽनुतापः पश्चात्तापः। अनेनैव च गृहीतविप्रतीसारमिव मे हृदयम् (हर्ष०)। उक्तोऽर्थः। स्मर्तासि मां विप्रतिसारवान्वा (अवदा० जा० ४।१७)। स्पष्टोऽर्थः।

## विसम् (वि+सम्)

—आप् (आप्लृ व्याप्तौ)। ननु चोक्तं निर्ज्ञातस्यार्थस्य समाप्तिर्वा भवति विसमाप्तिर्वा (५।३।६७ सूत्रे भाष्ये)। अत्र नञर्थो विशब्द इति कैयटः।

—कट् (कटे वर्षावरणयोः)। विसंकटपुरद्वारकूटकुट्टिम-मण्डिते (शि० भा० ६।५०)। विसंकटं विशालम्। सोऽयमुपसर्गकृतोऽर्थबाधः।

—चर् (चर गतिभक्षणयोः)। विसंचारि निरालम्बं पञ्चद्वारं चलाचलम् (मनः) (भा० शां० १६५।६)। विसंचारि विशेषेण संचरणशीलम्।

—ज्ञा (ज्ञा अवबोधने)। आख्यातु नो भवाञ्शीघ्रं विसंज्ञाः स्मेह सर्वशः (भा० वन० १४२।५३)। विसंज्ञा भ्रान्ताः।

—धा (डुधाञ् धारणपोषणयोः)। विसंहितजानुः। कण्डितसन्धिर्जानुरित्यर्थः। विर्विरोधे।

—युज् (युजिर् योगे)। एतयर्चा विसंयुक्तः काले च क्रियया स्वया (मनु० २।८०)। विसंयुक्तो विप्रयुक्तः।

—वद् (वद व्यक्तायां वाचि)। विसंवदेन्नरो लोभात् (मनु० ८।२१६)। विवदं ब्रूयादित्यर्थः। कृतं समयं लङ्घयेदित्यार्थिकोऽर्थः। शकटदासस्तु

मित्रमिति विसंवदन्त्यक्षराणि (मुद्रा० ५)। **संवादीनि न भवन्ति, विसदृशानि सन्तीत्याह।** कमलानां मनोहराणामपि रूपाद्विसंवदति शीलम् (मुद्रा० १।१६)। **विसंवदति भिद्यते।** सिद्धानां न विसंवदन्ति वाचः (राम० १४।१००)। **श्रुतं दृष्टं वार्थं न विरुन्धन्ति, न ते मिथ्या वदन्तीत्यर्थः।** मनोरथस्य पुष्पं दर्शयित्वा न फले विसंवदति (माल०)। **विसंवदति विप्रलभते।** न भवति भवति च नचिरं चिरं चेत्फले विसंवदति। कोपः सत्पुरुषाणाम्...(रविगुप्तवचनम्)॥ **फले विसंवदति फलाद् वञ्चयत आत्मानम्। फलवान्न भवतीत्यर्थः।** सा (परिषद्) यं धर्मं निश्चिनुयात्तं धर्मत्वेन स्वीकुर्यान्न विसंवदेत् (मनु० १२। ११० इत्यत्र कुल्लूकः)। **न विरुन्ध्यादित्यर्थः।** रमणीयः खल्ववधिर्विधिना विसंवादितः (शा०)। **मिथ्या कारित इत्यर्थः।** इह विसंवादयत्यात्मानमन्त्यजोऽहमिति (अवि० १)। **विसंवादयति विप्रतिषेधति।** न चेद्विसंवादमुपैति दैवम् (अवि० २।८)। **विसंवादं विरोधम्।** विद्याविसंवादकृताः कलहाः प्रादुरभवन् (हर्ष० १)। **विसंवादो वैषम्यं भेदः।** प्रलम्भनं विसंवादनं मिथ्याफलाख्यानम् इति संमाननशालीनीकरणयोश्च (पा० १।३।३६) सूत्रे वृत्तिः। प्रतिज्ञाविसंवादनमनुचितत्वान्न व्यवस्यति ते मतिः (अवदा० सुत० जा०)। **प्रतिश्रवमिथ्याकरणमित्याह।** अविसंवादनं दानं समयस्याव्यतिक्रमः (भा० उ० ३८।३६)। **अविसंवादनम् अविद्यमानविप्रलम्भम्।** अविसंवादिता शौर्यं भक्तिज्ञत्वं कृतज्ञता (का० नी० सा० ८।६)। **शब्दच्छलादतिसन्धानं विसंवाद इति टीका।** अविश्वास्यो हि विसंवादकः स्वेषां परेषां च भवति (कौ० अ० १३।५।६)। **विसंवादको मृषावादी मिथ्याफलाख्यायी।**

**—स्था** (ष्ठा गतिनिवृत्तौ)। विसंस्थिते (यज्ञे) (बौ० ध० १।७।१५। १८)। **असमाप्ते इत्यर्थः। विर्विरोधे। संस्थितः समाप्तो भवति।**

# आङ्

**—अज्** (अज गतिक्षेपणयोः)। आजा नष्टं यथा पशुम् (ऋ० १।२३। १३)। **आजा=आज (छान्दसः सांहितिको दीर्घः)। आगमय, आनय, आहरेत्यर्थः।** पुनर्नो नष्टमाजतु (ऋ० ६।५४।१०, अथर्व० ७।१०।४)। **आजतु आयातु, न उपैतु।** आहमजानि गर्भधमा त्वमजासि गर्भधम् (वा० सं० २३। १६)। **आजानि आकृष्य क्षिपामि।**

—अञ्च (अञ्चु गतिपूजनयोः)। आच्या जानु दक्षिणतो निषद्य (ऋ० १०।१५।६)। आच्या=आच्य। सांहितिको दीर्घः। आच्य आभुज्य, नमयित्वा। वायुरमित्राणामिष्वग्राण्याञ्चतु (अथर्व० ११।१२।१६)। आञ्चतु भजतु ःःनानि करोतु।

—अञ्ज् (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु)। आ नो दधिक्राः पथ्यामनक्त (ऋ० ७।४४।५)। आनक्तु म्रक्षयतु शोधयतु मार्ष्टु समी करोतु। आ वां नक्षन्तो अद्रय आञ्जन् (ऋ० ६।६३।३)। सत्कारेण प्रतीच्छन्ति, सबहुमानं प्रतिगृह्णन्ति। अक्षिणी आञ्ज्य (आश्व० गृ० ४।६)। अक्ते कृत्वेत्याह।

—अद् (अद भक्षणे)। आत्तमद्य मध्यतो मेद उद्धृतम् (वा० सं० २१।४३)। आत्तं जग्धम् भक्षितम्।

—अय् (अय गतौ)। यो अद्य स्तेन आयति सं सम्पिष्टो अपायति (अथर्व० ४।३।५)। आयति=आयते=आयाति।

—अस् (असु क्षेपे)। घृतवतीमध्वर्यो स्रुचमास्यस्व (श० ब्रा० १।५।२।१)। आस्यस्व परिगृहाण। अस्यत्यूह्योर्वा वचनमिति तङ्।

—इ (इण् गतौ)। किन्निमित्तं त्वमागाः (भा० आदि० ८८।१०)। आयने ते परायणे दूर्वा रोहतु पुष्पिणीः (अथर्व० ६।१०६।१)। आयने आगमे। परा च यन्ति पुनरा च यन्ति (ऋ० १।१२३।१२)। पुनरायन्ति प्रत्यावर्तन्ते। आ त एतु मनः पुनः (ऋ० १०।५७।४)। उक्तोऽर्थः।

—ईर् (ईर गतौ)। द्युम्नवद् ब्रह्म कुशिकास एरिर एक एको दमे अग्निं समीधिरे (ऋ० ३।२९।१५)। एरिरे=आ ईरिरे। उदीरयामासुरित्यर्थः। आमासु पक्वमैरयः (ऋ० ८।७८।७)। ऐरयः=इतः प्रैरयः=प्रापयः। सौधन्वनासो अमृतत्वमेरिरे (ऋ० ३।६।३)। एरिरे आनशिरे विविदिरे।

—उक्ष् (उक्ष सेचने)। आ नो गव्यूतिमुक्षतं घृतेन (ऋ० ७।६२।५)। ओक्षतम् अभिषिञ्चतम्।

—ऋ (ऋ गतौ)। आर्च्छति वा एषोखा यद्भ्रियते (श० ब्रा० ६।६।४।८)। आर्च्छति आर्तिमाप्नोति। मुख्यामार्तिमरिष्यति (श० ब्रा० १।६।१।१६)। मुखरोगं प्राप्स्यतीत्यर्थः। राजा राजानमार्च्छति (भा० भीष्म० ६५।१२)। आसादयतीत्यर्थः। स भीमं पञ्चभिर्विद्ध्वा...। विशोकं त्रिभिरानर्च्छत् (भा० द्रोण० १५५।२२)। अङ्गे अङ्ग आर्पिता उत्सिताश्च (अथर्व० ६।११२।३)। आर्पिता आर्ति प्रापिताः।

—कच् (कच बन्धने)। त्वक्त्रं चाचकचे (भट्टि० १४।९४)। आचकचे आबबन्ध। परिवेष्टयामास।

—कम्प् (कपि चलने)। अनोकहाकम्पितपुष्पगन्धी (पवनः) (रघु० २।१३)। आकम्पितानि ईषत्कम्पितानि।

—कल् (कल गतौ संख्याने च)। स्पर्शमपि पावनमाकलयन्ति (काद०)। गणयन्ति, चिन्तयन्ति, मन्यन्त इत्यर्थः। स्वच्छदुकूलपल्लवाकलितमौलेः (काद०)। आकलित उन्नद्धः। संभ्रमाकलितांशुका (कथा० २०।५२)। आकलितो गृहीतः। सुवर्णसूत्राकलिताधराम्बराम् (शिशु० १।६१, ६।४५)। आकलितं बद्धम्। कुतूहलाकलितहृदया (काद०)। आकलितं गृहीतम्। मारुताकलितास्तत्र द्रुमाः (भा० आदि० ७०।६)। आकलिता आकम्पिताः। ईषदाकलितं चापि क्रोधाद् द्रुतपदं स्थितम् (भा० वि० २३।६५)। आकलितं वेपमानम्। ततः पश्चादायान्तं भयहेतुमाकलय्य मन्थरो जलं प्रविष्टः (हितोप०)। आकलय्य दृष्ट्वा अवबुध्य। यथा परशुराममाकलयतु भवती तावत् (प्र० च० ५।५)। चिन्तयत्वित्यर्थः। स्वं द्वीपं सप्तवर्षाणि विभज्य सप्तवर्षनामभ्य आत्मजेभ्य आकलय्य (भा० पु० ५।२०।२)। आकलय्य संक्रमय्य समर्प्य।

—काङ्क्ष् (काक्षि काङ्क्षायाम्)। यो मे कृतस्त्वया कालस्तमाकाङ्क्षे जगत्पते (भा० उ० १५।६)। प्रतीक्ष इत्यर्थः। अङ्ग पच। अङ्गयुक्ते तिङाकाङ्क्षम् (पा० ८।२।९६) इत्यत्र प्रत्युदाहरणं वृत्तिकारधृतम्। प्रत्युदाहरणं स्पष्टयन्नाह नैतदपरमाकाङ्क्षति (तिङन्तम्) इति। आकाङ्क्षति अपेक्षतेऽर्थकात्स्न्याय। प्रत्याश्वसन्तं रिपुमाचकाङ्क्ष (रघु० ७।४७)। आचकाङ्क्ष प्रतीक्षाञ्चक्रे। यात्रार्थी कालमाकाङ्क्षंश्चरेद् भैक्षं समाहितः (भा० आश्व० ४६।२१)। आकाङ्क्षन् प्रतीक्षमाणः। दक्षिणां दिशमाकाङ्क्षन् याचेतेमान् वरान् पितॄन् (मनु० ३।२५८)। दक्षिणदिशमभिमुखीभूतः, तां वीक्षमाण इति तात्पर्यम्। असत्यामाकाङ्क्षायां सन्निधानमकारणम् (६।४।२३ मी० शा० भा०)। आकाङ्क्षाऽपेक्षा।

—काश् (काशृ दीप्तौ)। स यस्स आकाश आदित्य एव सः। एतस्मिन् ह्युदिते सर्वमिदमाकाशते (जै० उ० १।२।५।२)। आकाशते प्रकाशते भाति भासते। अति नोऽर्जस्याकाशं नः कुर्विति (ऐ० ब्रा० ३।४२)। आकाशमवकाशम्। आकाशं तदनाकाशं चक्रुर्भीमाम्बुवाहकाः (रा० ३।२३।७)। अनाकाशमप्रकाशं तमिस्रावगुण्ठितम्। स सम्प्रत्युरः पुरुषमाकाश्य (श० ब्रा० ७।४।१।४३)। आकाश्य सम्प्रेक्ष्य।

—कुञ्च् (कुञ्च कौटिल्याल्पीभावयोः)। क्वचिद्बाणनिकृत्तानि शिरांसि द्विषतां रणे स्फुरन्त्याकुञ्चितोष्ठानि (रा० ३।३१।२१)। आकुञ्चितावोष्ठौ भुग्नावोष्ठौ। अन्तर्वक्रीकृतावित्यर्थः।

—कू (कूङ् शब्दे)। दुर्योधनस्य चाकूतं तृषितस्येव विप्रुषः (भा० कर्ण० ६।२०)। आकूतं चेष्टितमिति नीलकण्ठः। चूडामण्डलबन्धनं तरलयत्याकूतजो

वेपथुः (उत्तर० ५।३५)। आकूतं भावः क्रोधावेशः। आकूतिः सत्या मनसो मे अस्तु (ऋ० १०।१२८।४)। आकूतिः सङ्कल्पः, अभिप्रायः, कामः।

—कृ (डुकृञ् करणे)। मर्यं न योषा कृणुते सधस्थ आ (ऋ० १०।४०।२)। आकृणुते आकरोति अभिमुखी करोति। यो नूनं मित्रावरुणावभीष्टय आचक्रे हव्यदातये (वा० सं० ३३।८७)। उक्ततोऽर्थः। आ पुरन्दरं चकृम विप्रवचस इन्द्रं गायन्तोऽवसे (ऋ० ८।६१।८)। उक्तचर एवार्थः। आ त्वामृजिश्वा सख्याय चक्रे (ऋ० ५।२६।११)। आचक्रे अभिमुखी करोति। त्वं तानिन्द्र वृत्रहन् प्रतीचः पुनराकृधि (अथर्व० ५।८।७)। इतः पुनरावर्तयेत्याह। पतिव्रतात्वात् सत्येन सोपश्रुतिमथाकरोत् (भा० उ० १३।२६)। आकरोत् आकारयत्। मृगप्रयुक्तान्रथकांश्च हैमानाचक्रिरेऽस्मै सुहृदालयेभ्यः (बुद्ध० २।२१)। आचक्रुः=आजह्रुः। दीर्घो न सिध्रमा कृणोत्यध्वा (ऋ० १।१७३।११)। आकृणोति निर्वर्तयति साधयति। आक्रियते व्यज्यतेऽनयेत्याकृतिः संस्थानमुच्यते। (पा० ४।१।६३ सूत्रे न्यासः)। यथैकबुद्धिविषया मूर्तिराक्रियते पटे (वा० प० १।५३)। आक्रियते व्यक्तिमापाद्यते। आकारय मुनीन् शीघ्रं भोजनाय (भा० ३)। आकारय आह्वय शब्दय। रदनिकामाकारय (मृच्छ० ३)। उक्तोऽर्थः। मध्यस्थदृष्टिमाकारयति) (मृच्छ० ४)। आकारयति आकर्षति बध्नाति। (महाराजं) पुनराकारयामास तमेव वरमङ्गना (रा० २।१३।२)। तमेव वरमुद्दिश्य राजानं सम्बोधयामास। ययाच इति तात्पर्यार्थः। यदविद्यया वस्त्वाकार्यते (यो० सू० २।४ भाष्ये)। आकार्यते साकारं मूर्तिमत् क्रियते। यावदरिः पारग्रामिकं विधिमाचिकीर्षति (दशकु०)। आचिकीर्षति निर्वोढुमिच्छति चिन्तयति। लोकान्त्संगृभ्य मुहुराचरिक्रत् (अथर्व० ११।५।६)। आचरिक्रत्=पुनः पुनः करोतीत्यर्थः। गोनामाचक्राणस्त्रीणि शीर्षा परा वर्क् (ऋ० १०।८।६)। आचक्राण आकुर्वन् आजन् समाजन्निति वा। जङ्गलं वनविच्छेदविभक्तं स्वामिना कृतम् (यो० वा० ६ (२) १८१।८)। आकृतं समन्तात् कृतम्। मुक्तश्चलितुमाकर्तुं शक्नोति न मनागपि (यो० वा० ५।८५।६)। आकर्तुमीषत् कर्तुम्। ममापि कौतूहलेनाकारित एषः (शा० ६)। आकारितः प्रेरितः। किङ्कृतेयकाकारणाऽऽहूतिरित्यर्थः।

—कृष् (कृष विलेखने)। स तैः प्रकृष्यताकृष्यत च (रा० ५।६१।१६)। प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः। आचकर्षतुरन्योन्यम् (भा० आदि० १६०।२५-२६)। आकर्षणमर्वाक् कर्षणम्। ६६।३२)। इष्टान्मृगानाभिमुख्येन कर्षन्तमनिष्टांश्च मुञ्चन्तमित्याह। दूरममुना सारङ्गेण वयमाकृष्टाः (शा०)। दूरं नीता इत्यर्थः। उमारूपेण यूयं ते संयमस्तिमितं मनः। शम्भोर्यतध्व-

माकृष्टुम् अयस्कान्तेन लोहवत् (कु० २।५९)। आकृष्टुमाहर्तुमावर्जयितुं वशे कर्तुम्। शाखां पुष्कराग्रेणाकृष्य (पञ्चत०)। आकृष्य स्वेन समं कृष्ट्वा। चापमाकृष्य (शिशु० ६।४०)। सज्यं कृत्वा। खड्गमाकृष्य=कोषान्निष्कृष्य, उत्खाय। हस्तात् कटकमाकृष्य (मृच्छ०)। आच्छिद्येत्यर्थः। पञ्चतन्त्रात्तथान्यस्माद् ग्रन्थादाकृष्य (हितोप० प्रस्तावनायाम्)। आकृष्य उद्धृत्य। तस्मादाकृष्य तद्राज्यं मम शीघ्रं प्रदीयताम् (भा० आदि० १६६। २१)। आकृष्य आच्छिद्य अपहृत्य। आकर्षादिभ्यः कन् (पा० ५।२।६४)। आकर्षात् ष्ठल् (पा० ४।४।९)। आकर्ष इति सुवर्णपरीक्षार्थो निकषोपल उच्यत इति काशिका। आकर्षस्तेऽवावफलः सुप्रणीतः (भा० सभा० ६३,६)। आकर्षो द्यूतम्। आकर्षः शारिफलके पाशके द्यूत इन्द्रिय इति विश्वः। यथा आम्यत्ययो ब्रह्मन् स्वयमाकर्षसन्निधौ (भा० पु० ७५।१४)। आकर्षः=अयस्कान्तः। आकर्षेण चरतीत्याकर्षिकः। आकर्षात्ष्ठल् (पा० ४।४।९)। आकर्ष इति सुवर्णपरीक्षार्थो निकषोपल इत्युक्तचरोर्थः।

—कॄ (कॄ विक्षेपे)। आ नः सोम पवमान किरा वसु (ऋ० ९।८१।३)। आकिरा=आकिर। सांहितिको दीर्घः। आ समन्तात् किर। भूरि नो द्रविणं देहीत्यर्थः। विचिन्वतीमाकिरन्तीमप्सरां साधुदेविनीम् (अथर्व० ४।३८।२)। उक्तोऽर्थः। न तापसैर्ब्राह्मणैर्वा वयोभिरपि वा श्वभिः। आकीर्णं भिक्षुकैर्वान्यैरगारमुपसंव्रजेत् (मनु० ६।५१)॥ आकीर्णं व्याप्तम्। ब्रह्मचारी सन् यो रेतःपातेन व्रतं विलुम्पति स आकीर्णीत्युच्यते। विलुप्तब्रह्मचर्यः।

—क्रन्द् (क्रदि आह्वाने रोदने च)। किं क्रन्दसि दुराक्रन्द (पञ्चत० ४।२९)। क्रन्दसि आक्रोशसि। आक्रन्दे चाप्यपेहीति न दण्डं मनुरब्रवीत् (मनु० ८।२९२)। आक्रन्द उच्चैरुच्चारः शब्दस्य। पुरूरवसमाक्रन्द (विक्रम० १)। आरणार्थमाकारयेत्यर्थः। आ त्वा शिशुराक्रन्दतु (पा० गृ० ३।४)। आक्रुश्याह्वयतु। तृणाग्रलग्नैस्तुहिनैः पतद्भिराक्रन्दतीवोषसि शीतकालः (ऋतु० ४।७)। आक्रन्दति रोदिति। शोकाश्रूणि मुञ्चति। आक्रन्दय बलमोजो न आधाः (ऋ० ६।४७।३०)। दुन्दुभिस्वनेन बलमाधेहीत्याह। आक्रन्दय धनपते वरम् (अथर्व० २।३६।६)। आक्रन्दय सन्ततमभिधापयेत्यर्थ इति सायणः। अन्ये आङः क्रन्द सातत्य इति धातुमभ्यूहति भाष्यकारः। जिघांसुद्रौणिमाक्रन्दे एक एवाभिधावति (भा० सौ० १२।२)। आक्रन्दो दारुणो रणः। आरावे रुदिते त्रातर्याक्रन्दो दारुणे रणे (अमरः)। युध्यन्ते यस्यामाक्रन्दो यस्यां वदति दुन्दुभिः (अथर्व० १२।१।४१)। आक्रन्द आरावो रणभेरीनादः। यात्रायां यदि विज्ञातमनाक्रन्दमनन्तरम् (भा० शां० ६६।१९)। आक्रन्द-

स्रोता। अनाक्रन्दम् मित्रहीनम्। अनन्तरं बन्धुहीनम्। पार्ष्णिग्राहं च सम्प्रेक्ष्य तथाऽऽक्रन्दं च मण्डले (मनु० ७।२०७)। आक्रन्दो नाम नृपतिर्यस्य विजिगीषो राज्यादेकान्तरं राज्यं (न त्वनन्तरम्)। दष्टमेवमनाक्रन्दे भद्रे काममहाहिना (भा० आदि० १७२।६)। अनाक्रन्देऽत्रातरि (काले)। एह्येहीति शिखण्डिनां पटुतरं केकाभिराक्रन्दितः (मेघः) (मृच्छ० ५।२३)। आक्रन्दित आहूतः। आक्रन्दितं दोषवद् वेदाध्ययनमुच्यते (संहितोप० ७।४)।

—क्रम् (क्रमु पादविक्षेपे)। आयं गौः पृश्निरक्रमीत् (ऋ० १०।१८९।१)। आक्रमीत् पर्यक्रमीत्। आ वो मूर्धानमक्रमीम् (ऋ० १०।१६६।५)। यावत्प्रतापनिधिराक्रमते न भानुरह्नाय तावदरुणेन तमो निरस्तम् (रघु० ५।७१)। आक्रमते दिवमारोहति, उदयत इत्यर्थः। आक्रामति धूमो हर्म्यतलम्। आङ उद्गमने (पा० १।३।४०) इत्यत्र प्रत्युदाहरणं वृत्तौ। आरोहतीत्यर्थः। स्वर्गं लोकमाक्रामत (लाट्या श्रौ० ८।१२।८)। उक्तोऽर्थः। आक्रामति वृद्धः कुतुपम्। आरोहति, अधितिष्ठति, श्रयते, प्रतिश्रयते। बाह्यास्थानमण्डपस्थापितमासनमाचक्राम (हर्ष०)। अधितष्ठावित्यर्थः। दैवेनाक्रम्यते सर्वं दैवं हि परमा गतिः (रा० १।५९।२३)। आक्रम्यतेऽभिभूयते। येनाक्रमन्त्यृषयो ह्याप्तकामाः (मुण्डकोप० ३।१।१)। आक्रमन्ति=आक्रामन्ति, प्राप्नुवन्ति। न च बर्हिराक्रामति (शां० श्रौ० ३।१९।१८)। बर्हिषि पदं न निदधातीत्यर्थः। पादं पादेन नाक्रमेत् (भा० अनु० ४९८२)। पादस्योपरि पादं न निदधीतेत्यर्थः। अथाश्वमाक्रमयति (श० ब्रा० २।१।४।२३)। आक्रमयति परिक्रमयति। स तैराक्रमयामास शुद्धान्तं शुद्धकर्मभिः (कु० ६।५२)। आक्रमयामास प्रवेशयामास। विजिगीषवो यथा परभूमिमाक्रमन्ति (हितोप०)। आक्रमन्ति आक्रामन्ति आस्कन्दन्ति प्रार्थयन्तेऽभियान्ति। संक्षेपेणोपदिष्टमार्गं आक्रम्यमाणो न दुःसहो भवति। आक्रम्यमाण आस्थीयमानः। इह समदशकुन्ताक्रान्तवानीरवीरुत्० (उत्तर० २।२०)। आक्रान्ताऽऽश्रिताऽध्यासिता। त्रेताग्निधूमाग्रम्···आक्रान्तविमानमार्गम् (रघु० १३।३७)। आक्रान्त आसादितो व्याप्तः। आतपाक्रान्तोयमुद्देशः (माल० ३)। व्याप्त इत्यर्थः। आक्रान्तपूर्वमिव भुजङ्गम् (रघु० ६।७९)। आक्रान्तम्=पादाक्रान्तम् अधस्पदं कृतमित्यर्थः। शुशुभे तेन चाक्रान्तं मङ्गलायतनं महत् (रघु० १७।२९)। आक्रान्तमध्यासितम्। साऽऽक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयम् (अमरु० ३४)। चकाराक्रान्तलक्ष्मीकः ससाधनमिवाश्रमम् (कि० ११।७)। आक्रान्ताऽभिभूता। आक्रान्ता तिलकक्रियापि तिलकैः (माल० ३।५)। आक्रान्ता विशेषिताऽतिशयिता। दिदृक्षाक्रान्तहृदयः। दर्शनेच्छागृहीतचेताः। निर्ययुस्तुरगाक्रान्ता रथैश्च सुमहारथाः (रा० ६।१२७।१३)। तुरगाक्रान्ता अश्वारूढाः। वलिभिर्मुखमाक्रान्तम्

(भर्तृ० ३)। **आक्रान्तं व्याप्तम्।** शङ्काभिः सर्वमाक्रान्तम् अन्नं पानं च भूतले (हितोप० १।२१)। अस्माभिरियमाक्रान्ता मदीया तेन वल्लभा। **आक्रान्ता वशीकृता।** सन्धिनी। गौराक्रान्ता वृषभेण (अमरः)। **आक्रान्ताऽऽरूढा।** आक्रान्तिसंभावितपादपीठम् (कु० ३।११)। **आक्रान्तिश्चरणन्यासः।** आक्रान्तितो न वशमेति महान्परस्य (शिशु० ५।४१)। **आक्रान्तिरास्कन्दोऽवस्कन्दः।** यो भूतानि धनाक्रान्त्या वधात् क्लेशाच्च रक्षति (भा० शां० ९७।८)। **धनाक्रान्त्याः (स्वस्य) धनस्य अपहारात्।** आक्रम्य वाजिन् पृथिवीम् (वा० सं० ११।१९)। **पदा मृत्पिण्डमधिष्ठायेत्याह।** दैवमाक्रम्य पौरुषेण। **बाधित्वेत्यर्थः।** एक एवास्य दोषो गुणानाक्रम्य तिष्ठति (भा० वन० २९४।२२)। **आक्रम्याऽभिभूय।** शिखरमाक्रम्य। **शिखरमारुह्य।** पर्वताग्रं तु लोकात्मा हस्तेनाक्रम्य केशवः। देवानां मध्यतः स्थित्वा ममन्थ पुरुषोत्तमः (रा० १।४५।३१)॥ **आक्रम्य धृत्वा, गृहीत्वा, अवलम्ब्य।** निगृह्य रोषं शोकं च धैर्यमाक्रम्य केवलम् (रा० २।२२।३)। **आक्रम्य संश्रित्य, आस्थाय, आलम्ब्य।** यं च पन्थानमाक्रम्य प्रयाति मनुजेश्वरः (रा० ५।८१।२२)। **उक्तोऽर्थः।** शावकानाक्रम्य कोटरमानीय प्रत्यहं खादति (हितोप०)। **आक्रम्य=आस्कद्य=वशमानीय।** भुजगपतिरयं मे मार्गमाक्रम्य सुप्तः (मृच्छ० ९।१२)। **आक्रम्य व्याप्य रुद्ध्वा।** योजनानां सहस्राणि बहून्याक्रम्य तिष्ठति (कथा० १।१५)। **आक्रम्य, व्याप्य।** जम्बुद्वीपमाक्रम्य (हितोप० ३)। **आक्रम्य=अतिक्रम्य।** आक्रम्य मानुषं कण्ठमाच्छिद्य धमनीमपि। उष्णं नवं प्रपास्यामि फेनिलं रुधिरं बहु (भा० आदि० १५२।१०)॥ **कण्ठमाक्रम्य=कण्ठमवस्कद्य शिरोधिं भित्त्वा।** असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः। अनाक्रम्य जगत्कृत्स्नं नो सन्ध्यां भजते रविः (राज० ४।४४१)॥ **अनाक्रम्य=अलङ्घयित्वा, तेजसाऽनभिभूय।** केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमते (बृह० उ० ३।१।६)। **आक्रमः सोपानः।** हरिराक्रमणेन संनतिं किल बिभ्रीत भियेत्यसंभवः (शिशु० १६।३४)। **आक्रमणमास्कन्दनम्।** स्वेन्द्रियाक्रमणं विना (यो० वा० ६ (१)८१।१५)। **इन्द्रियाक्रमणम्=इन्द्रियसंयमनम्।**

—**क्री (डुक्रीञ् द्रव्यविनिमये)।** भार्यां शुल्काक्रीताम् (दशकु०)। **आङा नार्थः।**

—**क्रीड् (क्रीडृ विहारे)।** आक्रीडमानो हृष्टात्मा (भा० वन० १४६।२७)। **क्रीडन् इत्यर्थः।** पुमान् आक्रीड उद्यानमित्यमरः। रुद्रस्याक्रीडसदृशः संहारः सर्वदेहिनाम् (भा० द्रोण० १२४।४४)। **आक्रीडः क्रीडनं क्रीडा।** ततो गत्वोद्यानं यथासुखमाक्रीड्य (अवि० १)। **आक्रीड्य क्रीडित्वा।**

—क्रुध् (क्रुध क्रोधे)। उपाध्यायस्य दुहिता मामाक्रुध्य निरागसम् (बृ० श्लो० सं० ४।६४)। आक्रुध्य=अभिक्रुध्य।

—क्रुश् (क्रुश आह्वाने रोदने च)। अये गौरीनाथ त्रिपुरहर शम्भो त्रिनयन। प्रसीदेत्याक्रोशन् (भर्तृ० ३।८७)। आक्रोशन् उच्चैरुदाहरन्। पतिमाचुक्रुशुश्चापि सस्वनं चापि चुक्रुशुः (रा० २।२०।६)। आचुक्रुशुराचक्रन्दुः। आऽन्यः क्रोशति प्रान्यः शंसति (तै० सं० ७।५।९।३)। आक्रोशति, निन्दति, अवक्षिपति, परिवदति। यथाभिप्रेतमितरां ब्रह्मचार्याक्रोशेत् (लाट्या० श्रौ० ४।३।१६)। आक्रोशेत् शपेत्। क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् (मनु० ६।४८)। आक्रुष्टः शप्तः, अपशब्दमुक्तः। तत्र स्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति (अमरः)। आक्रोशोऽभिशंसनम्। आक्रोशमपि परिहासमाकलयन्ति (काद०)। आक्रोशो निन्दा। अपवादः। षष्ठ्या आक्रोशे (पा० ६।३।२१)। उक्तोऽर्थः। शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति (मनु० ८।२६७)। आक्रुश्य=अभिशप्य=अपभाष्य। तं तु मां जीवलोकोऽयं नूनमाक्रोष्टुमर्हति (रा० २।१२।६६)। आक्रोष्टुं धिक्कर्तुम्।

—क्षर् (क्षर संचलने)। मातरं पितरं जायां भ्रातरं तनयं गुरुम्। आक्षारयन् शतं दाप्यः (मनु० ८।२७५)। आक्षारयन् दूषयन्। यशो दूषयन्, दोषेण गच्छन्, दोषभाग् इति प्रख्यापयन्। पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स पापभाक् (नारद०)। आक्षारयेत् दोषमारोपयेत्। यः स्वल्पेनापि कार्येण सुहृदाऽऽक्षारितो भवेत् (भा० शां० ८३।४०)। आक्षारितो धनग्रहणेन रिक्तः स्यादित्यर्थ इति नीलकण्ठः। यद्यप्याङ्पूर्वस्य क्षरतेः क्षीणतायां प्रसिद्धिर्न, केवलस्य तु समस्ति तपः क्षरति विस्मयादित्यादिषु दर्शनात्। पूर्वमाक्षारितो दोषैः (मनु० ८।३५४)। आक्षारितो निन्दितोऽभिशस्तः।

—क्षि (क्षि निवासगत्योः)। सर्वान्पथो अनृणा आक्षियेम (अथर्व० ६।११७।३)। आक्षियेम=आवसेम। य आक्षियन्ति पृथिवीमुत द्याम् (अथर्व० १८।२।४६)। उक्तोऽर्थः। तान् जनान् य आक्षियन्पृथिवीम् (अथर्व० १२।१।५७)।

—क्षिप् (क्षिप प्रेरणे)। तमाक्षिपत्कीचकोऽथ बलेन बलिनां वरः (भा० वि० २२।६१)। आक्षिपत्=अवाक्षिपत्=अवापातयत्। स्वं वत्समतिपिबन्तं विषाणकोट्याऽऽक्षिपति धेनुः (तन्त्रा० ४।१०)। आक्षिपति पराणुदति। यथा नाक्षिप्यसे विषयैः (काद०)। नाकृष्यसे न प्रधर्ष्यसे। अरे रे राधागर्भभारभूत किमेवमाक्षिपसि (वेणी० ३)। आक्षिपसि अधिक्षिपसि। वस्तुतस्तु नेह पूर्वपदमाक्षिप्यते (पा० ६।३।३४ सूत्रे सि० कौ०)। आक्षिप्यते प्रत्यवमृश्यते।

मतोः छः सूक्तसाम्नोः (पा० ५।२।५९)। अत्र काशिका—मत्वर्थग्रहणेन समर्थविभक्तिः प्रकृतिविशेषणं प्रत्ययार्थं इति सर्वमाक्षिप्यते । आक्षिप्यते सन्निधाप्यते उपस्थाप्यत इति पदमञ्जरी । आङ्=इतः=अर्वाक् । सम्बन्धिशब्दाश्च पुनरेवमात्मका यदुत सम्बन्धिनमाक्षिपन्ति (भाष्ये)। जात्या व्यक्तिराक्षिप्यते (का० प्र० २)। उक्तोऽर्थः । कथंचित्समाधीयमानमप्येतद् गोमयपायसीयं न्यायमाक्षिपति (यो० सू० १।३२ भाष्ये)। हीनाङ्गानतिरिक्ताङ्गान्... नाक्षिपेत् (मनु० ४।१४१)। नाक्षिपेत् नोपहसेत्। यावत्ते पृथिवीं पार्था हत्वा भ्रातृशतं रणे। नाक्षिपन्ति महात्मानः" (भा० द्रोण० १२२।१९-२०)॥ आच्छिन्दन्ति । ततस्तु तावकं सैन्यं दीप्तैः शरगभस्तिभिः । आक्षिपत्पल्वलाम्बूनि निदाघार्क इव प्रभुः (भा० द्रोण० १४६।१०-११)॥ आक्षिपत्=अहरत्=उदच्छिनत् । स ददाति मनुष्येभ्यः स चैवाक्षिपते पुनः (भा० द्रोण० २०२।११३)। आक्षिपते आच्छिनत्ति, प्रत्यादत्ते । तस्मिन्पिचुप्लोतं वाऽऽक्षिपेत् (सुश्रुत० २।१९३।२१)। निक्षिपेदित्यर्थः । संयोज्याक्षिपते भूयस्तथा भूतानि भूतकृत् (भा० पु० १०।८२।४४)। आक्षिप्ते संहरते । हिंसकस्तावद् वध्यस्य वीर्यमाक्षिपति (यो० सू० २।३४ भाष्ये)। पदन्नोमास्—(६।१।६३) सूत्रे पदादय आदेशा पादादिकां स्वार्थिकीं प्रकृतिमाक्षिपन्तीत्युक्तम्। आक्षेप उपस्थितिः । उपस्थापयन्तीत्यर्थः । न यौवनमाक्षिपेज्जरा मे (बुद्ध० ५।३५)। आक्षिपेत् हरेत् । आच्छिन्द्यात् । स्वोक्तमाक्षिपति । प्रतिषेधतीत्यर्थः । आक्षिपन्तीमिव प्रभां शशिनः स्वेन तेजसा (भा० वन० ५५।१३) । आक्षिपन्तीम्=आच्छिन्दतीम्, न्यक्कुर्वतीम्, पश्चात्कुर्वतीम्, अधरयन्तीम् । आक्षिपन्तं प्रभां भानोः स्वशृङ्गैः काञ्चनोज्ज्वलैः (भा० आदि० १७।५)। उक्तचर एवार्थः । आक्षिपंस्तरसा गिरीन् (भा० पु० ६।१२।२८)। आक्षिपन् हरन् । आक्षिप्यमाणः शस्त्रास्त्रकोविदः शस्त्रमन्यवत् (राज० ७।१०-३२)। आक्षिप्यमाणः तिरस्क्रियमाणः । कुतूहलाक्षिप्तहृदयः (उत्तर०)। कौतुकाकृष्टचेता इत्याह । अधिकाराक्षिप्तयोः (मुद्रा० १)। आक्षिप्त आच्छिन्न आमृष्ट इत्यनर्थान्तरम् । आक्षिप्तमिव मे चेतः (वेणी० २)। आक्षिप्तं विक्षिप्तं व्याकुलम् । अक्लेशलभ्या हि भवन्त्युत्तमार्था महात्मनाम् । जन्मान्तरार्जिताः स्फारसंस्काराक्षिप्तसिद्धयः (कथा० ७।१९)॥ आक्षिप्ता आहृताः । आक्षिप्तसूत्रा मणयश् छिन्नपक्षा इव द्विजाः (भा० वन० ८०।५)। आक्षिप्तसूत्राः छिन्नसूत्राः । आक्षिप्तो जयकुञ्जरेण तुरगात् (रत्ना० ४।१२)। आक्षिप्तोधः पातितः । अनुग्रहस्तावदाक्षिप्ताधिकारयोर्भद्रभटपुरुषदत्तयोः (मुद्रा० २)। आच्छिन्ननियोगयोरित्यर्थः । वरमन्धो न चक्षुष्मान् मदादाक्षिप्तसत्पथः (का० नी० सा० १५।४)। परित्यक्तसन्मार्ग इत्याह । मधूत्सवाक्षिप्तपौरलोकं गृहम्

(कथा० ४।३५)। आक्षिप्त आकृष्टः। भूमावाक्षिप्य कीचकम् (भा० वि० १६। ६)। आक्षिप्य पातयित्वा। (शिलायाम्) आक्षिप्य स्वेच्छया भक्षयति बको जलचरान् (पञ्चत०)। एवंवादिनो वचनमाक्षिप्य (काद०)। अन्तरा प्रतिबध्येत्यर्थः। इत्याक्षिप्य तत्कथां कथंचित् प्रसाद्यमानोपि न तस्थौ (वि० पु० ४।१३। १०१)। उक्तोऽर्थः। अग्रपादमाक्षिप्य (रघु० ७।७)। आक्षिप्य प्रतिसंहृत्य। ततस्तेजश्च चक्षुश्च सर्वप्राणभृतामपि। आक्षिप्य सहसा सूर्यो द्योतते स्वेन तेजसा (ग० ४।४०।६५)॥ आक्षिप्य अभिभूय। कल्पान्ते चैव सर्वेषां स्मृतिमाक्षिप्य तिष्ठति (भा० अनु० १४।३५०)। आक्षिप्य विलुप्य संहृत्य। स केशेषु परामृष्टो बलेन बलिनां वरः। आक्षिप्य केशान्वेगेन बाह्वोर्जग्राह पाण्डवम् (भा० वि० २२।५२-५३)॥ आक्षिप्य मोचयित्वा। अशुभेभ्यः सदाऽऽक्षिप्य (मानसम्) शुभेष्वेवावतारयेत् (भा० शां० ३०८।१९)। आक्षिप्य विप्रकृष्य वियोज्य। अंशुकाक्षेपविलज्जितानाम् (कु० १।१४)। अंशुकाक्षेपोंऽशुकापहरणम्। कल्पाक्षेपकठोरभैरवमरुद० (उत्तर० ५।१४)। कल्पाक्षेपः सृष्टिसंहारः, संवर्तः, सम्प्लवः। विरुद्धमाक्षेपवचस्तितिक्षितम् (कि० १४।२५)। आक्षेपवचोऽधिक्षेपवचनम्। विषयाक्षेपपर्यस्तबुद्धिः (भर्तृ० ३।४७)। विषयाक्षेप इन्द्रियार्थाकर्षणम्। गोरोचनाक्षेपनितान्तगौरैः (कु० ७।१७)। आक्षेपो निक्षेपो न्यासः। स्वसिद्धये पराक्षेपः (का० प्र० २)। आक्षेपः प्रत्यवमर्शः उपलक्षणम्। आक्षेपो विरोधोक्तिर्दोषकथनम्। आक्षेपोऽलङ्कारविशेषः साहित्ये—आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात्। चन्द्र सन्दर्शयात्मानमथवास्ति प्रियामुखम् (कुवलय० ७३)॥ निगदव्याख्यातः श्लोकः। कथारसस्याक्षेपसामर्थ्यम् (काद०)। आक्षेपो मनोविनोदः। वदनमाहरन्तीं तत्कृताक्षेपमीशः (कु० ७।९५)। आक्षेप आकर्षणमुन्नमनम्। पाण्डवेपु च साक्षेपं द्रोण जानाति ते सुतः (भा० द्रोण० १२।३०)। साक्षेपं पक्षपातिनम्। सोऽयं प्राप्तस्तवाक्षेपम् (भा० द्रोण० १०२।६)। आक्षेपः शरगोचरः। अपगताक्षेपः (यो० वा० ४।३५।६८)। आक्षेप उपहितभावः। त्यक्तसंकुचितात्मस्वरूप इत्यर्थः। अभिद्रवणमाक्षेपमवस्थानं सविग्रहम् (भा० शल्य० ५७।१९)। आक्षेपम् परयत्नस्य तत्पातनहेतुतासम्पादनम्। आक्षेपसर्गयोः कर्ता निश्चलः पुरुषः स्मृतः (भा० शां० ३१८।४३)। आक्षेपः प्रलयः। आयामविस्रम्भाक्षेपैस्त उच्यन्ते (ऋ० प्रा० ३।१)। आक्षेपस्तिर्यग्गमनं मात्राणाम् इत्युवटः। बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः प्राणायामः (यो० सू० ४।२।५१)। विषयाक्षेपी विषयसम्बन्धी।

—क्ष्णु (क्ष्णु तेजने)। तूष्णीमन्यः कुम्भमाक्ष्णौति (का० श्रौ० २१। ४।६)। क्षिपतीत्यर्थः। भिनत्तीति वा।

—खिद् (खिद छन्दोमात्रगोचरः)। शत्रूयतामाखिदा भोजनानि (अथर्व०

४।२३।७)। आच्छिन्धीत्यर्थः। आङ्पूर्वः खिदिराच्छेदने वर्तत इति सायणः। आहं खिदामि ते मनो राजाश्वः पृष्ठ्यामिव (अथर्व० ६।१०२।२)। यथाखिदते प्रखिदते च (तै० सं० ४।५।६।२)। उक्तोऽर्थः।

—खन् (खनु अवदारणे)। आङ्पूर्वः खनतिरन्तर्विदारणे वर्तते यथाऽऽखुरित्यत्र यथा वाऽऽखर इत्यत्र।

—ख्या (ख्या प्रकथने)। तदेकं सत्त्रेधाऽऽख्यायते (श० ब्रा० १०।४।१।१)। आख्यायते कीर्त्यते, उदाह्रियते, कथ्यते। देवजातानि गणश आख्यायन्ते (श० ब्रा० १४।४।२।२४)। उक्तोऽर्थः। सुवर्णबिन्दुरित्याख्यायते (मालती० ९)। आख्यायते संज्ञायते, समाख्यायते। आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते (बृहदा० उ० ६।५।३)। प्रसिद्धिं नीयन्त इत्याह। अन्तर्गतमपि व्यक्तमाख्याति हृदयं हृदा (रा० १।७७।२८)। आख्याति जानाति। ते रामाय वधोपायमाचख्युर्विबुधद्विषः (रघु० १५।५)। रामायाऽऽचख्युः शशंसुः। योऽधीते चतुरो वेदान्सर्वानाख्यानपञ्चमान् (भा० वन० ५८।९)। आख्यानमितिहासः पूर्ववृत्तोक्तिः। आख्यानमाख्यास्यन् (श० ब्रा० १३।४।३।२)। तदाख्यातविधानं च योगः संचार एव च (भा० शां० ५९।४८)। आख्यातविधानम् अभिमन्त्रितदुन्दुभिध्वनिना प्रयाणादिकथनम्। सेवा श्ववृत्तिराख्याता (मनु० ४।६)। आख्याता व्यपदिष्टा कीर्तिता। किंवा शकुन्तलेत्यस्य मातुराख्या (शा० ७)। आख्या समाख्या, संज्ञा, नामधेयम्। पश्चादुमाख्यां सुमुखी जगाम (कु० १।२६)। बृसीषु रुचिराख्यासु निषेदुः काञ्चनीषु ते (रा० ७।६०।१२)। आख्याऽभिख्या शोभा। विभाषाऽऽख्यानपरिप्रश्नयोरिञ्च (पा० ३।३।११०)। आख्यानं प्रतिवचनम्। न ह्यन्यत्पृष्टेनान्यदाख्येयम् (२।२।२४ सूत्रे भाष्ये)। आख्येयं प्रतिवक्तव्यम्। आख्यातोपयोगे (पा० १।४।२९) आख्यातोपदेष्टा। आख्यातारश्च विद्यन्ते पुमांश्चेद् विद्यते कुले (भा० उ० ७२।६३)। आख्यातारः कीर्तयितारः, वर्णयितारः।

—गम् (गम्लृ गतौ)। विश्वो ह्यन्यो अरिराजगाम (ऋ० १०।२८।१)। आययावित्यर्थः। आ घा ता गच्छान् उत्तरा युगानि (ऋ० १०।१०।१०)। उक्तोऽर्थः। अथ ये प्रवृत्तेर्थे अमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति (नि० १।९)। आगच्छन्ति आगमा उपजना भवन्ति, उपचीयन्त इत्यर्थः। अधीयीत वा तद्विद्भ्यो वा पर्वागमयेत (गो० गृ० १।५।१४)। आगमयेत शिक्षेत। उपाददीत। उपयुञ्जीत। आगमय दण्डनीतिं कुलविद्याम् (दशकु०)। आगमय शिक्षस्व। आगमयस्व तावन्माणवक। सहस्व, प्रतीक्षस्वेत्यर्थः। आगमेः क्षमायामिति वार्तिके काशिकायामुदाहरणम्। यावदागमयतेऽथ नरेन्द्रान् स स्वयंवरमहाय महीन्द्रः (नै० ५।१)। आगमयते आनाययति। सर्वमागमयामास पाण्ड-

वानां विचेष्टितम् (भा० उ० ७।४)। आगमयामास ज्ञातवान्। आत्मनस्तु ततः श्रेयो मार्गवात्सुमहातपाः। ज्ञानमागमयत्प्रीत्या... (भा० शां० १२४।२५)॥ आगमयत् अलब्ध, अविदत्। यत्रागमयमानानामसत्कारेण पृच्छताम् (भा० शां० २८७।४१)। आगमयमानानां शिक्षमाणानाम्। भवतां च यथा जन्म तदप्यागमितं मया (भा० आदि० १३७।१६)। आगमितम् अवगतम्। सम्यगागमिता विद्या प्रबोधविनयाविव (रघु० १०।७१)। आगमिता उपात्ता गृहीता। पुराणमागम्य ततो ब्रवीम्यहम् (भा० आदि० ५६।७)। तद् व्याकरणमागम्य परं ब्रह्माधिगम्यते (वा० प० १।२२)। आगम्य=अधिगम्य, अवगम्य। देशान्तरादागमय्य व्याचक्षाणान् क्षमापतिः (राज० ४।४८८)। आगमय्य आनाय्य। यथाऽयमागमो मह्यं यथा चेदमभूत्पुरा (भा० आदि० ७१।१८)। आगमो गुरूपदेशः। आगमे च प्रयोगे च चक्रे तुल्यमिवात्मना (भा० आदि० २२१। ७४)। आगमः शास्त्रम्। यस्यागमः केवलजीविकायै तं ज्ञानपण्यं वणिजं वदन्ति (माल० १।१७)। आगमः शास्त्रज्ञानं व्युत्पत्तिः। द्वावप्यागमिनौ प्रयोगनिपुणौ च (माल० १ )। आगमिनौ शास्त्रज्ञौ। बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः (रघु० १०।२६)। आगमः शास्त्रम्। नाधर्मेणागमः कश्चिन्मानुषान् प्रति वर्तते (मनु० १।८१)। आगमो धनादिप्राप्तिः। आगम निर्गमं स्थानं तथा वृद्धिक्षयावुभौ (मनु० ८।४०१)। आगमो देशान्तरीयद्रव्यस्यागमनम्। यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते (परिभाषा)। आगम उपजनः। पूर्वभुक्त्या च सततमुदकस्यागमेन च (एतैर्लिङ्गैर्नयेत्सीमाम्) (मनु० ८।२५२)। आगमः प्रवाहः। अत्रैव च मया प्राप्त आगमो वानरेषु वै (रा० ६।४।३०)। आगमः परिचयः। इति चाप्यागमं भूयो दैवस्य प्रतिपालये (भा० वि० २०।७)। आगम आनुकूल्यम्। दैवस्य चागमे यत्नस्तेन कार्यो विजानता (भा० वि० २०।६)। उक्तपूर्व एवार्थः। आगमा वः शिवाः सन्तु स्वस्था भवत पुत्रकाः (भा० आश्रम० ३६।४०)। आगमाः पन्थानः। आगमास्ते शिवाः सन्तु (रा० २।२५।२१)। अनन्तरोदीरित एवार्थः। नियमस्तु स यत्कर्मानित्यमागन्तुसाधनम् (अमरः)। आगन्तु बाह्यं कादाचित्कम्। आगन्तुकः पाठः। प्रक्षिप्तः, असम्प्रदायः। बहुप्रकृतावागन्तुना पर्वणाऽवग्रहो भवति (वा० प्रा० ४।७)। आगन्तु अस्युच्चितम्। स न मन्येतागन्तूनिवार्थान् देवतानाम् (नि० ७।४)। आगन्तवो बाह्याः, बहिष्ट आगता न तु देवतास्मान्तर्भूताः।

—गल् (गलेति लौकिकः)। बभौ वर्षाम्बुविक्लिन्नं पद्ममागलितं यथा (भा० आदि० १३६।३४)। आगलितं गलितमवपतितं भ्रष्टम्। पार्श्वागलित-[illegible]ोरः (रा० ५।१३।३४)। आगलितः स्रस्तः।

—गुर् (गुरी उद्यमने)। द्विरागूर्य मैत्रावरुणो द्विः प्रेष्यति (ऐ० ब्रा० २।२८)। पुरोडाशं पचत्यं जुषस्वेन्द्रागुरस्व च (ऋ० ३।५२।२)। आगुरस्व=अनुमन्यस्व। आ च शास्स्वा च गुरस्व (वा० सं० २१।६१)। आगुरस्व=उद्यच्छ। धात्वर्थ एवानुवृत्तः। दैवीं वाचं दुन्दुभ आगुरस्व (अथर्व० ५।२०।४)। उक्तचर एवार्थः। सर्वाभ्यो वा एष देवताभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानमागुरते। यः सत्रायागुरते (तै० ब्रा० १।४।७।७)। छेदार्थमागूर्णपरश्वधानाम् (अवदा० विश्व० जा० ४०)। उद्यतस्वधितीनामित्याह। अधिकृत्य प्रस्तुत्य आगूर्येत्यर्थ इति अधिकृत्य कृते ग्रन्थे (४।३।८७) इत्यत्र काशिका।

—गूर् (गूर उद्यमने)। गिरा प्रभोरुपालब्धस्तदागूरणगर्भया (राज० ७।१९९२)। आगूरणं भर्त्सनम्।

—गॄ (गॄ शब्दे)। यया चिद्विश्वे वसवो गृणन्ति (ऋ० ७।३८।३)। आगृणन्ति प्रशंसन्ति, स्तुवन्ति। आ यस्य ते महिमानं शतमूते शतक्रतो गीर्भिर्गृणन्ति कारवः (ऋ० ८।४६।३)। उक्तोऽर्थः।

—गै (कै गै शब्दे)। स ह स्मैभ्यः कामानागायति। आगाता ह वै कामानां भवति (छां० उ० १।२।१४)। कं ते काममागायानि (छां० उ० १।७।९)। कामानागायति स्म गानेन सम्पादयति स्म। आगाता गानेन सम्पादकः। आगायानि गानेन सम्पादयानि। यो वाचि भागस्तं देवेभ्य आगायत् (श० ब्रा० १४।४।१।३)। उक्तोऽर्थः।

—ग्रन्थ् (ग्रन्थ सन्दर्भे)। तद्यथा पुनराग्रन्थं पुनर्निग्रन्थमन्तं बध्नीयान्मयूखं वान्ततो धारणाय निहन्यात् तादृक् तत् (ऐ० ब्रा० ५।१५)।

—ग्रह् (ग्रह उपादाने)। आ ता एता वचोयुजा हरी गृभ्णे सुमद्रथा (ऋ० ८।४५।३९)। आगृभ्णे=आगृह्णे, रुणध्मि, वारयामीत्यर्थः। आ गृह्णीतं सं बृहतं प्राणापानान्न्यर्त्रुदे (अथर्व० ११।९।११)। अयमागृहीतकमनीयकङ्कणः (करः) (उत्तर० १।१८)। आगृहीतो बद्धः। चलेपि काकस्य पदार्पणाग्रहः (नै०)। आग्रहोऽभिनिवेशः।

—घुष् (घुषिर् अविशब्दने, घुषिर् शब्द इत्येके)। आस्य श्रवस्याद् आ च घोषात् (ऋ० ५।३७।३)। आघोषात् संश्रवस्य विषयः स्यादित्यर्थः।

—घ्रा (घ्रा गन्धोपादाने)। गन्धमाघ्राय चोर्व्याः (मेघ० २१)। गन्धमुपादायेत्यर्थः। येन वा गन्धानाजिघ्रति (ऐ० उ० ५।१)। आ जिघ्र कलशम् (वा० सं० ८।४२)। मूर्ध्न्याघ्रायते श्वापदैः (सुश्रुते १।११०।४)। उक्तोऽर्थः। मूर्ध्नि केशवमाघ्राय (भा० आदि० २२१।४०)। आघ्राय चुम्बितश्च नासिकया

स्पृष्ट्वा वा ।। आजघ्रुर्मूर्ध्नि बालांश्च (भट्टि० १४।१२)। उक्तोऽर्थः । व्याघ्रो मामाघ्रातुमागतवान् (दशकु०) । आघ्रातुमाक्रमितुमवस्कन्तुम् । कामाघ्रातयाऽनया (दशकु०) । कन्दर्पाक्रान्तयेत्यर्थः ।

—चक्ष् (चक्षिङ् व्यक्तायां वाचि)। आचष्ट आसां पाथो नदीनां वरुण उग्रचक्षाः (ऋ० ८।३४।१०) । आचष्टे सम्पश्यति । पाथसि सलिले दृशं पातयति । वातो देवेभ्य आचष्टे यथा पुरुष ते मनः (श० ब्रा० ३।४।२।७) । आचष्टे ज्ञपयति वेदयति आख्याति । गां धयन्तीं परस्मै नाचक्षीतेति स्मृतिः । वत्सं धापयमानां गां परस्मै न शंसेदित्यर्थः । रामायाचचक्षे ताम् (रा० ३।२।६) । आचचक्षे...भर्त्रे कन्यां शिखण्डिनीम् । आचचक्षे प्रख्यापयामास । तं रथं राजपुत्राय सूतः...आचचक्षे (रा० २।३६।१३) । सज्जो रथ इति निवेदयामास । भैरवमुच्चैर्विरुवन्मृगोऽसकृद् ग्रामघातमाचष्टे (व० बृ० सं० २६।३) । आचष्टे ग्रामघातनिमित्तभावमात्मनो वेदयति । शर्व इति यथा प्राच्या आचक्षते भव इति यथा वाहीकाः । (श० ब्रा० १।७।३।-) । आचक्षते संजानते संज्ञया कीर्तयन्ति ।

—चम् (चमु भक्षणे) । आचान्तः पुनराचामेत् (गो० गृ० १२।३७) । आङ् ईषदर्थे । ईषद् भक्षयेत् अश्नीयात् । त्रिराचामेदपः पूर्वम् (मनु० २।६०) । उक्तोऽर्थः । अनुष्णाभिरफेनाभिस्तीर्थेन...सर्वदाचामेत् (मनु० २।६१) । आचामेत् प्रमृज्यात् (मुखम्), शोधयेत् । आकाशवायुर्दिनयौवनोत्थानाचामति स्वेदलवान्मुखे ते (रघु० १३।२०) । हरतीत्युपचरितोऽर्थः । ते हया वासुदेवस्य दारुकेण प्रचोदिताः । पन्थानमाचेमुरिव ग्रसमाना इवाम्बरम् (भा० उ० ८३।५६) ।। पन्थानमतित्वरिता अत्यक्रामन्नित्यर्थः । नाचेमे हिममपि वारि वारणेन (कि० ७।३४) । शैवालभोजनश्चैव तथाऽऽचामेन वर्तयन् (भा० शां० (३०३।१६) । आचामो भक्तमण्डः ।

—चर् (चर गतिभक्षणयोः) । आ च परा च चरति प्रजानन् (ऋ० १०।१७।६) । आचरति अनुकूलमाभिमुख्येन चरति गच्छति । आथर्वणे (७।१०।१) तु दिवः पृथिवीमागच्छतीति सायणभाष्यम् । आ च परा च पथिभिश्चरन्तम् (ऋ० १।१६४।३१) । आचरन्तमर्वागगच्छन्तम् । नभस्वतीरा वां चरन्तु वृष्टयः (ऋ० ८।२५।६) । आचरन्तु इहागच्छन्तु । कृत्ति वसान आचर (वा० सं० १६।५१) । उक्तोऽर्थः । एते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैः (छा० उ० ५।१०।६) । आचरन् संव्यवहरन्, सङ्गच्छमानः । संवत्सरेण पतति पतितेन सहाचरन् (मनु० ११।१८०) । एकयानगमनैकासनोपवेशनैकपङ्क्तिभोजनरूपान्संसर्गानाचरन्निति कुल्लूककृतं विवरणम् । जानन्नपि हि मेधावी जडवल्लोक आचरेत् (मनु० २।११०) । आचरेत् व्यवहरेत् । किं निगमनिरुक्त-

व्याकरणवशेन धातुतोऽर्थः कल्पयितव्य उत यत्र म्लेच्छा आचरन्ति स शब्दार्थ इति (मी० १।३।१० शा० भा०)। व्यवहरन्ति प्रयुञ्जत इत्यर्थः। तस्यां त्वं साधु नाचरः (रघु० १।७६)। नाचरः=नावर्तथाः, न व्यवाहरः। यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः (गीता ३।२१)। आचरति व्यवहरति, अनुतिष्ठति, विदधाति। पुत्रमिवाचरति शिष्य पुत्रीयति शिष्यम्। उपमानादाचारे (पा० ३।१।१०) इति सूत्रे वृत्तावुदाहरणम्। शिष्ये पुत्रवद् वर्तत इत्याह। समुद्यमी मण्डलशुद्धिमाचरेत् (का० नी० सा० ८।६०)। आचरेत् कुर्यात्। भिषग्भेषजमाचरेत् (का० सं० खि० अन्तर०)। भेषजमाचरेत् भैषज्यं कुर्यादित्यर्थः। आचरति मित्रस्येति (का० श्रौ० १६।४।१५)। आचरति प्रक्षिपति (इन्धनम्)। अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती (अथर्व० ७।७७।११)। आचरन्ती सर्वतश्चरन्ती। प्राणात्यये तथाज्ञानादाचरन्मदिरामपि (भा० शां० ३४।२०)। आचरन् पिबन्। अकथितं च (पा० १।४।५१) इत्यत्र भाष्ये ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविनेति कारिकायामाचरितमित्युक्तम् इत्यर्थे प्रयुक्तम्। यथाचरितमेवात्र शरत्र पत्रं विधीयते (भा० शां० १०१।२)। आचरितं कुलक्रमादागतम्। पत्रं वाहनम्। धर्मेण व्यवहारेण छलेनाचरितेन च (मनु० ८।४९)। दारपुत्रपशून् हत्वा कृत्वा द्वारोपवेशनम्। यत्रार्थी दाप्यतेऽर्थं स्वं तदाचरितमुच्यते॥ इत्यत्र कुल्लूकोद्धृतं बृहस्पतिवचः। तस्कराचरितो मार्गो नैष वीरनिषेवितः (रा० ३।५१।२८)। आचरित आस्थितः। अगस्त्याचरितामाशां दक्षिणां हरियूथपाः। (रा० ४।४५।६)। अगस्त्याचरितामाशामनाशास्यजयो ययौ (रघु० ४।४४)। उक्तोऽर्थः। मार्गं सन्मार्गगतिभिः··· पूर्वैराचरितं सद्भिः शास्त्रीयं न परित्यजेत् (का० नी० सा० १२।५)। आचरितं निषेवितम्। शय्यासने चाचरिते नाविशेत् (आप० ध० १।२।८।११)। आचरिते उपयुक्ते। तेषु वनमुख्येषु सुरैराचरितेषु च (हरि० १।२६।८)। आचरितेषु कृतसंचारेषु। प्रासादाग्राणि रम्याणि नगरोपवनानि च। सम्पन्नानि सुगन्धीनि युक्तान्याचरितुं त्वया (रा० ३।४६।२५)॥ आचरितुं विचरितुम्। तस्मिन्देशे य आचारः पारम्पर्यक्रमागतः (मनु० २।१८)। आचारः सामयिको धर्मः कुलाचारश्च। ये अस्या आचरणेषु दध्रिरे (ऋ० १।४८।३)। आचरणमागमः। अधीतिबोधाचरणप्रचारणैः (नै० १।४)। आचरणमुपदेशस्य विधिवदनुष्ठानम्। स यथा प्रयोग्य आचरणे युक्तः (छां० उ० ८।१२।३)। आचरणः सर्वत्र चरणशीलो रथः, शकटो वा। प्रयोग्यो वाजी बलीवर्दो वा। आचर्यो देशः। चरेराङि चागुरौ इति वार्तिके वृत्तावुदाहरणम्। आचरितुं विचरितुं योग्य इत्यर्थः।

—चि (चिञ् चयने)। आचिक्याते च भूयोपि राघवौ तेन पन्नगैः (भट्टि० १४।४७)। आचिक्याते आच्छन्नौ। शैलैरिवाचिनोद् भूमिम् (भट्टि० १७।६९)। आचिनोत् आच्छादयत्। आचार्यः कस्मात्। आचारं ग्राहयति, आचिनोत्यार्थान्, आचिनोति बुद्धिम् इति वा। (नि० ३।४।१२)। आचिनोति वर्धयति। कचाचितौ विष्वगिवागजौ गजौ (कि० १।३६)। आचितौ=आकीर्णौ। विन्दुभिश्चाचयोऽङ्गानाम् (अ० हृ० सूत्र० ७।२३)। आचयो व्याप्तिः।

—छिद् (छिदिर् द्वैधीकरणे)। मिषतामाच्छिनत्ति नः (कु० २।४६)। आच्छिनत्ति आक्षिप्य गृह्णाति। भर्तारमाच्छेत्स्यामि कामिनीभ्यः (भा०)। व्यावर्तयिष्यामीत्यर्थः। अथ (कुशानि) सकृदाच्छिन्नान्युपमूलं दिनानि भवन्ति (श० ब्रा० २।४।२।१७)। दिनानि=दितानि। संलापो विपुलोदयः। लभ्यते नान्तराच्छेत्तुं दुर्जातैर्जातु दुर्जनैः (राज० ३।१४२)। आच्छेत्तुमाक्षेप्तुम्। लभ्यते शक्यते। मम वच आच्छिद्य। आक्षिप्य, अगणयित्वेति वा। आच्छिद्य धमनीमपि (भा०)। छित्त्वा, कर्तित्वा शकलीकृत्येति वा। आच्छिद्य पुत्रे निर्याते कौसल्या यत्र जीवति (रा० २।५७।२२)। आच्छिद्य न्यायप्राप्तमभिषेकं परित्यज्य।

—छुर् (छुर छेदने)। सामोन्मुखेनाच्छुरिता प्रियेण। आच्छुरिता नखच्छेदं लम्भिता।

—छृद् (उछृदिर् दीप्तिदेवनयोः)। अथैनामाच्छृणत्ति (उखाम्) (श० ब्रा० ६।५।४।१५)। एतस्यामुखायां पय आसिञ्चन्तीत्याह।

—छो (छो तनूकरणे)। कस्त्वाऽऽच्छ्यति (वा० सं० २३।३९)। आच्छ्यति=छिनत्ति।

—जन् (जनी प्रादुर्भावे)। आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायताम् (वा० सं० २२।२२)। आजायतामा समन्ताज्जायताम् उत्पद्यताम्। यदा वै क्षत्रियाय पापं भवति ब्राह्मणकल्पोऽस्य प्रजायामाजायते (ऐ० ब्रा० ७।२९)। आजायते जायते। आङा नार्थः। अन्या धूमादिमाजाता राम जीवपरम्परा (यो० वा० ४।६०।९)। आजाताऽनुप्रविष्टा। ततस्ते पुनराजातिं भ्रष्टाः प्राप्स्यन्ति कुत्सिताम् (हरि० १।१९।५)। आजातिराजानो जन्मेत्यनर्थान्तरम्।

—जप् (जप जल्प व्यक्तायां वाचि, जप मानसे च)। उपोत्थायाध्वर्युश्च यजमानश्चाश्वस्य दक्षिणे कर्णे आजपतः (श० ब्रा० १३।४।२।१५)। आजपत ईषज्जल्पत इत्यर्थः।

—जि (जि जये, जि अभिभवे)। तासां वै होत्राणामायतीनामाजयन्तीनामच्छावाकीयाऽहीयत (ऐ० ब्रा० २।३६)। आजयन्तीनामभिभवन्तीनाम्। ते वै प्रातराज्यैरेवाजयन्त आयन् (ऐ० ब्रा० २।३६)। आजयन्तः साधु जयन्तः, वशे कुर्वन्तः।

**—जीव् (जीव प्राणधारणे)**। आजीव्यः सर्वभूतानाम् ब्रह्मवृक्षः सनातनः (भा० आश्व० ४७।१४)। **आजीव्य आश्रेयः।**

**—ज्ञा (ज्ञा अवबोधने)**। एवं वै विद्वांसमाहुरपि पशूनां वाच आजानाति (पञ्चविंश० १०।२।७)। **आजानाति साकल्येन जानाति।** शक्तिभिर्भिन्न-हृदयाः स्खलन्तोपि पदे पदे। **आजानन्ति** यतः संज्ञामाजानेयास्ततः स्मृताः (अश्वतन्त्रे)॥ **साधु जानन्तीत्यर्थः।** मनो वै देवा मनुष्यस्याजानन्ति (श० ब्रा० १।१।७)। **आजानन्ति साधु जानन्ति।** भ्रातुर्वचनमाज्ञाय लक्ष्मणः परवीरहा (रा० २।५६।२४)। **आज्ञाय ज्ञात्वा। आङ् नान्तरमर्थं कुरुते।** प्रतिवेदितमाज्ञाय सूतमभ्यन्तरं पितुः (रा० २।१६।७)। **आज्ञाय ज्ञात्वा। आङर्थान्तरं नाह।** तेषां तन्मतमाज्ञाय (भा० कर्ण० ९५।४)। भ्रातॄणां मत-माज्ञाय नारदस्य च धीमतः (भा० वन० ८६।१)। नैवार्थेन च कामेन विक्रमेण न चाज्ञया। शक्या दैवगतिर्लोके निवर्तयितुमुद्यता (रा० ६।११०।२५)॥ **आज्ञा प्रणयनसामर्थ्यम्, पौर्वापर्यविधानशक्तिः।** त्वमाज्ञाता त्वमिन्द्रासि दाता (ऋ० १०।५४।५)। **आज्ञाता विधाता, परिच्छेत्ता।** संज्ञानमाज्ञानं विज्ञानं प्रज्ञानम् (ऐ० उ० ३।४)। **आज्ञानमाज्ञप्तिरिति शङ्करः। आदेश इति यावत्।** मनसाऽऽज्ञायीति आज्ञायिनि च (पा० ६।३।५) **सूत्रे वृत्तावुदाहरणम्। आजा-नातीत्येवंशीलः।**

**—तक्ष् (तक्षू तनूकरणे)**। आतक्ष्य तक्षाण इवापरेषां गात्राणि (अवदा० जा० २९।२५)। **आतक्ष्य सन्तक्ष्य।**

**—तञ्च् (तञ्चू संकोचने)**। दध्ना पय आतनक्ति। **पयसि दध्यासिच्य तत् संहतं करोतीत्यर्थः।** इन्द्रस्य त्वा भागं सोमेनातनच्मि (वा० सं० १।४)। **सोमासेचनेन सान्द्रं करोमीत्याह।** उच्छेपणाभावे तण्डुलैरातञ्च्यात् तण्डुला-भावे ओषधीभिः (आप० श्रौ० १।४।१४।१)। **उक्तोऽर्थः।** तदेपेव व्रतचर्या यत्पूर्वेद्युर्दुग्धं दधि हविरातञ्चनं तत् कुर्वन्ति (श० ब्रा० ११।१।४।१)। **हविरातञ्चनं हविषः सान्द्रीकरणम्।** यो दधिधान्यामप्रयतं पय आतञ्च्य मन्थति (आप० ध० १।२९।१४)। **तक्राद्यातञ्चनेन संस्कृत्येत्यर्थः।**

**—तन् (तनु विस्तारे)**। नेदानीं पीतिरश्विना ततान (ऋ० ५।७६।३)। **पीतिः पानं सोमपीथो नाततान न प्रतीक्षते इत्याह।** मा त्वा तनदीशिषे वीर्यस्य (ऋ० १।६१।२३)। **मा त्वाऽऽतनत् शत्रूयमाणो मा कश्चित्त्वां प्रत्युपस्थितो भूदित्याह।** अहं रुद्राय धनुरातनोमि (अथर्व० ४।३०।५)। **आततज्यं करो-मीत्यर्थः।** आ द्यां तनोषि रश्मिभिः (ऋ० ४।५२।८)। **आतनोषि व्याप्नोषि।** यास्ते अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः (वा० सं० १३।२२)। **उक्तोऽर्थः।** प्रियपुरतो युवतीनां तावत् पदमातनोतु हृदि मानः (भर्तृ० १।

३२)। पदमातनोतु पदं करोतु, आस्पदं लभताम् अवकाशमाप्नोतु। यदातत-मव तत्तनु (अथर्व० ७।९५।३)। आततम् आयतम् (जारस्य शेपः)। आनन्द-नेन जडतां पुनरातनोति (उत्तर० ३।१२)। अतानोति करोति जनयति। आतन्वानेभ्यः (वा० सं० १६।२२)। उत्क्षिप्तज्याकानि धनूंषि कुर्वद्भ्यः। आतन्वाना आयच्छन्तोऽस्यन्तो ये च धावथ (अथर्व० ६।६६।२)। उक्तोऽर्थः। नमस्त आतान (वा० सं० ६।१२)। आतानो यज्ञः, यज्ञो वा आतानो यज्ञं हि तन्वत इति ब्राह्मणम्। मौर्वी धनुषि चातता (रघु० १।१९)। आकृष्टेत्यर्थः।

—तप् (तप सन्तापे)। शं ते सूर्य आतपतु (अथर्व० ८।२।१४)। आ-तपतु भातु, भासताम् प्रकाशताम्। आतप्यमाने हृदये (भा० पु० ३।३१।१३)। आतप्यमानं दूयमानम्।

—तुद् (तुद व्यथने)। आतोदिनौ नितोदिनावथो सन्तोदिनावुत (अथर्व० ७।९५।३)। आतोदिनौ सर्वतो व्यथकौ, आहन्तारौ, ताडयितारौ। ततं वीणा-दिकं वाद्यमानद्धं मुरजादिकम्। वंशादिकं तु सुषिरं कांस्यतालादिकं घनम्॥ चतुर्विधमिदं वादित्रातोद्यनामकम् (अमरः)।

—तृद् (उतृदिर् हिंसानादरयोः)। पुरा जत्रुभ्य आतृदः (ऋ० ८।१।१२)। आतृदः=आतर्दनात् द्वैधीकरणात् व्यधनात्। शतातृण्णा कुम्भी (श० ब्रा० १२।७।२।१३)। शतातृण्णा शतच्छिद्रा। तस्मात्तद् (रुधिरम्) आतृण्णात् (पुरुषात्) प्रैति रसो वृक्षादिवाहतात् (बृ० उ० ३।९।२८)। आतृण्णः छिन्नः क्षत आहतः।

—तृप् (तृप प्रीणने)। आ यत् तृपन्मरुतो वावशानाः (ऋ० १।१७।३)। आतृपन् तृप्ताः सुहिता अभूवन्। अनुकामं तर्पयेथामिन्द्रावरुणा राय आ (ऋ० १।७३।३)। धनस्य प्रकाभं तर्पयतं न इत्याह। अन्यत्र आतर्पणं मङ्गलालेपनं भवति।

—तॄ (तॄ प्लवनतरणयोः)। उक्षन्ते अश्वान् तरुषन्त आ रजः (ऋ० ५।५९।१)। उक्षन्त इत्यस्य मरुतः कर्तारः। रज आतरुषन्तः=अन्तरिक्षमति-कामन्तः, अन्तरिक्षं मध्येन यान्त इति वा। आतरः तरपण्यं स्यात्। तरणस्य पारगमनस्य हेतोर्यच्छुल्कं दीयते तदातरः। आतरलाघवहेतोर्मुरहर तरणीं तवालम्ब इत्युद्भटश्लोकः।

—दंश् (दंश दशने)। शल्यस्य पूर्णचन्द्रसुदर्शनम्। मुखं पद्मपलाशाक्षं काकैरादष्टमव्रणम् (भा० स्त्री० २३।४)। आदष्टं वितुन्नम्।

—दा (डुदाञ् दाने)। सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः (रघु० १।१८)। आदत्ते गृह्णाति हरति। चत्वारो राजासन्दीमाददते (श० ब्रा० ३।३।४।२६)। आददते उद्धरन्ति, उत्थापयन्ति। एकस्मिन्नेध्म पशात्रादीयमानेऽ

प्रियं भवति किमु बहुषु (श० ब्रा० १४।४।२।२२)। आदीयमानेऽपह्नियमाणे। निश्चितार्थामिति वाचमाददे (कि० १।३)। वाचमाददे वक्तुं प्रचक्रमे। प्रदीपः स्नेहमादत्ते दशयाभ्यन्तरस्थया (शिशु० २।८५)। आदत्ते आत्मन्यन्तः करोति। स हि सर्वस्य लोकस्य मन आददे (रघु० ४।८)। आददे, जहार, चकर्ष। मम धर्मार्थयुक्तं हि श्रुत्वा वाक्यमनामयम्। न चेदादास्यते बालो दिष्टस्य वशमेष्यति (भा० उ० ६३।१८)॥ नादास्यते न प्रतिपत्स्यते, नाङ्गी करिष्यति। सर्वमिदमाददीय यदिदं किं च (केनोप०)। आददीय अपहरेय उड्डाययेय। शिरांस्याददिरे वीरा रथिनामश्वसादिनः (भा० भीष्म० ४६।२२)। चिच्छिदुः, अपजह्रुः। श्वघ्नीव यो जिगीवाँ लक्षमादत् (ऋ० २।१२।४)। आदत् = आदत्त = अविध्यत्। कः पुमानिह कुले जातः। स्त्रियं परगृहोषितां तेजस्वी पुनरादद्यात् (रा० ६।१००।१८)। स्त्रियमात्रनात् परिग्रह इति, परिगृह्णीयात्। आ सोमो वस्त्रा रभसानि दत्ते (ऋ० ६।६६।१)। आदत्ते परिधत्ते। सोमस्य मित्रावरुणोदिता सूर आददे। तदातुरस्य भेषजम्। (ऋ० ८।७२।१७)। आददे जग्राह। पपावित्यर्थः। व्यवहारासनमाददे (रघु० ८।१८)। आददेऽधितष्ठौ, अध्यासाञ्चक्रे। त्वरमाणौ पलायेथां न वां जीवितमाददे (रा० ३।३।७)। आददे = अपहरामि। शुभां विद्यामाददीतावरादपि (मनु० २।२३८)। आददीत प्रतीच्छेत्। म्रियमाणोऽप्याददीत न राजा श्रोत्रियात्करम् (मनु० ७।१३३)। आददीत = गृह्णीयात्। मन्दमिवाग्र आददीत (पञ्च० ब्रा० ७।१)। सम्बोधयेदुपक्रमेत वा। त्रिगर्तराजमादातुं सिंहः क्षुद्रमृगं यथा (भा० वि० ३३।४७)। आदातुं ग्रहीतुम्। हयान्गजान् वर्म्मिणश्चाददानांस्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् (भा० उ० ४८।५५)। आददानान् ग्रसमानान्। शरौघान् इति विशेष्यम्। आदाय कुन्तीं भ्रातृंश्च जगामाशु (भा० आदि० १५०।२६)। आदाय सहादाय। कुन्त्यादिभिः समेत इत्यर्थः। आभिषेचनिकं सर्वमिदमादाय...प्रतीक्षते त्वां स्वजनः (रा० २।७६।४)। अभिषेचनोपकरणं समानीयेत्यर्थः। एते खलु काश्यपसन्देशमादाय तपस्विनः सम्प्राप्ताः (शा० ४)। काश्यपसन्देशहरा इत्यर्थः। आदाय मार्गशीर्षाच्च द्वौ द्वौ मासावृतुः स्मृत इति कात्य इत्यमरोद्घाटने स्वामी। आदाय आरभ्य। आदानं हि विसर्गाय सतां वारिमुचामिव (रघु० ४।८६)। आदानं ग्रहणम्। आदानमप्रियकरं दानं च प्रियकारकम्। अभीप्सितानामर्थानां काले युक्तं प्रशस्यते (मनु० ७।२०४)॥ उक्तोऽर्थः। सारादानं दानमाहुर्धनानाम् (अवदा० कुल्माष० जा० श्लो० २३)। यद् दानीयाय स्वं धनं दीयते तेन सारभूतोऽनर्घोऽर्थः प्रत्यादीयते दात्रेति किमपि रुच्यमुक्तमार्यशूरेण। भक्ष्यमाणो ह्यनादानात् क्षीयते हिमवानपि (भा० वन० ३२।१०)। कुशाङ्कुरादानपरिक्षताङ्-

गुलिः (कु० ५।११)। आदानमुद्धरणमुन्मूलनम्। अथवा मन्त्रवद् ब्रूयुरात्मादानाय दुष्कृतम् (भा० शां० २१२।३०)। आत्मादानं मनोनिग्रहः।

—दा (दाण् दाने)। हस्तौ पृणस्व बहुभिर्वसव्यैराप्रयच्छ दक्षिणादोत सव्यात् (अथर्व० ७।२८।८)। आप्रयच्छ आभिमुख्येन देहीत्यर्थः।

—दिव् (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु)। नाद्यूनां तु स्त्रियं गच्छेन्नातुरां न रजस्वलाम् (वि० पु० ३।११।११५)। आद्यूनाऽप्रसन्ना। अन्यत्रात्रार्थे परिद्यून इति प्रयोगमवतरन् दृष्टः। आद्यूनस्त्वौदरिकमाह।

—दिश् (दिश अतिसर्जने, विशिरुच्चारणक्रिय इति भा०)। आदिशेत् प्रथमे पिण्डे मातरं पुत्रिकासुतः (बौ० ध० २।२।३।१६)। मातृनामादेशं दद्यादित्यर्थः। दिशिरिहोच्चारणक्रियः। अशुभनिमित्तोत्पत्तौ शास्त्रतः शान्तिमादिशेत् (व० बृ० सं० ४८।८, ५।५५)। आदिशेत् विधेयत्वेन निर्दिशेत्। यद्यु अभिचरेदादिशेत् (श० ब्रा० ३।५।२८)। तस्य नामादिशेत् (श० ब्रा० ५।२।४।२०)। कीर्तयेत्, उच्चारयेत्। प्रियं राजानमादिशेत् (लाट्या० श्रौ० १।१०।२१)। यन्नादेक्ष्यामः (लाट्या० श्रौ० ८।८।२६)। यद्विशिष्य न वक्ष्याम इत्यर्थः। आदिशत्याचार्याधीनो भव (इति) (गो० गृ० ३।१।१२)। आदिशति उपदिशति, अनुशास्ति, आज्ञापयतीत्यर्थः। नास्य व्रतमादिशेत् (मनु० ४।८०)। उपदिशेत्, विदधीत। अस्तेर्भूशब्द आदिश्यते। अस्तेः स्थान उच्चार्यते विधीयते वा। बर्हिषि ऋत्विग्भ्य आदिशति (का० श्रौ० २।४।११)। निर्दिशति, इदं ब्रह्मण इदं होतुरित्येवम्। आदिशत्सर्वं यथासन्दिष्टमिष्टवत् (रा० २।८२।२२)। सोऽदिशदिति पाठान्तरम्। आदिशद् आज्ञापयत्। आदिक्षदभिगमं वनाय (भट्टि० ३।६, ७।२८)। उक्तोऽर्थः। अन्वेष्टुं वानरान्सर्वानादिदेश दिशो दश (रा० ५।३२।२)। आदिदेश आज्ञापयामास। आदिश्यन्तां शार्ङ्गरवमिश्राः शकुन्तलानयनाय (शा० ४)। अन्वेषणेऽनिरुद्धस्य चारानादिश मा चिरम् (हरि० २।१२१।३५)। हरिवीराणामादिशद् दक्षिणां दिशम् (रा० ४।४१।७)। दक्षिणां दिशं प्रति प्रयाणमाज्ञापयदित्यर्थः। नूनं तु बलवांल्लोके कृतान्तः सर्वमादिशन्। लोके रामाभिरामस्त्वं वनं यत्र गमिष्यसि (रा० २।२४।५)॥ आदिशन्=आदिशति। उक्तोऽर्थः। सा नो भूमिरादिशतु यद् धनं कामयामहे (अथर्व० १२।१।४०)। क्व लभ्यं तदिति ब्रवीतु, येन कामितं धनं लभेमहीत्याह। यं न माता पिता भ्राता सुहृदश्चादिशन्ति हि (भा० पु० ८।२२।४)। पतिपुत्रधनैर्हीनामादिदेश भविष्यतीम् (बृ० श्लो० सं० ४।८७)। इहादेशो भविष्यद्वचनं भवति। अत आदेशिको भविष्यद्वक्ता भवति। बाला स्त्री प्राणदा प्रोक्ता तरुणी प्राणहारिणी।

प्रौढा करोति वृद्धत्वं वृद्धा मरणमादिशेत् ।। अत्रातिसर्जनं दानमित्येवार्थो मुख्यः, जननं तु गौणः । आङ् नार्थः । व्रतमादिष्टवान्रामः सहायं गुहमब्रवीत् (रा० २।५२।७१) । आदिष्टवान् अङ्गीकृतवान् । या पुष्पकभद्रादिभिरादेशिकैरादिष्टा स्वामिनो देवी भविष्यतीति (स्वप्न० १) । आङ्शब्दः प्रागर्थे । देवीत्वलाभात्पूर्वमेव तल्लाभ उक्त इत्यर्थः । आदेशोऽनागतार्थशंसनम् । प्रतिषिद्धमनादिष्टं प्रमादाद्यच्च नाशितम्(याज्ञ ०२।२६०)। अनादिष्टमननुज्ञातम् । आदिष्टा दक्षिणा (श० ब्रा० ११।१।५।११) । आदिष्टा विहिता । आज्ञप्तोच्छिष्टयोः क्लीबम् (आदिष्टम्) ( मेदिनी ) । नियुतो वायोरित्यादिष्टोपयोजनानि (निघण्टौ १।१५) । आदिश्यादिश्य नाराचैराजघान वृकोदरः (भा० वन० २७१।३५) । आदिश्य नाम विश्राव्येति नीलकण्ठः । लक्ष्यं बद्ध्वेत्यन्ये । आदिश्यादिश्य तेजस्वी शिरांस्येषां व्यपातयत् (भा० आश्व० ८४।८) । शक्तिमायसीम् । चिक्षेपार्जुनमादिश्य (भा० द्रोण० २८।६)। आदिश्य उद्दिश्य लक्ष्यं कृत्वा । आदिश्यादिश्य दुर्गस्थान्पातयामास राक्षसान् (भा० वन० १८४।४०)। आदिश्य संमुखीकृत्य । आस्मिन्पिशङ्गमिन्दवो दधाता वेनमादिशे (ऋ० ६।२१।५) । आदिशे आदेष्टुम् = लक्ष्यं कर्तुम् । वसुमित्रं गोप्तारमादिश्य (माल० ५) । आदिश्य नियुज्य । अथ यन्तारमादिश्य धुर्यान्विश्रामयेति सः (रघु० १।५४) । आदिश्य आज्ञाप्य । नाम्न्यादिशिग्रहोः (पा० ३।४।५८) । आदिशिरुच्चारणे वर्तते । नामादेशमाचष्टे । इदमोन्वादेशेऽशनुदात्तस्तृतीयादौ (पा० २।४।३२) । अत्र वृत्तिः —आदेशः कथनम्, अन्वादेशोऽनुकथनम् । आदेशं देशकालज्ञः प्रतिजग्राह (रघु० १।९२) । आदेश आज्ञा । मङ्गलादेशवृत्ताः (मनु० ६।२५८) । पुत्रलाभादि मङ्गलमादिश्य शंसित्वा ये वर्तन्ते जीवन्ति ते तथाभूताः । अथादेशा उपनिषदाम् (श० ब्रा० १०।४।५।१)। आदेश उपदेशः । अनुशासनम् । उत तमादेशमप्राक्ष्यः, येनाश्रुतं श्रुतं भवत्यमतं मतम् (छां० ६।१ ३) । उक्तोऽर्थः । सिद्धादेशः, विप्रश्निकादेशवचनानि (काद०) । आदेशो भविष्यद्वचनम् । सिद्धानामादेश ऋद्धिश्चित्तविकारिणी (व० बृ० सं० २। ५।१६) । आदेशो व्याहारः, उपदेशो वा । राजद्विष्टादेशकृतः (याज्ञ० २।३०४) । राज्ञा द्विष्टोऽरोचितो य आदेशो भविष्यद्वचनं तत्कृतस्तदुदाहर्तार इत्यर्थः । राज्ञः प्रतिकूलानि कर्माणि कुर्वाणा इति त्वापरे । तन्न । आदेशः कर्म नाह । धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत् (रघु० १२।५८) । शब्दस्य स्थाने विहितं शब्दान्तरमादेशः । अनादेशे जपो होम उपवासस्तथैव च (भा० शां० ३६।६) । अनादेशे विशेषतोऽनुक्ते दोषे । दक्षिणं प्रतीयानादेशे (आश्व० श्रौ०) । आदेशो विशिष्य निर्देशः, तदभावोऽनादेशः । उदगयनपूर्वपक्षः पुण्याहेषु प्रागा-

वर्तनादह्नः कालोऽनादेशे (द्रा० गृ० १।१।२)। उक्तोऽर्थः। उद्धृतं मे स्वयं तोयं व्रतादेशं करिष्यति (रा० २।२२।२८)। व्रतादेशो व्रतानुष्ठानम् व्रतसमाप्तौ स्नानाचरणम्। तत्र भिषजा…आत्मनोऽथर्ववेदे भक्तिरादेश्या (चरक० सूत्र० ३०।२०)। आदिष्टीति ब्रह्मचार्युच्यते। तथा च (मनु० ५।८८) प्रयोगः —आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात्। व्रतादेशनमादिष्टं तदस्यास्तीति व्युत्पत्तिः।

—दिह् (दिह उपचये)। बाहुभिश्चन्दनादिग्धैः (भा० द्रोण० ११३। १५)। आदिग्धैरासमन्ताल्लिप्तैः। कवचैः शोणितादिग्धैः (भा० भीष्म० ६६। ६२)। उक्तोऽर्थः।

—दीप् (दीपी दीप्तौ)। आदीपकस्य स्तेनस्य वर्णसंकरिकस्य च (भा० शां० ८५।२२)। आदीपको गृहादिदाहकः, अग्निदः। आदीप्तमिवाम्बरं सदिग्दाहं विचरति सप्तर्चिः (व० बृ० सं० ३१।१३)।

—दुह् (दुह प्रपूरणे)। कवेरपत्यमादुहे (ऋ० ६।१०।८)। आदुहे आपूरयामीति सायणः।

—दृ (दृङ् आदरे)। मा पुत्रक तदादृथाः (ऐ० ब्रा० ५।१४)। मा स्म तज्जीगणः, तत्रार्थे चिन्ता ो मा स्म भूरित्यर्थः। भूरिश्रुतं शाश्वतमाद्रियन्ते (मालती० १।५)। सादरं शीलयन्त इत्यर्थः। निपीय यस्य क्षितिरक्षिणः कथाः समाद्रियन्ते न बुधाः सुधामपि (नै० १।१)। न समाद्रियन्ते न बहु मन्यन्ते, न गणयन्तीत्यर्थः। यत्किञ्चिद् दुर्मदाः स्वैरमाद्रियन्ते निरर्गलम् (महावीर० ७।३)। आद्रियन्ते कामयन्ते स्पृहयन्ते, सोत्सुकमिच्छन्ति। इति स्म पृच्छत्यनुवेलमादृतः (रघु० ३।५)। आदृत आदरवान् सादरः। विनीतः सन्नित्यर्थः। कर्तरि क्तः। दण्डनीत्यां नात्यादृतोऽभूत् (दशकु०)। उक्तोऽर्थः। सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः (मनु० २।२३४)। तस्मात् तत्रादृतो भवेत् (मनु० ७।१५०)। तौ वारयितुं श्यना निर्देश आदृतः (पा० ७।२।१० सूत्रे सि० कौ०)। आदृत आस्थित आश्रितः कृतः।

—दृश् (दृशिर् प्रेक्षणे)। आ पश्यति प्रति पश्यति परा पश्यति पश्यति (अथर्व० ४।२०।१)। पश्यसीति पैप्लादाः पठन्ति। आपश्यति आगामि भयकारणं परिहर्तुं जानातीत्यर्थं इति सायणः। उत्कलादर्शितपथः कालिङ्गाभिमुखो ययौ (रघु० ४।३८)। आदर्शितः सम्यग्दर्शितः कार्त्स्न्येन दर्शितो वा।

—दॄ (दॄ विदारणे)। तस्या हृदयमादीर्य (श० ब्रा० १४।१।२।१२)। आदीर्य दीर्णं भूत्वेत्यर्थः। य आदृत्या परिपन्थीव शूरोऽयज्वनो विभजन्नेति वेदः (ऋ० १।१०३।६)। आदृत्या=आदृत्य=आदीर्य।

—दं (दंप् शोधने)। धनुरादायमानस्तु जानुभ्यामगमन्महीम् (भा० आदि० १८।२५)। आदायमानः=आदायन्=परीक्षमाणः। शुन्धन्निति तु शब्दार्थः।

—दो (दो अवखण्डने)। आदानेन सन्दानेनामित्राना द्यामसि (अथर्व० ६।१०४।१)। आद्यामसि=आद्यामः=संचूर्णयामः। अधा सपत्नान्मामकान् अग्नेस्तेजोभिरादिषि (अथर्व० १३।१।३०)। उक्तचर एवार्थः। तानग्न आ द्या त्वम् (अथर्व० ६।१०४।२)। आद्या=आद्य आबधान। सा ब्रह्मज्यं देवपीयुं ब्रह्मगव्यादीयमाना। मृत्योः पड्वीश आ द्यति (अथर्व० १२।५।१५)। उक्तोऽर्थः।

—द्युत् (द्युत दीप्तौ)। यन्मे अक्ष्योरादिद्योत पार्ष्ण्योः प्रपदोश्च यत्। आपस्तत्सर्वं निष्करन् (अथर्व० ६।२४।२)। आदिद्योत दुष्यति विकृतं भवति।

—द्रु (द्रु गतौ)। तथेति तं (वृत्रं) हनिष्यन्त आद्रवन् (ऐ० ब्रा० ३।२०)। आद्रवो धावनम्। समाहूतः केन चिदाद्रवेति (भा० वन० ५।६)। आद्रव त्वरितमायाहि। सोऽवेन्मां वै हनिष्यन्त आद्रवन्ति (ऐ० ब्रा० ३।२०)। इतः सत्वरमायान्तीत्याह।

—धा (डुधाञ् धारणपोषणयोः)। अहये वा तान्प्रददातु सोम आ वा दधातु निर्ऋतेरुपस्थे (ऋ० ७।१०४।९)। आदधातु निदधातु। अत्रिः सूर्यस्य दिवि चक्षुराधात् (ऋ० ५।४०।८)। आधात्=न्यास्थत्। प्रतिदीव्ने दधत आ कृतानि (ऋ० १०।३४।६)। आदधते धरन्ते स्थापयन्ति। जनपदे न गदः पदमादधौ (रघु० ९।४)। आदधौ निदधौ। पदं नादधौ अवकाशं न लेभे। मय्येव मन आधत्स्व (गीता० १२।८)। निधेहीत्यर्थः। मा युद्धे चेत आधिथाः (भा० उ० १२९।४०)। माऽऽधिथा मा धृथाः। जायापती अग्निमादधीयाताम् (का० श्रौ० ४।१३।१३)। अग्न्याधानं कुर्वीयाताम्। अग्न्याधानमग्निहोत्रार्थमिध्माधानम्, एधःस्थापनं वेद्याम्। वसन्तेऽग्नीनादधीत। उक्तचरोऽर्थः। आधीयतां धैर्ये धर्मे च धीः (काद०)। प्रतिपात्रमाधीयतां यत्नः (शा० १)। पात्रे पात्रे भूमिकादौ विषये यत्नोऽवेक्षा क्रियतामित्याह। रसनिबन्धनं प्रत्याहृतमनाः कविर्विरोधिपरिहारे परं यत्नमादधीत (३।१७ ध्वन्या० लो०)। आदधीत कुर्यात्। पाटलापुष्पमेकं च आदधावेकपाटला (हरि० १।१८।१७)। आदधौ स्वीकृतवती। तस्मिन्निधीनादधीत प्रज्ञां पर्याददीत च (भा० शां० ८६।२९)। आदधीत प्रणिदध्यात्, समर्पयेत्। कपयो दूतवाक्यानि श्रुत्वैव भयमादधुः (रा० ४।३७।२०)। भयमाहारयामासुः, भीतिमाविविशुरित्यर्थः। सवर्णाऽऽधत्त सामुद्री दश प्राचीनबर्हिषः (हरि० १।२।३३)। आधत्त व्यजायत। नहि सकृन्निपातमात्रेणोदबिन्दुरपि ग्रावणि निम्नतामादधाति (का० सू० वृ० १।३।२४)। आदधाति जनयति। चित्तस्य नो विस्मयमादधाति (माल०५।१७)।

**उक्तपूर्व एवार्थः**। सुमेधसां कर्मणि दुष्करेपि नित्यक्रिया कौशलमादधाति (का० नी० सा० १६।५०) प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः (कु० ६।२०)। वसुदेवः सुतानष्टावादधे सहदेवया (भा० पु० ६।२४।५१)। आदधे लेभे। **अपूर्वोऽर्थः**। आ धूर्ष्वस्मै दधाताश्वान् (ऋ० ७।३४।४)। **आदधात युङ्ग्ध्वम्**। एतद्वः पितरो वास आधत्त (वा० सं० २।३२)। **आधत्त परिधत्त**। भूयो बभौ दर्पणमादधाना (कु० ७।२६)। **आदधाना आददाना गृह्णाना बिभ्रती**।(पिशिताशनानां) छायाः रन्ति बहुधा भयमादधानाः (शा० ३।१७)। अवनीमात्मकीर्तिप्रकाशैराशापालानुभावग्रसनगुरुतरैरञ्चितामादधानः (महावीर० ७।८)। **अञ्चितामलङ्कृतां कुर्वाण इत्यर्थः**। अथ क्रमेण नृपतिर्लोभाभ्यासेन भूयसा। आधीयमानचित्तोऽभूत्... (राज० ५।१६५)॥ **आधीयमानचित्तो मनोव्यथायुक्तः**। वाहनमाहितात् (पा० ८।४।८)। **यदारोपितमुह्यते तदाहितमुच्यते**। **इक्षुवाहणम् इत्यत्रेक्षव आहिता भवन्ति**। शेषः सदैवाहितभूमिभारः (शा० ५।४)। प्रसादवृत्त्याहितलोकवृत्तया (का० नी० सा० १०।४०)। **आहितं न्यस्तं वृत्तं लोकव्यवहारो यत्र साऽऽहितलोकवृत्ता, तया**। अतिथिभ्यो मया देयमिति मे व्रतमाहितम् (भा० अनु० २।७१)। **आहितं धृतम्**। आहूतो न निवर्तेयमिति मे व्रतमाहितम् (भा० द्रोण० १७।३६)। **उक्तोऽर्थः**। विक्रीतमाहितं यत् पित्रा जीवता मम (रा० २।१११।२८)। **आहितमाधिरूपेण न्यस्तम्**। आहितः स्वामिना च यः (दासः) **इति मिताक्षरायां नारदवचनम्**। **आहितो बन्धके स्थापितः**। अत्याप्तिरुच्छिष्टे भूतिश्चाहिता निहिता हिता (अथर्व० ११।६।२२)। **आहिता आभिमुख्येन स्थिता**। मन्त्रिष्वाधाय तद् राज्यं गङ्गावतरणे रतः (रा० १।४३।१३)। **आधाय आरोप्य समर्प्य**। इन्द्रे त्रैलोक्यमाधाय (भा० १।७७३५)। अन्यं राजानमाधाय पञ्चालेषु नरेश्वरम् (भा० उ० १६०।८)। तमेव (अग्निं) चाधाय विवाहसाक्ष्ये (रघु० ७।१७)। **विवाहे साक्षिणं स्थापयित्वा**। काप्यकारः स यच्चिते पापमाधाय शंसनम् (त्रिकाण्ड०)। **आधाय निधाय, कृत्वा**। उन्मत्तप्रेमसंरम्भादारभन्ते यदङ्गनाः। तत्र प्रत्यूहमाधातुं ब्रह्मापि खलु कातरः (भर्तृ० १।६०)॥ **आधातुं स्थापयितुं जनयितुम्**। न शक्ष्यामि बालेस्मिन् गुणानाधातुमीप्सितान् (भा० आदि० १५८।१५)। **आधातुं भावयितुं जनयितुम्**। अष्टमे च मया गर्भे कार्यमाधानमात्मनः (हरि० २।२।१०)। **आधानं स्थापनम्**। विक्रयाधानवर्जानि। (कौ० अ० २।१।७)। **आधानम् आधित्वेन स्थापनम्**। क्रयविक्रयाधानयाचितेषु (याज्ञ० २।२३८)। **आधानमाधिकरणम्**। गुणो **विशेषाधानहेतुः सिद्धो वस्तुधर्मः** (सा० द०)। **विशेषोपजननम्**। प्रजानां विनयाधानाद्रक्षणाद्भरणादपि (रघु० १।२४)। **विनयाधानं शिक्षाप्रदानम्**। कौतुकाधान-

हेतोः (मेघ० ३ )। कौतुकाधानमौत्सुक्यजननम्। तत्रापि मृत्युराधानादकृत-प्रज्ञ दर्शितः (भा० पु० ६।६।३६)। आधानं निधुवनं रतं मैथुनं व्यवायः। अन्यत्र दुर्लभोऽयमर्थः। शब्दरूपेषु शब्दार्थेषु च स्वश्छन्दोऽस्य कवेरनृषेरपि। एनमाधिं दापयिष्ये...भयं क्वचित् (शुक्र० ४।६४१)। आधिर्बन्धकम्। आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः (मनु० ८।१४५)। उक्तोऽर्थः। न तेषामापदः सन्ति नाधयो व्यापदस्तथा (भा०)। आधिर्मानसी व्यथा। व्याधिर्यदि भवेद्राज्ञः प्रविशेयुश्चिकित्सकाः। आधिर्वा यदि तत्रास्य कारणं नोपलभ्यते (कथा० ६।१२८)॥ उक्तोऽर्थः। ये चाधिम् (आजीवन्ति)। स्वगृहे परान्वासयित्वा तेभ्यो भृतिग्रहणमाधिः, यः स्तोम इति प्रसिद्धः। भोजनादिषु व्ययितं द्रव्यमवक्रयो वा। आधिः कुटुम्बव्यापृतः, अभ्यागारिक इति कोषः। पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः (माल० १।६)। आधाता विनयं दाता, विद्यां सङ्क्रमयिता, वितरीता। वाक्यं रसात्मकं काव्यम् (सा० द० १)। रस एवात्मा साररूपतया जीवनाधायकोऽस्येति रसात्मकम्। जीवनमाधत्ते निषिञ्चतीति जीवनाधायकः।

—धाव् (धावु गतिशुद्ध्योः)। अस्मा अच्छा सुमतिर्वां शुभस्पती आ धेनुरिव धावतु (ऋ० ८।२५।४)। युवयोः सुमतिः सौमनस्यमस्मानभ्याधावतु त्वरितमागच्छत्वित्याह। प्रेक्षमाणास्तदान्योन्यमाधावन्नगरं प्रति (भा० शल्य० २६।७७)। नगरमभ्यधावन् इत्यर्थः। तत आधावनप्रधावनमात्रे नन्दगोपपुत्रे (बाल० ३)। आधावनमितस्ततो धावनम्। प्रधावनं चङ्क्रमणम्। प्रशब्द आदिकर्मणि। आ कलशेषु धावति (सोमः) (ऋ० ६।१७।४)। आधावति स्यन्दते प्रवहति। आ नः सुतास इन्दवः पुनाना धावता रयिम् (ऋ० ६।१०६। ६)। हे सुता अभिषुता इन्दवः सोमबिन्दवोऽस्मान्प्रति रयिं रायं द्युम्नमाधावत प्रवाह्यानयतेत्याह।

—धु-धू (धुञ्-धू कम्पने)। अथ धवित्रैराधूनोति (श० ब्रा० १४।१।३।३०)। आधूनोति वीजयति। अंशूनाधुनोति (श० ब्रा० ११।५।६।८)। आधुनोति घट्टयति क्षोभयति। आधुन्वन्तो वा पिबन्तश्च तोयम् (श्वानः) (व० बृ० सं० ८८।१०)। आधुन्वन्तश्चलयन्तः पुच्छम्। आधूतान् वायुना पश्य सन्ततान् पुष्पसंचयान् (रा० गोरि० २।१०४।६)। आधूतान् आन्दोल्य प्रक्षिप्तान्। ये यज्ञे धुवनं तन्वते (श० ब्रा० १४।१।३।३२)। धवित्रेण मारुतं प्रेरयन्ति।

—धृ (धृञ् धारणे)। सकृच्छ्रुतमयं बालः सर्वं चाधारयेद् हृदि (कथा० २।३७)। हृदि मनसि आधारयेत् रक्षेत्। अधारयो दिव्या सूर्यं दृशे (ऋ० १। ५२।८)। आधारयः=आधृतवानसि, न्यक्षिपः, न्यदधाः। आ पवमान धारय रयिं सहस्रवर्चसम् (ऋ० ६।१२।६)। आधारय आहर। हंसक, वृत्तान्तं ताव-

दाधारय यावदुच्छ्वसिमि (प्रतिज्ञा० १)। **आधारय विरमय, विरामं नय।** आधारयद्यो विविधाश्चित्राः सुमनसः सदा (रा० २।९९।३३)। **आधारयत् अबिभः।** भवन्ति हि देवदत्तस्य गावः, न च तास्तस्मिन्नाधृता भवन्ति (पा० ५।२।९४ सूत्रे भाष्ये)। **न हि देवदत्तस्तासामाधार इत्यर्थः। आध्रियन्तेऽस्मिन्क्रिया इत्याधारः** (आधारोऽधिकरणम् १।४।४५ सूत्रे वृत्तिः)।

**—धृष् (ञिधृषा प्रागल्भ्ये धृष प्रसहने)।** मा वां वृको मा वृकीराधर्षीत् (ऋ० १। १८३।४)। **अवमन्तुमपकर्तुं वा मा स्म धर्षीत्, न जातु धृष्णुयात्।** मायां देवस्य नकिरा दधर्ष (ऋ० ५।८५।६)। **न कश्चिद् अवहेलयितुमुत्सहते इत्याह।** स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः। आवेदयति चेद्राज्ञे व्यवहार-पदं हि तत् (याज्ञ० २।५)॥ **आधर्षितोऽभिभूतः।**

**—ध्मा (ध्मा शब्दाग्निसंयोगयोः)।** उद्धमाधम सन्धम (तै० आ० १। १२।१)। तव भुजबलदर्पाध्मायमानस्य वामः शिरसि चरण एष न्यस्यते। वारयैनम् (वेणी० ३।४०)। **आध्मायमानः स्फायमानः।** अयं विन्ध्यो येना-हृतविहृतिराध्मानमजहात् (महावीर० ७।१४)। **आध्मानं वर्धनं स्फातिः।** योगाधमनविक्रीतं योगदानप्रतिग्रहम् (मनु० ८।१६५) **आधमनं बन्धकम्। योग इह च्छलमुक्तः।** एको ह्यनीशः सर्वत्र दानाधमनविक्रये (का० स्मृ०)। **उक्तोऽर्थः।** आध्मातस्तेन हरिणा न चक्रे शङ्खराड् (हरि० ३।१२०।१३)। **आध्मातः पूरितः।** महावाताध्मातैर्जलधरैः (मृच्छ०)। **आध्माताः स्फीताः।** वातेनाध्मापितां नाभिम् (सुश्रुत० १।३७४।५)। **आध्मापिता स्फाविता।**

**—ध्वंस् (अवस्रंसने गतौ च)।** आध्वस्तं चक्षुः (नि० ४।३)। **आवृत-मित्यर्थः।**

**—नद् (णद अव्यक्ते शब्दे)।** रथेनानादयन् दिशः (भा० आदि० १३८। २८)। **आनादयन्प्रतिध्वनयन्।**

**—नन्द् (टुणदि समृद्धौ)।** (दण्डः) यथाशास्त्रं प्रयुक्तः सन् सदेवासुरमान-वम्। जगदानन्दयेत् सर्वमन्यथा तत् प्रकोपयेत् (याज्ञ० १।३५५)॥

**—नम् (णम प्रह्वत्वे शब्दे च)।** आ नो रुद्रस्य सूनवो नमन्ताम् (ऋ० ६।५०।४)। **आनमन्ताम् इतोभिवर्तन्ताम् इत्याह।** यावन्नराशैर्न रिपुः शवाशान् सन्तर्पयत्यानम तावदस्मै (भट्टि० १२।७५)। **अस्मा आनम आत्मानं तदधीनं कुरु।** नृपतयो यत आनमन्ति (भा० पु० १।१५।२१)। **आनमन्ति प्रणता भवन्ति।** तं राजकमाननाम (काद०)। **प्रणनामेत्यर्थः।** सकृदेवानतं शेकू रथ-मभ्यसितुं परे (भा० वि० ५५।२०)। **आनतमागतम्। उपशब्दस्यार्थ आङ्। अत्रार्थे उपनतशब्दस्य बहुलः प्रयोगः।** तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोस्मि। **आनतोस्मि प्रणमामि।** वित्तेनानतिः स्त्रीमतामासुरः

(गौ० ध० १।४।६)। आनतिरर्जनम् प्राप्तिः। मज्जा म आनतिः (वा० सं० २०।१३)। आनमन्ति भूतानि यत्र साऽऽनतिः। आनम्य मूर्ध्नि चाघ्राय (रा० २।२५।३८)। आनम्य=आत्मानं नमयित्वा। बलाच्चानम्य दुर्बलान् (भा० वि० २६।११)। आनम्य आनम्य्य वशे नीत्वा, आत्मसात्कृत्वा।

—नर्द् (नर्द शब्दे)। आनर्दं नर्दतः सम्यक् तदा सूयं भविष्यति (भा० उ० १४१।४७)। आनर्दो महानादः। समुलन्तमिति नीलकण्ठः। सूयम् इत्यस्य स्थाने सत्यमिति क्व चित्पाठः।

—नह् (णह बन्धने)। आनह्यते नासा (सुश्रुत० २।३६६।१०)। आनह्यते रुध्यते। ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् (अमर०)। विस्तीर्णवक्षसं दीर्घभुजमानद्धकन्धरम् (शि० भा० १।७५)। आनद्धकन्धरम् आयतग्रीवम्। ततो रुद्धे शकृन्मूत्रे सैन्यमानाहदुःखितम् (भा० वन० १२२।१५)। आनाहस्तु विबन्धः स्यादित्यमरः। दैर्घ्यमायाम आनाह इति च सः।

—नी (णीञ् प्रापणे)। यः पुरुषमेधानामयुतमानयेत् तेनास्यायुतनायित्वम् (भा० १।३७७३)। आनयेत् आहरेत् संबिभृयात्। केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते (शा० ७।८)। आनीयते प्राप्यते। दूरादिन्द्रमनयन्ना सुतेन (ऋ० ७।३३।२)। आनयन् आहरन्। आनिनाय भुवः कम्पम् (रघु० १५।२४)। आनिनाय जनयामास भावयाञ्चकार। हरिरानीतः पुरुवारो अप्सु (ऋ० ९।९६।२४)। आनीतः प्रक्षिप्तः। तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा। आनयति प्रक्षिपति। दधनि मध्वानीय (आश्व० गृ० १।२१।५)। आनीय आसिच्य। जालमानाय (पा० ३।१।१२४) इत्यत्र पाणिनीये निपातित आनायो जालम्। साहित्ये दुर्लभ आनायशब्दः। आनायिस्तु रघौ (१६।७५) लभ्यते—आनायिनस्तद्विचये नदीष्णान्। आनायिनो जालवन्तो जालिकाः।

—नु-नू (णु स्तुतौ णू स्तवने)। आनुते शृगालः। आङि नुप्रच्छ्योरिति वार्तिके वृत्तावुदाहरणम्। आनुते क्रोशति रौति वाश्यते। आङा शब्दविशेषात्स्तुतिलक्षणादपकृष्य शब्दसामान्ये धातुर्व्यवस्थापितः। (पतत्रिणः) मन्द्रमानुवानाः (भट्टि० ८।६७)। उक्तोऽर्थः। आ वामृताय केशिनीरनूषत (ऋ० १।१५६।६)। आ कलशा अनूषतेन्दो धाराभिरोजसा (ऋ० ९।६५।१४)। आनूषत ध्वनन्ति।

—नृत् (नृती गात्रविक्षेपे)। उतस्मा कीरिणो नृतुः (ऋ० ५।५२।१२)। उतस्मानृतुः=उतस्मानर्तिषुः=इतस्ततः साकम् उदशलन्। आनृत्यतः शिख-

ण्डिनो गन्धर्वस्य (अथर्व० ४।३७।७)। आ समन्तान्नृत्यत इत्यर्थः। मरुद्भिरानर्तितनक्तमाले (नर्मदारोधसि) (रघु० ५।४२)। आनर्तिता आन्दोलिताः प्रेङ्खन्त्यः।

—पण् (पण व्यवहारे स्तुतौ च)। नैकद्रव्योच्चयवतीं समृद्धविपणापणाम् (भा० अनु० ३०।१७)। विपणो विपणी पण्यवीथिका। आपणो निषद्या। एत्यात्रापणन्त इत्यापण इति गोचरसंचरेत्यादिसूत्रे (पा० ३।३।११९) वृत्तिः।

—पत् (पत्लृ गतौ)। श्येनो भूत्वा विश आपतेमाः (अथर्व० ३।३।३)। आपत आगच्छ। कर्ममध्ये या इष्टयो व्रातपतीयाद्याश्चापतन्ति ता अनुष्ठेयाः (का० श्रौ० वृ०)। आपतन्ति हि संसारपथमवतीर्णानामेते वृत्तान्ताः (काद०)। आपतन्ति अतर्किता उपनमन्ति। आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः (ऋ० १।८८।१)। आपप्तत=अभित्वरध्वम्। आपतत्येष दुष्टात्मा सङ्क्रुद्धः पुरुषादकः (भा० आदि० १५३।४)। उक्तोऽर्थः। तच्चेदन्तः पुनरापतेच्छेषेण शुद्ध्येरन् (गौ० ध० २।५।५)। आपतेत् आगच्छेत्। जीवन्वा पतिरापतेत् (बृ० श्लो० सं० ४।३६)। उक्तोऽर्थः। आपतत्यात्मनः प्रायो दोषो ऽन्यस्य चिकीर्षितः (कथा० २०।२१३)। आत्मानमनुधावति, आत्मनि प्रसजति। दोषोऽपायः। वेनन्ति वेना पतयन्त्या दिशः (ऋ० १०।६४।२)। पत गतौ चुरादिः। मधुरतराण्यापतन्ति मनसः (काद०)। आपतन्ति आभासन्ते, प्रतीतिं यान्ति, प्रतीयन्ते। स्फुटपौरुषमापपात पार्थः। आपपात=आस्कन्दत्। अपि नाध्वश्रमः शीघ्रं रथेनापततस्ते (रा० २।७२।५)। आपतत आगच्छतः=आस्यन्दमानस्य। पादैः शनैरापततः प्रमन्यून् (भट्टि० ३।४८)। आपतत आगच्छतः। (द्वि० बहु०)। प्रबलद्वीपिनमापतन्तमुच्चैः (राज० ३। )। सा ददर्श ततस्त्रस्तान् हरीनापततो द्रुतम् (रा० ४।१९।६)। द्रुतमापततः पलायमानान्। तत्र काष्ठं कुठारेण पाट्यमानं विधेर्वशात् आपत्य तस्य जङ्घायां भित्त्वान्तः प्रविवेश तम् (कथा० २८।१५)॥ जग्रहापततस्तस्य पादौ च रघुनन्दनः (रा० ३। १२।२४)। कथमिदमापतितम् (उत्तर० २)। आपतितं घटितं संवृत्तम्। अदर्शनादापतितः पुनश्चादर्शनं गतः (भा० शां० १७४।१७)। आपतित आविर्भूतः। क्वचित्प्राकरणिकादर्थादप्राकरणिकस्यार्थस्यापतनम् (सा० द०)। आपतनं प्रतीतिः। आपातरम्या विषयाः पर्यन्तपरितापिनः (कि० ११। १२)। आपातरम्यास्तत्कालरमणीयाः। तदात्वे पात आपात इति वैजयन्तीति मल्लिः। आपातरमणीयानां संयोगिनां प्रियैः सह। अपथ्यानामिवान्नानां परिणामोऽतिदारुणः (पञ्चत०)॥ मध्वापातो विषास्वादः (मनु० ११।९)।

मध्वापातो मधुरोपक्रमः। आनन्त्यव्यभिचारदोषापातात् (सा० द० १०।१६)। आपातः प्रसङ्गः। तदापातभयात्पथि (कु० २।४५)। आपात आस्कन्दः, आक्रमः, धर्षणम्। गरुडापातविश्लिष्टमेघनादास्त्रबन्धनः (रघु० १२।७६)। गरुडापातो गरुत्मतोऽवतरणम्। आपातान् प्रतितिष्ठन्ति पुलिन्दशबरा इव (भा० (शां० १५१।८)। आपातो नरकः। करटापातविस्फोटा भान्त्यर्था वासनादयः (यो० वा० ४।३३।३८)। आपातोऽवपातः। आमुखापाति कल्याणं कार्यसिद्धि हि शंसति (कथा० १८।४६)। आमुख उपक्रमे जायमानं घटमानं श्रेय इत्यर्थः। आपतये त्वा परिपतये गृह्णामि (वा० सं० ५।५)। पवनमुद्दिश्याह। आपतिरापतनम् इतः पवनं वानम्।

—पद् (पद गतौ)। एष रावणिरापादि वानराणां भयङ्करः (भट्टि० १५।८६)। आपादि प्राप्तः। तस्य मत्स्यः पाणी आपेदे (श० ब्रा० १।८।१।१)। आपेदे प्राप। रावणस्य पुरीं लङ्कामापेदतुः (रा० ६।१६।२१)। आपेदतुः=आपेदाते=प्रापतुः। अथ यदि पण्यमानः (सोमः) किञ्चिदापद्येत (श० ब्रा० १२।६।१।१०)। आपद्येत आपदमाप्नुयात्। विकारं गच्छेत्। शर्यातो ह वा ईक्षाञ्चक्रे। यत्किमकरं तस्मादिदमापादीति (श० ब्रा० ४।१।५।४)। तत इयमापदुपनतेति तदर्थः। अर्थधर्मौ परित्यज्य यः काममनुवर्तते। एवमापद्यते क्षिप्रं राजा दशरथो यथा (रा० २।५३।१३)। आपद्यते=आपद्गतो भवति। एवमापद्यते (माल०)। एवं भवतीत्यर्थः। न ह्येतास्वन्यत्सामापद्यते। (लाट्या० श्रौ० १०।२।२)। आपद्यते विद्यते। बलादपराधिनं मामापादयसि (विक्रम०)। अपराद्धतां मयि प्रसञ्जयसि। क्व नु नाम वयं सर्वाः कालेनाल्पेन तं नरम्। समागच्छेम यो नस्तद्रूपमापादयेत्पुनः (भा० आदि० २१७।१३)॥ आपादयेत् प्रापयेत्। स राजा परमापन्नः (हरि० १।२४।११)। आपन्न आपत्प्राप्तः। स्यादापन्न आपद्गत इत्यमरः। आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः (शा० २।१७)। उक्तोऽर्थः। आपन्नं तृणान् निरस्येत् (का० श्रौ० २।६।३३)। आपन्नं (वेद्यां) पतितं (तृणादिकम्)। कूजद्भिरापादितवंशकृत्यम् (रघु० २।१२)। आपादितं निष्पादितं निर्वृत्तम्। आपदिरनिष्टप्रसङ्ग इति परिभाष्यते। दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम् (रघु० १।६०)। आपदो विपदो व्यसनानि। ध्यानापादांश इव (छां० उ० ७।६।१)। आपादो ध्यानफललाभः (शङ्करः)। द्रव्यस्य सङ्ख्यान्तरापादने (अधिकरणविचाले ५।३।४३ इत्यत्र वृत्तिः)। आपादनं प्रापणम्।

—पा (पा पाने)। नापिबेयं बलाद्यो भित्त्वा चेद्रुधिरं युधि (भा० सभा० ६८।५३)। आपिबेयम्=निःशेषेण पिबेयम्, कणेहत्य पिबामीत्यर्थः। ततो

स्या आपपौ वक्त्रं पद्मं मधुकरो यथा (हरि० ८७४६)। उक्तोऽर्थः। षडाननापीतपयोधरासु (रघु० १४।२२)। आपीता निःशेषेण पीता। आपीतौ युष्मद्विधैः पुत्रैः···पयोधरौ (हर्ष० ५)। उक्तोऽर्थः। ता राघवं दृष्टिभिरापिबन्त्यः (रघु० ७।१२)। सतृष्णमालोकयन्त्य इति तात्पर्यार्थः। उपैति सविता ह्यस्तं रसमापीय पार्थिवम् (भा० शां० ५८।२८)। रसमाकृष्येत्यर्थः। आपाने पानकलिता दैवेनाभिप्रचोदिताः (भा० आदि० २।३५५)। आपानं पानशाला। अमरस्त्वापानं पानगोष्ठिकेति पठति। गन्धर्वाप्सरसो भद्रे मामापानगतं सदा उपतिष्ठन्ति (भा० वन० २८१।१३)। उक्तोऽर्थः।

—पिष् (पिष्लृ संचूर्णने)। यदाऽऽपिपेष मातरं पुत्रः प्रमुदितो धयन् (वा० सं० १६।११)। आपिपेष ईषत् पिनष्टि क्षिणोति। तं पाणिनापेष बोधयाञ्चकार (श० ब्रा० १४।५।१।१५)। पाणिनापेषम् पाणिभ्यां निपीड्य।

—पीड् (पीड अवगाहने)। अन्यानि वासांसि परिधाय सकृदेनान्यापीड्य (आश्व० गृ० ४।४)। इहापीडयतिर्निष्पीडयतेरर्थे पठितः। कण्ठे जीर्णलताप्रतानवलयैरत्यर्थमापीडितः (शा० ७।११)। आपीडित आबाधितः।

—पू (पूङ् पवने)। इन्द्रस्येन्दो जठरमापवस्व (ऋ० ६।७०।१०)। आपवस्व प्रक्षरन् प्रविशेत्यर्थः। ते नः सहस्रिणं रयिं पवन्तामा सुवीर्यम् (ऋ० ६।१३।५)। अस्मान्प्रति प्रवाहयन्त्वित्यर्थः। आ पवस्व हिरण्यवदश्ववत् सोम वीरवत् (वा० सं० ८।६३)। आपवस्व प्रक्षर।

—पृ (पृङ् व्यायामे)। अहन्यापृतातंकरणा निशि निःशयानाः (भा० पु० ३।६।१०)। आपृतानि व्यापृतानि आर्तानि करणानि येषां ते आपृतार्तकरणाः। अन्यत्र व्याङ्पूर्व एव प्रियतिः प्रयोगमवतीर्णो दृश्यते। अत्र तु केवलेनाङोपसृष्ट इति भागवतकारस्य व्यवहारं प्रत्यनादरस्य निदर्शनम्। स चेह बहुल ऋतिकरश्च विदाम्।

—पृच् (पृची सम्पर्चने)। आ त्वा पृणक्त्विन्द्रियं रजः सूर्यो न रश्मिभिः (ऋ० १।८४।१)। आपृणक्तु पूरयतु। सेमं पृण (ऋ० १।१६।६)। पूरयेत्याह। काममापृण दुर्मन्मानं सुमन्तुभिरेमिषा पृचीमहि (ऋ० १।१२६।७)। इषा अन्नेन आपृचीमहि सन्तर्पयामः। वस्वो वीरस्यापृचः (ऋ० ८।४०।६)। आपृचः कार्त्स्न्येनाधिकृतवानसि, निरवशेषमधितिष्ठसि।

—पृ (पृ पालनपूरणयोः, पूरी आप्यायने)। वक्त्रमापूर्यतेऽश्रूणाम् (सुश्रुत० १।११६।१४)। अश्रूणामिति कर्मणः शेषत्वविवक्षायां षष्ठी। भृत्यैरापूर्यते नृपः (हितोप० २।७२)। यत्त ऊनं तत्त आपूरयाति (अथर्व० १२।१।६१)।

—प्याय् (ओप्यायी वृद्धौ)। आपीनानि धेनूनां स्रोतांसि सरितामिव (हरि०)। आपीनानि ऊधांसि। विशेष्येर्थे विशेषणप्रयोगः। आप्यायितो वचनामृतेन (महावीर० १।२)। आप्यायितः सन्तृप्तः।

—प्यै (प्यैङ् वृद्धौ)। आ वयं प्यासिषीमहि (अथर्व० ७।८६।५)। आप्यायिता भूयास्मेत्यर्थः।

—प्रच्छ (प्रच्छ ज्ञीप्सायाम्)। आपृच्छे त्वां गमिष्यामि पुनरेष्यामि चाप्य-हम् (भा० सभा० ३।१)। आपृच्छे आमन्त्रये, गमनानुज्ञां याचे। आपृच्छे साधयिष्यामि, गच्छ विप्र यथासुखम्। (भा० आश्व० १६।५२)। उक्तोऽर्थः। आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलम् (मेघ १२)। आपृच्छति च यच्छ्रेयः करोति च हितं वचः (भा० सौ० २।२२)। इहाङार्थे न कश्चिद् विशेषः क्रियते। अस्थान आङ् इति वा सुवचम्। अनापृच्छन्हि गृह्णानो हस्त-च्छेदनमर्हति (गौ० ध० )। अनुज्ञामयाचमान इत्यर्थः। आपृष्टोऽसीह कौन्तेय स्वस्ति प्राप्नुहि भारत (भा० सभा० ७८।२२)। आपृष्टो दत्तगमनानुज्ञः।

—प्रा (प्रा पूरणे)। आ प्रा द्यावापृथिवी अन्तरिक्षम् (ऋ० १।११५।१)। आप्राः=अप्रात्, पूरितवान्, व्याप्नोत्, व्याश्नुत। येनेमे चित्रवज्रहस्त रोदसी ओभे सुशिप्र प्राः (अथर्व० २०।८०।१)। आपप्रौ पार्थिवं रजो बद्बधे रोचना दिवि (ऋ० १।८१।५)। उक्तोऽर्थः।

—प्लु (प्लुङ् गतौ)। अन्योऽन्यमापुप्लुविरे तथान्ये (बुद्ध० १३।२५) तेन शब्देन सहसा…। आप्लवन्त गतैः सत्त्वैर्मत्स्याः शतसहस्रशः (भा० वन० १६६।२०)। आप्लवन्त पलायन्त। गतैः सत्त्वैर्विगताभिर्बुद्धिभिः। एता अश्वा आप्लवन्ते (ऐ० ब्रा० ६।३३)। उत्प्लवन्त इत्यर्थः। स भीमसेनस्य रथम्… आपुप्लुवे सिंह इवाचलाग्रम् (भा० कर्ण० ८४।३६)। आपुप्लुवे उत्प्लुत्यारूढ-वान्। स्यन्दनं वृषसेनस्य तूर्णमापुप्लुवे भयात् (भा० द्रोण० १२६।३३)। उक्तोऽर्थः। सवस्त्रोऽहरहराप्लुवीत (शां० गृ० ४।१२)। आप्लुवीत=आप्लवेत =स्नायात्। तेनैनां सकेशनखामभ्यज्य ह्लासयित्वाऽऽप्लावयन्ति (गो० गृ० २।५।६)। आप्लावयन्ति स्नापयन्ति। एतेषु तीर्थेषु…काशिकन्या…आप्लावयत गात्राणि (भा० उ० १८६।२६)। गात्राण्याप्लावयत शरीरं निरणेनेक्, अस्ना-दित्यर्थः। अनाप्लवमानः (लाट्या० श्रौ० ६।२।१८)। अस्नानित्यर्थः। प्राद्रवत्सहसा राजन्पुत्रो दुर्योधनस्तव। आप्लुतश्च ततो यानं चित्रसेनस्य धन्विनः (भा० द्रोण० ११६।२४-२५)॥ आप्लुतः प्लुत्याऽऽरूढः। स विपन्नरथो भीमो नकुलस्याप्लुतो रथम् (भा० द्रोण० १८८।२३)। आप्लुतः शैघ्र्येणारूढः। ततः सा सहसा त्रासादाप्लुता निम्नागातटम् (बि०

पु० २।१३।१३)। उत्प्लुत्य नदीकूलमारूढेत्यर्थः । गोमन्तशिखराच्छ्रीमानाप्लुतोऽमितविक्रमः (हरि० २।४२।८१)। तौ नगादाप्लुतौ दृष्ट्वा (हरि० २।४ ।१)। उक्तपूर्व एवार्थः। आप्लुतः स्नातको व्रती इत्यमरः। यावन्नाश्यायते वेदिरभिषेकजलाप्लुता (रघु० १७।३७) । जलाप्लुता जलपूर्णा। बाष्पाप्लुतः, व्यसनाप्लुतः रुधिराप्लुत इत्यादिषु तदर्थक एवाप्लुतशब्दः। प्रथमो वार्षिको मासः श्रावणः सलिलाप्लुतः (रा० ४।२५।१२)। अनन्तरोदीरित एवार्थः। अवाङ्मुखमथो दीनं दृष्ट्वा सोममिवाप्लुतम् (रा० ७।१०६।१)। आप्लुतमुपप्लुतमुपरक्तं ग्रहगृहीतम्। आङ्स्थाने। सोमश्चन्द्रः । जलमाप्लुत्य (मनु० ५।७७)। जलमाप्लुत्य जलमवगाह्य, स्नात्वा। ऊषुराप्लुत्य गात्राणि तपश्चातस्थुरुत्तमम् (भा० वन० ६५.५)। गात्राण्याप्लुत्य=अभिषिच्य । अन्तर्णीतण्यर्थकः प्लवतिः। अप आप्लुत्य (आश्व गृ० ३।२।१)। आप्लवनं स्नानं भवति। इह द्वितीयाश्रुत्याऽवगाहनपूर्वके स्नाने वर्तत इति हरदत्तः। पाञ्चालस्य रथस्येषामाप्लुत्य सहसाऽपतत् (भा० आदि० १३८।५७)। आप्लुत्य उत्प्लुत्यारुह्य । माता कुमारमादायाप्लाव्य (पा० गृ० २।१)। आप्लाव्य प्रस्नाप्य । अन्नमाप्लाव्य वारिणा (मनु० २।३१४)। आप्लाव्य अभ्युक्ष्य। मूत्रेणाप्लाव्य सप्ताहं स्नुहीक्षीरेण ततः परम् (सुश्रुत० १।१६८। १३)। मूत्रेणाप्लाव्य मूत्रेणाभ्युक्ष्य, मूत्रे निमग्नं कृत्वा। कलशोदकेषु शाखामाप्लाव्यौदुम्बरीं स्पृशेत्तुरगान् (व० बृ० स० ४३।२१)। शाखामाप्लाव्य शाखां निमज्ज्य। प्रलयाप्लावमिवाभिदर्शयन्तः (शिशु० २०।७०)। आप्लाव आप्लव ओघः।

—प्लुष् (प्लुष दाहे)। दिवाकराप्लुष्टविभूषणास्पदाम् (कु० ५।४८)। आप्लुष्टमीषत्प्लुष्टमवदग्धम्।

—बन्ध् (बन्ध बन्धने)। यत्ते देवी निर्ऋतिरा बबन्ध दाम (अथर्व० ६।६३।१)। आबबन्ध बबन्ध अपिननाह। स्रजः प्रह्लादस्य मूर्ध्नि चाबबन्ध (हरि० १३७३०)। उक्तोऽर्थः। क्व समाधानमाबध्नातु अवष्टम्भः (काद०)। आबध्नातु निदधातु। न निर्भरमाबध्नाति पदम् (काद०)। आबध्नाति न्यस्यति निधत्ते। स्यन्दनाबद्धदृष्टिषु (रघु० १।४०)। रथप्रत्युप्तदर्शनेषु। आबद्धा मानुषाः सर्वे निबद्धाः कर्मणो र्द्वयोः (भा० सौ० २।२)। आबद्धा आ समन्ताद् बद्धाः। ताभ्यामाबद्धाभ्यां शोभमाना (कुण्डलाभ्याम्) (भा० आदि० ३।६७)। गते प्रेमाबन्धे प्रणयबहुमाने विगलिते (अमरु० ४३)। प्रेमाबन्धः प्रणयबन्धः। आबन्धो योत्रं योक्त्रम् इत्यमरः।

—बाध् (बाधृ लोडने, लोडनं प्रतिघातः)। तेऽसुरा दिग्भ्य आबाधन्त (तै० सं० ५।७।२।१)। प्रतिजघ्नुरित्यर्थः।

—बृह् (बृह् उद्यमने)। यत्समूलमावृहेयु वृक्षं न स पुनराभवेत् (बृहदा० उ० ३।६।२८)। केचिदत्रोद्यमनेऽर्थे दन्तोष्ठ्यादि वृंहि पठन्ति। तदपि साधु। मूलमस्याबर्हि (पा० ४।४।८८)। आवृह्यत उत्पाट्यत इत्याबर्हि।

—भज् (भज सेवायाम्)। एमं भज ग्रामे अश्वेषु गोषु (अथर्व० ४।२२।२)। इमं ग्रामादिषु आभज भागिनं कुर्वित्याह। प्रजापति र्वै पित ऋभून् मर्त्यान्त्सतोऽमर्त्यान्कृत्वा तृतीयसवन आभजत् (ऐ० ब्रा० ६।१२)। उक्तोऽर्थः। त्वं सूर्ये न आ भज तव क्रत्वा तवोतिभिः (ऋ० ६।४।५)। यां आभजो मरुत इन्द्र सोमे (ऋ० ३।३५।६)। हे इन्द्र यान्मरुतः सोमे भागिनोऽकरोरित्याह। आ तं भज सौश्रवसेष्वग्ने उक्थ उक्थ आ भज शस्यमाने (ऋ० १०।४५।१०)। पाहि माऽग्ने दुश्चरिताद् आ मा सुचरिते भज (तै० सं० १।१।१२।१)। सुचरित आभज सुचरिते भागिनं कुरु। सुचरितवन्तं मां कुर्विति तात्पर्यार्थः। ऋतवो ह वै देवेषु यज्ञे भागमीषिरे आ नो यज्ञे भजत मा नो यज्ञादन्तर्गत (श० ब्रा० १।६।१।१)। अन्तरित्यत्र व्यवधौ वर्तते। यज्ञान्नो मास्म व्यवधातेत्यर्थः। हन्तेमानस्मिन्नुक्थ आभजा इति (ऐ० ब्रा० ३।२०)। आभजे आगतभागान् भागवतः करोमीत्याह। आ नो भजस्व राधसि (ऋ० ४।३२।२१)। तव वै वयं स्मो नु न एतस्मिन्सामन्नाभजेति (जै० उ० ब्रा० १।६।१।८)। इयं दुरुक्तात् परिबाधमाना प्राणापानाभ्यां बलमाभजन्ती (लौ० गृ० ४१।१५)। आभजन्ती ददती (मेखला)। एतद्ध वै पितरो मनुष्यलोक आभक्ता भवन्ति यदेषां प्रजा भवति (श० ब्रा० १३।८।१।६)। आभक्ता भागिनः। यदिदं किञ्चैवमु तत्सर्वं यज्ञ आभक्तम्। या वै प्रजा यज्ञेऽनन्वाभक्ताः पराभूता वै ताः (श० ब्रा० १।५।२।४)। उक्तोऽर्थः।

—भा (भा दीप्तौ)। विश्वा आभाहि प्रदिशश्चतस्रः (अथर्व २।६।१)। आभाहि प्रकाशय। आयं भातु शवसा पञ्च कृष्टीः (का० सं० ३७।६, लौ० गृ० ४४। ) इत्यत्र च देवपालोद्धृतो मन्त्रः)। आभातु प्रकाशयतु। यथा पूर्वत्र तथेह भातिरुपसर्गवशात्सकर्मकः। रम्यां य उपसर्पन्ति दीपाभां शलभा यथा। दीपाभा दीपार्चिः। दीपप्रभा। शराणां गार्ध्रवाससाम्। स्पर्शमाशीविषाभानाम् (भा० वन० ३३।८७)। आभा आभासः।

—भाष् (भाष व्यक्तायां वाचि)। वैशम्पायनश्चन्द्रापीडमाबभाषे (काद०)। आबभाषे आललाप सम्बोधयामास। सखी वेत्रभृदाबभाषे (रघु० ६।८२)। इहाङ् नार्थे विशेषं करोति। बभाष इत्येवार्थः। एवमाभाष्यमाणोपि भ्रातृभिः कुरुनन्दन (भा० भीष्म० ४३।२०)। आभाष्यमाणः सम्बोध्यमानः। कौशिकश्च तथेत्याह राजा चाभाष्य मन्त्रिणः (रा० १।१७।१७)। आभाष्य

**आहूय, आकार्य** । सम्बन्धमाभाषणपूर्वमाहुः (रघु० २।५८) । **आभाषणं संभाषणम्, संवादः । स्यादाभाषणमालाप इत्यमरः** । आभाषस्ते किमु न विदितः खण्डितः पण्डितः स्यात् (शान्ति०) । **आभाष आभाणकः ।**

**—भास्** (भासृ दीप्तौ) । सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् (श्वेता० उ०३।१७) । **आभासः प्रतीतिः** । हेत्वाभासः । **हेतुवदाभासते प्रतिभाति इति हेत्वाभासो दुष्टो हेतुः** । कवन्धः परिघाभासो दृश्यते भास्करान्तिके (रा० ३।२३।११) । **परिघाभासः परिघसदृशः ।**

**—भुज्** (भुजो कौटिल्ये) । प्रासादाभोगविस्तीर्णः स्तुतिशब्दो ह्यवर्तत (रा० २।६५।३)। **आभोगो विस्तारः** । अकथितोपि ज्ञायते यथाऽयमाभोगस्तपोवनस्येति (शा० १) । गङ्गाभोगकुटिला (भा० वन० ) । **आभोगः कौटिल्यम्** । बाहुमाभोगिनं कृत्वा (हरि० २।३४।३६) । **आभोगिनम् अतिवृद्धम् । आयामवन्तम् ।**

**—भू** (भू सत्तायाम्) । आ देवानामभवः केतुरग्रे (ऋ० ३।१।१७) । **आभवः=अवर्तथाः** । यत्समूलमुद्वृहेयुर्वृक्षं न स पुनराभवेत (श० ब्रा० १४।६।६।३४) । **आभवेत् जायेत** । कथमाभवन्ति (भा० आदि० ६०।६) । **भवन्ति जीवन्ति कथं न शीर्यन्ते । आभवन्ति पुनर्जायन्ते** । विद्मा उत्सं यत आबभूथ (ऋ० १०।८४।५) । **आबभूथ अजायथा उदपद्यथाः** । स इदं विश्वमभवत् स आभवत् (अथर्व० ७।१।२) । **आभवत् सर्वतो व्याप्य वर्तते, आवृत्यावृत्य ताद्रूप्येण कारणात्मना वा वर्तत इति सायणः** । अस्माकं विप्रेमाणमन्विदमसुरा आभविष्यन्ति (ऐ० ब्रा० १।२४) । **विप्रेमाणं विरोधमनुलक्ष्य इदं जगदभिभविष्यन्तीत्याह** । सर्वान् कामान्पूरयत्याभवन् प्रभवन्भवन् (अथर्व० ३।२९।२) । आभवन् समन्ताद् भवन् व्याप्नुवन् । भवन्निति वर्धिष्णुमाह । **आभूतो भूतः स उ जायते पुनः (अथर्व० ११।४।२०) ।**

**—भृ** (भृञ् भरणे) । आ नो अग्ने रयिं भर (ऋ० १।७९।८) । **आभर आहर** । किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम् (कु० ५।४४) । **आभ्रियते पुष्यते रूपमनेनेत्याभरणं भूषणम् अलङ्कारः ।**

**—मन्त्र्** (मत्रि गुप्तपरिभाषणे) । यजमानमामन्त्रयते (भा० श्रौ० ६।११।१) । **सम्बोधयतीत्यर्थः** । तमामन्त्रयाम्बभूव (काद० ८१) । **तं सम्बोधयामास, तेन समं संललाप** । परिजनोप्येवमामन्त्रयते (काद० १०५) । **आमन्त्रयते ब्रूते, भाषते** । आमन्त्रयध्वं राष्ट्रेषु ब्राह्मणान् (भा०) । **ब्राह्मणेभ्यो दूताः प्रेष्यन्तामित्याह** । आमन्त्रयस्व सहचरम् (शा० ३) । **गमनानुज्ञामाप्नुहीत्यर्थः** । उग्रश्रवसमामन्त्र्य उपपन्नमिति ब्रुवन् (भा० आदि० ४०।५) । **आमन्त्र्य**

सम्बोध्य । मम त्वामन्त्रय गुरून् न मां दोषः स्पृशेदयम् (भा० वन० २६६।२२)। आमन्त्रय अनुज्ञापय । सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे (छां० उ० ४।४।१)। आमन्त्रयाञ्चक्रे पप्रच्छ अनुयुयुजे । आमन्त्रयेऽत्रभवतीं गच्छामि स्वगृहान्प्रति ( )। आमन्त्रये आपृच्छे अनुमानयामि त्वां स्वगमनमित्यर्थः । देवः स्वामीति नृपतिरामन्त्रणीयः । पतिवज्ज्येष्ठमध्यमाधमैः स्त्रियः ॥ आमन्त्रणीयः सम्बोधनीयः । स कृत्वा निश्चय विष्णुरामन्त्र्य च पितामहम् (रा० १।१६।१०)। आमन्त्र्य साधयामीत्युक्त्वा । तमनुप्राप्तां वृद्धामामन्त्र्य सत्कृताम् (रा० २।११७।७)। आमन्त्र्य सम्बोध्य । अम्बेति वै योषाया आमन्त्रणम् (श० ब्रा० ६।६।२।५)। आमन्त्रणमालापः । अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् (सा० द०)। इहामन्त्रणं संलापमाह । विधिनिमन्त्रणेत्यादिसूत्रे (३।३।१६१) आमन्त्रणं कामचारानुज्ञामाचष्टे । तृतीयमामन्त्रणम् (आप० ध० २।१७।१३)। आमन्त्रणमाह्वानम् । तस्य पुरस्तादावसथस्तदामन्त्रणम् इत्याचक्षते (आप० ध० २।२५।४)। आमन्त्र्यतेऽत्रेत्यामन्त्रणमास्थानमण्डपः । शराणामामन्त्रितानाम् (भा० वन० २०।२६)। आमन्त्रितानामभिमन्त्रितानाम्, मन्त्रैः संस्कृतानाम् । साऽऽमन्त्रितम् (पा० २।३।४८)। सम्बोधने या प्रथमा साऽऽमन्त्रितसंज्ञा भवति ।

—मुच् (मुच्लृ मोक्षणे)। आमुञ्चतीवाभरणं द्वितीयम् (रघु० १३।२२)। आमुञ्चति प्रतिमुञ्चति, बध्नाति, बिभर्ति । आमुञ्चद् वर्म रत्नाढ्यम् (भट्टि० १७।६)। उक्तोऽर्थः । आमोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान्कटाक्षान् (मेघ० ३७)। आमोक्ष्यन्ते आ समन्तान्मोक्ष्यन्ते । आङ्पूर्वस्य मुञ्चतेर्बन्धनमर्थ इति नियमो न । तत्प्रायिकमित्येव । आमुञ्चतां च वर्माणि सम्भ्रमः सुमहानभूत् (भा० आदि० ४०६५)। आमुञ्चतां बध्नताम् । करोऽयमामुक्तविवाहकौतुकः (कु० ५।६६)। उक्तचर एवार्थः ।

—मुद् (मुद हर्षे)। आमोदं कुसुमानि धारयन्ति (सुभाषितम्)। आमोदो घ्राणतर्पणो गन्धः । आमोदः सोऽतिनिर्हारी इत्यमरः । आमोदो नहि कस्तूर्याः शपथेन विभाव्यते । (सुभाषितम्) आमोदं परमं जग्मुः (रा०)। आमोदो हर्षः ।

—मृश् (मृश आमर्शने, आमर्शनं स्पर्शः)। शरासनज्यां मुहुराममर्श (कु० ३।६४)। आममर्श पस्पर्श । आममर्श कुमारस्तं (कन्थकमश्वं) बभाषे च वयस्यवत् (बुद्ध० ६।५४)। अनन्तरोदीरित एवार्थः । आमृष्टं नः परैः पदम् (कु० २।३१)। आमृष्टम् आच्छिन्नम् । अगृहीतात्मकं संविदूहामर्शसूचयम् (यो० वा० ६(२) १८७।३६)। आमर्शश्चिन्तनम् ।

—मृष् (मृष तितिक्षायाम्, मृषु सहने च)। प्रत्युद्यातुमतस्तात नैतदामर्षयाम्यहम् (भा० द्रोण० १२।२१)। नामर्षयामि नोत्सहे।

—म्ना (म्ना अभ्यासे)। भवत्प्रणीतमाचारमामनन्ति हि साधवः (कु० ६।२१)। आमनन्ति स्मरन्ति स्मृतिरूपेणोपनिबध्नन्ति। त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम् (कु० २।१३)। आमनन्ति उदाहरन्ति, निगच्छन्ति, निगमयन्ति। एवं हि सूत्रकारा आमनन्ति (मालती० ७)। आमनन्ति उपदेशं परम्परीणं संस्मरन्ति, पूर्वानुक्रान्तमनुशासति। समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स (शत्रुः) च (शिशु० २।१०)। समौ तुल्यौ कथितौ वर्धिष्यमाणो रोगः शत्रुश्च। आमनन्मन्त्रमुत्तमम् (भट्टि० १७।३०)। आमनन् कण्ठे कुर्वन्, अधीयानो वा, आवृत्त्या पठन्निति वा। विद्याम्नाये महाश्रमः (भा० शां० ३३१।४७)। विद्याम्नायो विद्याभ्यासः। स्वाध्यायाम्नायकर्शिताः (भा० उ० ६६।१३)। स्वाध्यायाम्नायो वेदपाठः। आम्नायवचनादहिंसा प्रतीयेत (नि० १।१६)। आम्नायादन्यत्र नूतनश्छन्दसामवतारः (उत्तर० ४)। आम्नायो वेदः। आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि चेति (कौ० सू०)। आम्नायभङ्गान्निर्नष्टनामकृत्यास्ततः परम् (राज० १।८३)। आम्नायभङ्गः सम्प्रदायविपरिलोपः। इत्येतस्मिञ्जनाम्नाये केचिदव्यभिचारिणि (राज० १।३१६)। जनाम्नायो लोकप्रवादः, ऐतिह्यम्। अनाम्नायमला वेदा ब्राह्मणस्याव्रतं मलम् (भा० शां० ३२८।२०)। आम्नायोऽभ्यासः।

—यज् (यज देवपूजासङ्गतिकरणदानेषु)। येभ्यो होत्रां प्रथमामायेजे मनुः (ऋ० १०।६३।७)। आयजति=अभ्यर्चति प्रार्थयते वा। यस्मै त्वमायजसे स साधत्यनर्वा क्षेति दधते सुवीर्यम् (ऋ० १।९४।२)। आयजसि ददासि प्रदिशसि। प्रजावदस्मे द्रविणाऽऽयजस्व (वा० सं० १४।४)। आयजस्व दत्स्व। मयि देवा द्रविणमा यजन्ताम् (अथर्व० ५।३।५)। आयजन्ताम्=ददतु। आयागभूतं नृपतेस्तस्य वेश्मनि राघव (रा० १।३१।१३)। आयागभूतं यजनीयदेवताभूतम्।

—यत (यती प्रयत्ने)। सहस्रं मय्यायतन्ताम् (अथर्व० १७।१।३०)। आयतन्तां सर्वतश्चेष्टन्तामिति सायणः। अवतिष्ठन्तामिति वार्थः स्यात्। कस्मिन्नायतथो जने (ऋ० ५।७४।२)। आयतथ आयतेथे अवतिष्ठेथे। आ ते भद्रायां सुमतौ यतेम (ऋ० ६।१।१०)। उक्तोऽर्थः। आ यद्वामीयचक्षसा··· यतेमहि स्वराज्ये (ऋ० ५।६६।६)। दुर्दान्तानां दमनविधयः क्षत्रियेष्वायतन्ते (महावीर० ३।३४)। क्षत्रियाधीना भवन्तीत्यर्थः। वयं त्वय्यायतामहे(महावीर० १।४६)। त्वन्निघ्ना भवाम इत्यर्थः। मित्रो जनानायातयति ब्रुवाणः (ऋ० ३।

५।१।१) । आयातयति प्रवर्तयति । आयातनमारम्भः । तद्यथा भोजनमायातितमनेनेति दुर्गः । यजमानमेवैतत् स्वर्गे लोक आयातयति (श० ब्रा० ११।५।२।१०) । आयातयति आयतनं स्थानं पदं लम्भयतीत्यर्थः । एतमेव (अग्निमेव) तदेतस्मिँल्लोक आयातयति (ऐ० ब्रा० ३।३४)। सम्यक् प्रशंसति (षड्गुरु०) । प्रपाययति (गोविन्द०) । प्रजारक्षणार्थं सर्वतो यजमानं करोति (भट्ट०) । आदित्यरूपं प्रकाशमायातयति प्रसारयति (सायणः) । दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम् (वेणी० ३।३३) । मदायत्तम् मन्निघ्नम् । भाग्यायत्तमतः परं न खलु तद् वाच्यं वधूबन्धुभिः (शा० ४।१७) । उक्तोऽर्थः । स्वायां दिश्यायत्तम् (श० ब्रा० ६।३।४।१३) । आयत्तम्=कृतावस्थानम् । प्रहृतः परमायत्तस्ततः सुस्राव शोणितम् (रा० ६। ) । परमायत्तः परमोद्युक्तः । संगता परमायत्ता रामेण सह संयुगे (रा० ३।३६।६) । परमायत्ता अत्यन्तं सन्नद्धाः । दैवमेव परं मन्ये धिक् पौरुषमनर्थकम् । यत्राधिरथिरायत्तो नातरत्पाण्डवं रणे (भा० द्रोण० १३५।१) । आयत्त उद्युक्तः । विजने वाऽऽयतने वने गिरौ वा (बुद्ध० ५।१९) । आयतनं देवतायतनं देवमन्दिरम् ।

—यम् (यम उपरमे) । प्राणान् आयच्छेत् । प्राणायामं कुर्यात् । उच्चैरुच्चैस्तरामिच्छन्पदान्यायच्छते महान् (का० नी० सा० १४।१५) । आयच्छते आयतान् दीर्घान्विक्रमान् करोति । दृंह मूलमाग्रं यच्छ (अथर्व० ६।१३७।३) । अग्रमायच्छ आयतं कुरु । दुर्द्यूतदेविनः । कृते क्षत्रविनाशाय धनुरायच्छदर्जुनः (भा० द्रोण० २८।१६) । आयच्छत्=आकर्षत् । आ त्वा यच्छन्तु हरितो न सूर्यम् (ऋ० १।१३०।२) । आयच्छन्तु=इत आकर्षन्तु । आ ते वत्सो मनो यमत् (ऋ० ११।७।२९) । आयमत्=आकर्षतु, आहरतु । बाणमुद्यतमायंसीत् (भट्टि० ६।११९)। सज्जीकृतं बाणमुपसंहृतवान् इत्यर्थः । श्रियमायच्छमानाभिरुत्तमाभिरनुत्तमाम् (भट्टि० ८।४६) । आयच्छमानाभिः स्वीकुर्वाणाभिः । आहरद्भिर्दधद्भिरित्यर्थः । पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः (शा० प्रक्षिप्तः श्लोकः) । नम आयच्छद्भ्यः (वा० सं० १६।२२)। धनूंषि आकर्षद्भ्य इत्यर्थः । आतन्वाना आयच्छन्तोऽस्यन्तः (अथर्व०६।६६।२)। शरसन्धानेन धनूंष्याकर्षन्त इत्यर्थः । आ नः सुम्नेषु यामय (ऋ०८।३।२)। आयामय उपरमय स्थापयेत्यर्थः । सन्दानमर्वन्तं पड्वीशं प्रिया देवेष्वायामयन्ति (वा० सं० २५।३९) । आयामयन्ति गमयन्ति । आयतस्वभावानि दुःखानि (काद० १७५) । प्रकृत्या दीर्घकालव्यापीनीत्यर्थः । आयतवल्गं निरुद्धवाहैः (शिशु० ३।३०) । आकृष्टमुखरज्जु इत्यर्थः । प्रनिहितामायताम् (इषुम्) (अथर्व० ११।१।१) । संहितामाकृष्टामित्याह । लोकवेदयोरिषुः स्त्रियामपि । वेदे तु स्त्रियामेवेति विशेषः ।

यथेषुरायताऽनस्ता (श० ब्रा० ३।७।२।२)। उक्तोऽर्थः। आयतमुवतेन शरेण (रा० ५।३१।३०)। राजन्ये दुन्दुभावायतायाम् (अथर्व० ६।३८।४०)। **आयम्यमानायाम् आताड्यमानायाम्**। तन्नायतं बोधयेयुरित्याहुः (बृ० उ० ४।३।१४)। **आयतं निद्राणम्**। **शयितो हि दीर्घीकृताङ्गो भवति**। **अत एवायतशब्देनोच्यते**। आयामितमन्त्रवीर्यं० (भा० शां० ६४।१८)। **आयामितमाविर्भावितम् प्रकाशितम्**। यथा मित्रं ध्रुवं लब्ध्वा कृशमप्यायतिक्षमम् (मनु० ७।२०८)। **आयतिरुत्तरकालः**। उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा (प्रश्न० उ० ३।१२)। **आयतिरागमः**। द्रक्ष्यन्ति समरे योधाः शलभानामिवायतीः (भा० द्रोण० १५६।७१)। **आयतीः=दीर्घाः पङ्क्तीः**। शरवृष्टिमपश्याम शलभानामिवायतिम् (भा० शल्य० १३।४१)। काम्बोजानामिव महाराज शलभानामिवायतिः (भा० उ० १६६।३)। **उक्तोऽर्थः**। प्राक्कर्मायतिजनितो हि यो विपाकः (तन्त्रा० २।४।१३२)। **आयतिः प्रभावः**। **स्यात्प्रभावेपि चायतिरित्यमरः**। प्रस्थिता धनुरायन्तुं वार्यतां साधु मा गमत् (भा० आदि० १८८।७)। **आयन्तुम् आकर्ष्टुम्**।

—**यस् (यसु प्रयत्ने)**। व्यक्तं रामाभिषेकार्थे इहायस्यति धर्मराट् (रा० २।१४।६५)। **आयस्यति आयासवान्भवति**। **प्रयतते**। **उद्युङ्क्ते**। पिण्डार्थमायस्यतः (मुद्रा० ३)। **प्रयतमानस्येत्यर्थः**। नायस्यसि तपस्यन्ती (भट्टि० ६। ७०)। **नायस्यसि क्लिश्यसे**। मथनायस्तैर्बाहुभिः। **मथनायस्ता मन्थनक्लान्ता अवलोडनखिन्ना बाहवः, तैः**। स्नेहमूलानि दुःखानि देहजानि भयानि च। शोकहर्षौ तथायासः सर्वं स्नेहात् प्रवर्तते (भा०)॥ **आयासः क्लमः, खेदः, श्रमः**।

—**या (या प्रापणे)**। परा यात पितर आ च यात (अथर्व० १८।३।१४)। **आयात पुनर्भागार्थमस्माभिराहूताः सन्त आगच्छतेत्याह**। पूरा नदीनां पुष्पाणि तरूणां शशिनः कलाः। क्षीणानि पुनरायान्ति यौवनानि न देहिनाम् (कथा० ५५।११०)॥ जलौघो भृशमाययौ (कथा० १२।१११)।

—**याच् (टुयाचृ याच्ञायाम्)**। (आयाचमाना) रामस्य च भवं नित्यमभवं रावणस्य च (रा० ५।२१।२२)। आयाचमानां दुःखार्ता······दशग्रीवपराभवम् (रा० ५।१६।२१)।

—**यु (यु मिश्रणामिश्रणयोः)**। युक्तः सर्वैः पद्भिः सममायुते (श० ब्रा० १३।२।७।६)। **सममायुते साकं कर्षति**। विश्वस्य यो मन आयुयुवे (ऋ० १।१३८।१)। **आयुयुवे आकर्षति हरति ईष्टे**। स (पवमानः) मध्व आयुवते वेविजानः (ऋ० ६।७७।२)। **आयुवते आदत्ते**। आ जाया युवते पतिम् (ऋ० १।१०५।२)। आ रश्मीन् देव युवसे स्वश्वः (तै०

ब्रा० २।७।१६।२)। रश्मीनायुवसे प्रग्रहान्यच्छसि। रायस्पोषं त्वमस्मभ्यं गवां कुल्मिं जीवस आयुवस्व (तै० सं० २।४।५।२)। आयुवस्व देहि, वितर प्रदिश। आ त्वमद्य युवमानः (ऋ० १।५८।२)। आयुवमान आददानः, गृह्णानः। वयांसि समासं पक्षावायुवानानि पतन्ति (श० ब्रा० ४।१।२।२६)। आयुवानानि विस्तारयन्ति। आयामयन्ति। सिंहशार्दूलमातङ्गवराहर्क्षमृगायुतं वनम् (भा० ६४।३९)। आयुतं युक्तम् आचितं निचितम्। आयुतं पितॄणाम् (ऐ० ब्रा० १।३)। विलीनार्धमायुतं तु नवनीतं यतो घृतम् इति षड्गुरुशिष्योद्धृतः श्लोकांशः।

—युज् (युजिर् योगे)। वातान्ह्यश्वान्धुर्यायुयुज्रे (ऋ० ५।५८।७)। आयुयुज्रे=आयुयुजिरे=युक्तवन्तः। आयुक्तकुशलाभ्यां चासेवायाम् (पा० २।३।४०)। आयुक्तस्तात्पर्येण युक्तो व्यापृतः। आयुक्तो गौः शकटे। आयुक्त ईषद् युक्तः। येऽत्र ब्राह्मणाः संमर्शिनो युक्ता आयुक्ताः (तै० उ० १।११।४)। आयुक्ता नियुक्ता व्यापारिताः। आयोजितस्तपस्यात्मा (काद० १७३)। आयोजितः प्रवर्तितो व्यापारितः। कुसुमायोजितकार्मुकः (कु० ४।२४)। कुसुमै रचितं धनुः, पौष्पं धनुरित्यर्थः। मालाः कदम्बनवकेसरकेतकीभिरायोजिताः शिरसि बिभ्रति योषितोऽद्य (ऋतु० २।२१)। आयोजिता ग्रथिताः। रसातलरसायोगात् तृणगुल्मलतादयो जनयन्ति यदाकारम् (यो० वा० ५।६८।१९)। आयोग उपयोगः। शरीरं सर्वे प्राविशन्नायुजः प्रयुजो युजः (अथर्व० ११।१०।२५)। आयुज आयोजनानि। अत्र सायणोऽप्युपसर्गकृतमर्थे विशेषं नालमूहितुं यदाह—उपसर्गवशादमीषामर्थभेदोऽवगन्तव्य इति।

—युध् (युध सम्प्रहारे)। यः क्रुद्धमायोत्स्यसि (भा० वन० २६८।७)। उपसर्गवशात्सकर्मकोऽत्र युधिः। न रथिनः पादचारमायोधयन्ति (उत्तर० ५, चन्द्रकेतूक्तिः)।

—रक्ष् (रक्ष पालने)। आ मा मित्रावरुणेह रक्षतम् (ऋ० ७।५०।१)। आ समन्ताद् रक्षतं गोपायतम्। तस्य द्वाराणि सर्वाणि पर्याप्तानि बृहन्ति च।... यन्त्रैराग रक्षितानि च (भा० आश्रम० ५।१७)। आरक्षो मे हतस्तात रामेणाक्लिष्टकारिणा (रा० ३।३१।४०)। आरक्षोऽन्तपालः। रक्षांसि हि विलुम्पन्ति श्राद्धमारक्षवर्जितम् (मनु० ३।२०४)। आरक्षो रक्षा।

—रच् (रच प्रतियत्ने)। मधुपर्कमारचय्य (ऋ० १।१२५।१ इत्यत्र सायणः)। मधुपर्कं निर्माय कल्पयित्वा। आरचितमुण्डमालः (दशकु०)। आरचिता बद्धा न्यस्ता निक्षिप्ता। इत्यारचय्य वपुरर्णशतार्धकेन (पञ्चत० ३।१।२४)। आरचय्य संयोज्य।

**—रञ्ज्** (रञ्ज रागे) । आरक्ताश्चैव निर्यासाः (वि० पु० ३।१७।६) । **आरक्ता ईषद् रक्ताः ।**

**—रभ्** (रभ राभस्ये) । आरभन्तेऽल्पमेवाज्ञाः । **आरभन्ते प्रक्रमन्ते ।** माऽऽरब्धा बलिविग्रहम् (भट्टि० ५।३८) । **बलिना रामेण विग्रहं युद्धं माऽऽरब्धा मोपक्रंस्थाः मा कार्षीरित्यर्थः ।** तृणैरारभ्यते रज्जुः । **आरभ्यते निर्मीयते ।** वाचा ह्यारभन्ते यद्यदारभन्ते (श० ब्रा० १२।२।४।१) । आ त्वा रम्भं न जिव्रयो ररम्भा शवसस्पते (ऋ० ८।४५।२०)। **आररम्भ आरेभिमहे आरभामहे ऽवलम्बामहे ।** रम्भो दण्डः। आ ते हस्ती रभामहे (अथर्व० ८।१।८) । **आरभामहे आलम्बामहे गृह्णीमहे ।** ये त्वारभ्य चरामसि (१।५७।४) । **त्वाऽऽरभ्य=त्वामालम्ब्य ।** भूतैः पञ्चभिरारब्धे देहे (भा० पु० ३।३१।३०) । **आरब्धे निर्मिते ।** वर्षीयांश्च पृथिव्या ध्रुवः सर्वमारभ्य तिष्ठति (आप० ध० १।२३।६) । **आरभ्य विष्टभ्य । शेषित्वेनाधिष्ठायेत्युज्ज्वलायां हरदत्तः । संस्तभ्येति तु शङ्कराचार्यः ।** मृगातिशय तद् ब्रूहि कमारभ्येति भाषसे (अवदा० रुरुजा० २७) । **कमारभ्य, कमुद्दिश्य, कमधिकृत्य ।** मालत्याः प्रथमावलोकदिवसादारभ्य (मालती० ६) । **आरभ्य आदाय, दिवसात् प्रभृति ।** अयथाबलमारम्भो निदानं क्षयसम्पदः (शिशु० २।६४) । **आरम्भोऽभियानम्, यानम् ।** आरम्भे पारमेष्ठ्यं तु न प्राप्यमिति मे मतिः (भा० सभा० १५।५)। **राजसूयारम्भे ।** आगमैः सदृशारम्भः (रघु० १।१५) । **आरम्भश्चर्या ।** किं स्विदासीदधिष्ठानमारम्भणं कतमत् स्वित्कथासीत् (ऋ० १०।८१।२) । **आरम्भणमालम्बनस्थानम् ।** तां प्रत्यारब्धिरभवत्क्रुध्यतां सर्वमन्त्रिणाम् (राज० ६। ६।३४८) । **आरब्धिरभियानम् ।**

**—रम्** (रमु क्रीडायाम्) । आरमाच्छावाक (ऐ० ब्रा० ६।३०) । **आरम उपरम, विरम ।** आरमेदा सम्प्रैषात (आश्व० श्रौ० ५।१६।२) । **आरमेत् विरमेत् ।** विरामोऽस्त्विति चारमेत् (मनु० २।७३) । **उक्तोऽर्थः ।** अन्तर्वत्नी त्वहं भ्रात्रा ज्येष्ठेनारम्यतामिति (भा० आदि० १०४।११) । **आरम्यताम् उपरम्यताम् । प्रारिप्स्यमानात्कर्मणो वारयात्मानमिति तात्पर्यार्थः ।** सत्यधर्मार्यवृत्तेषु शौचे चैवारमेत्सदा (मनु० ४।१७५) । **आरमेत् रतिं कुर्यात् । प्रीतिमनुभवेत् ।** ताश्च समं युगपदारमन् (कथा० ४४।५०) । **आत्मानं रमयामासेत्यर्थः ।** आरेमुरित्वा पुलिनान्यशङ्कम् (भट्टि० ३।३८) । **आत्मानं विनोदयामासुरित्यर्थः ।** आरतनिःस्वनैः (कि० ५।६) । **प्रशान्तगर्जितैरित्याह ।** अनारमत्यग्ने दुःशीर्ततनो जुषस्व स्वाहा (आप० श्रौ० ६।४।१४।१३)।

अनारमति=(रुद्रे) अविरमति सति । चक्षुषोरेवैते आरमणे कुरुतः (श० ब्रा० ४।२।१।१६) । आरत्यवरतिविरतय उपरामे इत्यमरः ।

—राध् (राध साध संसिद्धौ) । शूद्रस्तु वृत्तिमाकाङ्क्षन् क्षत्रमाराधयेद्यदि (मनु० १०।१२१) । आराधयेत् परिचर्यया रञ्जयेत् । आराधयति धर्मज्ञः परलोकं जितेन्द्रियः (रा० २।६०।६) । आराधयति साधयति आप्नोति । यदि वा जानकीमपि । आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा (उत्तर० १।१२) । आराधनमनुरञ्जनम् प्रीणनम् । सम्बन्धे विपरीतमेव तदभूदाराधन ते मयि (उत्तर० ४।१७) । आराधनं सत्क्रिया सभाजनमर्हणा । मन्त्राराधन-तत्परेण मनसा नीताः श्मशाने निशाः (भर्तृ०      ) । आराधनं साधनं वशीकरणम् ।

—रिच (रिचिर् विरेचने) । स सुन्वत इन्द्रः सूर्यमा देवो रिणङ् मर्त्याय स्तवान् (ऋ० २।१६।५) । आरिणक् प्रारेचयत् । आरेचितभ्रूलता० (कु० ३।५) । आरेचिते वक्रीभूते ।

—री (रीङ् स्रवणे, री गतिरेषणयोः) । ए रिणाति बर्हिषि प्रियं गिरा (ऋ० ६।७१।६) । आरिणाति आस्रावयति । आस्मै रीयन्ते निवनेव सिन्धवः (ऋ० १०।४०।६) । आरीयन्ते स्रवन्ति । त्वरितं स्यन्दन्ते ।

—रु (रु शब्दे) । तस्करानारुवन्त्यः (गावः) (व० बृ० सं० ६२।१) ॥ रम्भारवेण संनिहितान्स्तेनान्कथयन्त्य इत्यर्थः । आ रोदसी वृषभो रोरवीति (ऋ० ६।७३।१) । द्यावापृथिव्यौ रम्भया पूरयन् इत्याह ।

आरावं मातृवर्गस्य भृगूणां क्षत्रियैर्वधे (भा० आदि० १८०।५) । आरावः क्रन्दितं क्रन्दनध्वनिः ।

—रुज् (रुजो भङ्गे) । आरुजन्विरुजन्पार्थो ज्यां विकर्षंश्च पाणिना (भा० द्रोण० १२७।३१) । आरुजन् कृन्तन् ।

—रुध् (रुधिर् आवरणे) । तेषु तेष्ववकाशेषु शीघ्रमारुध्यतां पुरी (हरि० ५०१३) । आ समन्ताद् रुध्यताम् इत्यर्थः । बन्धुता शुचमारुणत् (भट्टि० १७।४६) । आरुणत् अपनीतवती । यः स्मारुन्धानो गध्या समत्सु (ऋ० ४।३८।४) । आरुन्धानः सुष्ठु गृह्णानः, इतः कर्षन्वा । वायवारुन्धि नो मृगान् (कौ० सू० १२७) । इतः प्रेरयेत्यर्थः । पद्भ्यामारोधयन्मार्गम् (भा० आदि० १०४।१६) । आरोधयत् पिहितवान् । नगर्याः पश्चिमं द्वार शीघ्र मारोधयन्तु (हरि० ५०१५) । उक्तोऽर्थः । वत्सानारुध्य शार्ङ्गैः (भा० पु० १०।१३।७) । आरुध्य=अवरुध्य ।

—रुह् (रुह बीजजन्मनि)। आ यदश्वान्वनन्वतः श्रद्धयाहं रथे रुहम् (ऋ० ८।१।३१)। आरुहम् आरुक्षम्। सा भूमिमारुरोहिथ वह्यं श्रान्ता वधूरिव (अथर्व० ४।२०।३)। उक्तोऽर्थः। आ रोहतायुर्जरसं वृणाना: (ऋ० १०।१८।६)। आरुरुहू रथादिषु (भट्टि० )। अत्रार्थे सप्तमीप्रयोगो विरलो लोकवेदयोः। सिंहासनमारुरोह (काद० १११)। सिंहासनमध्यासाञ्चक्रे। गत्वा च नासिकां छित्त्वा भार्यायास्तामारोपयत्। गुरुनासां मुखे तस्या न च तत्रारुरोह सा (कथा० ६१।१६)॥ आरोपयत् प्रत्यवपत्। गुरोर्नासा गुरुनासेति षष्ठीतत्पुरुषः। आभरणभारमङ्गेषु नारोपयन्ति (काद० २०३)। नारोपयन्ति न न्यस्यन्ति। छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः (रघु० १४।४०)। आरोपिताऽध्यासिता। अङ्कमारोप्य (रघु० ३।२६)। अङ्के निधायेत्यर्थः। वृषल भृत्यमिव मामारोढुमिच्छसि (मुद्रा० ३)। मम प्रबुभूषसि। अत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा (शा० प्रक्षिप्तः श्लोकः)। आरूढिरुच्छ्रायः। नगाद्यारोहः पर्वताद्युत्सेधः। सारोहाणां च वाजिनाम् (रा० ६।३।३४)। आरोहः सादी। अश्वा हतारोहाः (हरि०)। आरोहे विनये चैव युक्तो वारणवाजिनाम् (भा० वि० )। आरोह आरोहणम्। लङ्का सारोहा पर्वते (रा० ५।७३।६)। पर्वतारूढा पर्वतस्योपरि स्थितेत्यर्थः। क्लृप्ताः स्थूणाः कुरुतारोहणानि। गन्धर्वाप्सरसां चैव शीघ्रम्। यत्र नृत्येरंस्त्वप्सरसः समस्ताः (भा० आश्व० १०।२७)॥ आरोहणानि रङ्गस्थलानि रङ्गाः। उदग्राक्लिष्टसुश्लिष्टं मञ्चारोहणमुत्तमम् (हरि० २।२८।८)। आरोहणं सोपानम्। आरोहणं स्यात्सोपानम्। (अमरः)। श्रोण्यामप्यारोहो वरस्त्रियाः (अमरः)। वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी (अमरः)। समारोहपरिणाहा वृक्षा निधाः। आरोह उत्सेधः। यास्ते रुहः प्ररुहो यास्त आरुहो याभिरापृणासि दिवम् (अथर्व० ८।२६।३)। आरुह आ समन्ताद् रोहन्त्यः शाखाः। तं देशमारोपितपुष्पचापे (कु० ३।३५)। आरोपितज्यमारोपितमित्युक्तम्। विदितो वनेचर इतिवदुत्तरपदलोपोऽत्र द्रष्टव्यः। आरोपितपुष्पचापोऽधिज्यपुष्पधन्वा, तस्मिन्। वस्तुन्यवस्त्वारोपोऽध्यारोपः (वे० सा०)। निगदव्याख्यातम्।

—लक्ष् (लक्ष आलोचने)। एतदालक्ष्यते राम मधूकानां महद् वनम् (रा० ३।१६।२२)। आलक्ष्यते आ समन्ताद् दृश्यते। नातिपर्याप्तमालक्ष्य मत्कुक्षेरद्य भोजनम् (रघु० १५।१८)। आलक्ष्य लक्षयित्वा।

—लप् (लप व्यक्तायां वाचि)। अहं ह्यरण्ये कथमेकमेका त्वामालपेयं निरता स्वधर्मे (भा० वन० २६६।३)। आलपेयं संभाषेय। तत्र योन्यत्कर्मणः

साधु मन्येन्मोघं तस्यालपितं दुर्बलस्य (भा० उ० २६।८)। आलपितं मन्त्रणा, संमर्शः। आलापाश्च प्रलापाश्चाभीलालपश्च ये (अथर्व० ११।८।२५)। आलापा आभाषणानि, सार्थकवचनानि। अभीलालपः। यङ्लुकि क्विपि बहुवचने रूपम्। अभीत्यत्र सांहितिको दीर्घः। डामरैः प्रहितालापश्चैत्रे यात्रामदान्मदात् (राज० ७।६१५)। प्रहितालापो दत्तसन्देशः कृतनिमन्त्रणः।

—लभ् (डुलभष् प्राप्तौ)। आयुधं तेन सत्येन पादौ चैवालभे तव (रा० २।१८।१९)। आलभे स्पृशामि। यत्त्रिषु यूपेष्वालभेत (तै० ब्रा० १।८।६।१)। आलभेत, बध्नीयात्, विशसेत्, निबर्हयेत्। प्रातर्वै पशूनालभन्ते (श० ब्रा० ३।७।२।४)। उक्तोऽर्थः। इध्ममर्चिरालभते (तै० ब्रा० २।१।१०।१)। आलभते गृह्णाति, व्याप्नोति। वेदशिरसा नाभिदेशमालभते (आश्व० श्रौ० १।११।२)। आलभते स्पृशति। यथा शाल्वपते नान्यं वरं ध्यायामि कञ्चन। त्वामृते पुरुषव्याघ्र तथा मूर्धानमालभे (भा० उ० १७५।१६)॥ पृष्ठतस्त्वामनुयास्यामि सत्यमात्मानमालभे (भा० आश्रम० ३।५२)। इत्यादिषूपलम्भनेऽर्थ आलभेः प्रयोगो द्रष्टव्यः। उपलम्भनं च वाचा शरीरस्पर्शनमिति शप उपलम्भन इति वार्तिके वृत्तिः। अक्षान्यद् बभ्रूनालभे (अथर्व० ७।११३।७)। अक्षानामृशामीत्यर्थः। त्रीणि तेजांसि नोच्छिष्ट आलभेत कदाचन। अग्निं गां ब्राह्मणं चैव (भा० अनु० १०४।६३)। अत्रोभयत्र स्पर्शनमात्रमर्थः। रक्षांसि वा एनं तर्ह्यालभन्ते यर्हि न जायते (ऐ० ब्रा० ३।५)। एनमग्निमालभन्ते परिगृह्णन्ति। अग्ने व्रतपते व्रतमालप्स्ये (मै० सं० १।६।१)। आस्थास्यामीत्याह। आज्यमालभ्योपस्पृशेदपः सोममालिप्स्यमानस्तथा विपर्यस्य (का० श्रौ० ८।२।७)। आलिप्स्यमानः स्प्रष्टुमिच्छन्। आलिप्समान इति तु पाणिनीयाः। एतद्वै यत्रैतान्प्रजापतिः पशूनालिप्सत त आलिप्स्यमाना उदचिक्रमिषन् (श० ब्रा० ७।५।२।४)। आलिप्सत अजिघांसत्। उतालब्धं स्पृणुहि जातवेदः (ऋ० १०।८७।७)। अनालब्धं जृम्भति गाण्डिवं धनुरनाहता कम्पति मे धनुर्ज्या (भा० उ० ४८।१०२)। अनालब्धमनाकृष्टम्। एवं सामभिरालब्धः श्वफल्कतनयो मणिम् (भा० पु० १०।५७।४०)। गामालभ्यार्कमीक्ष्य वा (मनु० ५।८७)। आलभ्य स्पृष्ट्वा। केशेष्वालभ्य पाणिभ्यां निष्पिपेष महीतले (भा० सौ० ८।१७)। आलभ्य गृहीत्वा, आकृष्य। प्राणि वा यदि वाऽप्राणि यत्किञ्चिच्छ्राद्धिकं भवेत्। तदालभ्यानध्यायः पाण्यास्यो हि द्विजः स्मृतः (मनु० ४।११७)॥ आलभ्य हस्तेन प्रतिगृह्य प्रतीष्येत्यर्थः। नामृतस्य हि पापीयान्भार्यामालभ्य जीवति (भा० उ० १७।१५)। आलभ्य पीडयित्वा। केशानङ्गं वासश्चालभ्याप उपस्पृशेत् (आप० ध० २।३।३)। आलभ्य

स्पृष्ट्वा । रौद्रं तु राक्षसं पित्र्यमासुरं चाभिचारिकम् । उक्त्वा मन्त्रं स्पृशेच्चाप आलभ्यात्मानमेव च (मुकुन्दशर्मकृतायां गो० गृ० (१।३।१२) टीकायामुद्धृतम्) । आत्मालम्भ आत्मस्तुतिः । साप्यप्रायत्यजननी । गुरुणाऽऽलम्भिता भार्या तथा आतुर्यवीयसः (दे० भा० पु० ४।१३।३४) । आलम्भिता परामृष्टा दूषिता । आलम्भयज्ञाः क्षत्राश्च हविर्यज्ञा विशः स्मृताः । परिचारयज्ञाः शूद्रास्तु तपोयज्ञा द्विजातयः (भा० शां० २३२।३१) ।। आलम्भो वधः । स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च (मनु० २।१७९) । आलम्भः परिष्वङ्गः । कृष्टजानामोषधीनां जातानां च स्वयं वने । वृथालम्भेऽनुगच्छेद् गां दिनमेकं पयोव्रतः (मनु० ११।१४४) ।। वृथालम्भे निष्प्रयोजने छेदने । मङ्गलालम्भनीयानि (रा० १।७८।१०) । स्पर्शं मङ्गलानि शिवङ्कराणीत्यर्थः नैवंविधं मया युक्तमालब्धुं क्षत्रयोनिना (भा० वि० ४१।२) । आलब्धुं स्प्रष्टुम् । तिला भक्षयितव्याः सदा त्वालम्भनं च तैः (भा० अनु० ६८।१९) । आलम्भनं सर्वतः स्पर्शनम्, उद्वर्तनमुत्सादनमित्यर्थः ।

—लम्ब् (अबि रबि लबि शब्दे, लबि अवस्रंसने च) । पतितां किं नाम नालम्बसे (सा० द०) । आलम्बसे धारयसि, अवष्टभ्नासि । तस्य कविता मच्चित्तमालम्बते (धूर्त्तसमागमे) । आलम्बते हरति, आवर्जयति । तनू रोमाञ्चमालम्बते । रोमोद्गमं श्रयतीत्यर्थः । अथालम्ब्य धनू रामः (भट्टि० ६।३५) । आलम्ब्य गृहीत्वा । शोभन्ते किञ्चिदालम्बाः शालयः कनकप्रभाः (रा० ३।१६।१७) । किञ्चिदालम्बाः किञ्चिन्नताः । रामे सलक्ष्मणे याते सीतां शून्ये यथासुखम् । निरालम्बां हरिष्यामि राहुश्चन्द्रप्रभामिव (रा० ३।४०।२८) ।। निरालम्बां निराश्रयाम् ।

—ला (ला आदाने) । आलानं गजबन्धनी । आलायत आदीयत गृह्यते ऽत्रेति व्युत्पत्तेः । आलाने गृह्यते हस्ती (मृच्छ० १।५०) । अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः (रघु० १।७१) ।

—लिख् (लिख अक्षरविन्यासे) । मनो निष्ठाशून्यं भ्रमति च किमप्यालिखति च (मालती० १।३१) । आलिखति रेखा उत्किरति । त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायाम् (मेघ० २।३८) । आलिख्य चित्रेऽर्पयित्वा । आलिखन्त इवाकाशम् (भा० वि० ३८।३) । आलिखन्तो घर्षन्तः । शृङ्गाभ्यामालिखन्दर्पाद् द्वारं द्विरदो यथा (रा० ४।६।६२) । आलिखन् उत्खनन् अपस्किरमाणः । अपाच्चतुष्पाच्छकुनिष्वालेखने (पा० ६।१।१४२) । आलेखनमुल्लेखनम् उत्करणम् ।

—लिप् (लिप् उपदेहे)। आलिप्यते चन्दनमङ्गनाभिः (ऋतु० ६।१२)। आलिप्यते समन्ताच्चचर्च्यते। आलिम्पन्नमृतमयैरिव प्रलेपैः (उत्तर० ३।३६)। उक्तोऽर्थः।

—लिश् (लिश अल्पीभावे)। ततो न मनुष्या आशुर्न पशवः। आलिलिशिरे ता हेमाः प्रजा अनाशकेन (श० ब्रा० २।४।३।२)। आलिलिशिरेऽकृश्यन् कृशतामापन्। लिशिरिव कृशिरप्यकर्मकः। तनूकरणमर्थस्तु भ्रमकः।

—लिह् (लिह आस्वादने)। न हि सिंहः परालीढमामिषं भोक्तुमिच्छति (रा० गो० सं० २।६२।२५)। आलीढमास्वादितम्। सैनान्यमालीढमिवासुरास्त्रैः (रघु० २।३७)। आलीढं क्षतम्। नालीढया परिहृतं भक्षयीत कदाचन (भा० अनु० १०४।६०)। आलीढा रजस्वला, उदक्या, पुष्पवती, मलिनी।

—ली (लीङ् श्लेषणे)। निर्भिद्योपरि कर्णिकारकुसुमान्यालीयते षट्पदः (विक्रम० २।२३)। आलीयतेऽन्तः शयते। आलीनचन्दनौ। स्तनाविव दिशस्तस्याः शैलौ मलयदर्दुरौ (रघु० ४।५१)। आलीनचन्दनौ व्याप्तचन्दनद्रुमौ। साहं कदम्बमालीना मेघकाले (हरि० ५४२४)। कदम्बे नीपे श्लिष्टेत्याह। विडालोलूकचरितामालीननरवारणाम् (रा० २।११४।४)। आलीनानि श्लिष्टानि विलग्नानि नराणां वारणानि कवाटानि यस्यां तां तथाभूताम्। (कोकिला) स्थिता चूते मृतेवालीय (कथा० १११।२२)। आलीय आसङ्गं प्राप्य। जटाभिरालापयते। लियः संमाननशालीनीकरणयोश्च (१।३।७०) इति सूत्रे वृत्तावुदाहरणम्। पूजां समधिगच्छतीत्यर्थः।

—लुप् (लुप्लृ छेदने)। अस्त्रैस्तावन्मुहुरुपचितैर्दंष्ट्रिरालुप्यते मे (मेघ० १०३)। आलुप्यतेऽवलुप्यते। वालानभिपेदुस्तानालुलुपुः (श० ब्रा० ३।४।१।१७)। आङ् ईषदर्थे। अवचकृतुरित्यर्थः।

—लुभ् (लुभ विमोहने, व्यामोहनं व्याकुलीभावः)। प्राण आलुभ्येत् (श० ब्रा० १।३।२।७)। व्याकुली भवेदित्यर्थः। यो व एतदतिक्रामाद् य आलुलोभयिषादिति (ऐ० भा० ४।७)। आलोभो भ्रम इति षड्गुरुशिष्यः। भ्रमयितुमिच्छेदित्यर्थः।

—लू (लूञ् छेदने)। अमरवधूहस्तसदयालूनपल्लवा नन्दनद्रुमाः (कु० २।४१)। सदयमालूना अवखण्डिताः पल्लवा येषां ते।

—लोक् (लोकृ दर्शने)। त्वन्मार्गमालोकते (सा० द०)। तव मार्गं त्वयानुसृतं पन्थानमालोकते उदीक्षते इत्यर्थः। आलोकितः कुरवकः कुरुते विकासम्। आलोकितो निध्यातः। निर्वर्णितः। कुरवकस्यायं दोहद इति कविसम्प्रदायः।

—लोच् (लोचृ दर्शने)। आलोच्य गिरिमुख्यं (रैवतं) मागधं तीर्णमेव च। माधवाः कुरुशार्दूल परां मुदमवाप्नुवन् (भा० सभा० १४।५२)। परस्परमालोच्य प्रत्यूचुस्ते न किञ्चन (रा० ३।१।८)। उभयत्राङ् विशेषकृन्न।

—लोड् (लोडृ उन्मादे)। वनेचरस्य किमिदं कामेनालोड्यते मनः (भा० आदि० २१९।१६)। आलोड्यते मथ्यते। उन्मथ्यते। चाल्यते। आक्षिप्यते। मन्थं वा प्रसव्यमालोड्य (आश्व० गृ० ३।१०।११)। आलोड्य घट्टयित्वा। पिष्टमालोड्य तोयेन (का० श्रौ० भा०)। ब्रा०)। विषमालोड्य पास्यामि (भा० वि० २१।४८)। उक्तोऽर्थः।

—वद् (वद व्यक्तायां वाचि)। सजातानुग्रेहा वद ब्रह्म चापि चिकीहि नः (अथर्व० १।१०।४)। आवद आ समन्तात् कथय। वर्षमावद तादुरि (अथर्व० ४।१५।१४)। आवद आभाषय। यादृशेन त्वद्घोषेण वृष्टिर्जायते तादृशं शब्दं कुर्वित्यर्थः। तवाहं शूर रातिभिः प्रत्यायं सिन्धुमावदन् (ऋ० १।११।६)। आवदन् आभाषमाणः। सर्वतो नः शकुने भद्रमावद (ऋ० २।४३।२)। यथेमां वाचं कल्याणीमावदानि जनेभ्यः (वा० सं० २६।२)। आवदानि आभिमुख्येन ब्रवीमि।

—वप् (डुवप बीजसन्ताने)। स हेक्षाञ्चक्रे। कथं न्वहमिमानि सर्वाणि भूतानि पुनरात्मन्नावपेय (श० ब्रा० १०।४।२।३)। आत्मन्नावपेय=आत्मन्यन्तर्निवेशयेय। अथ हविरावपति (श० ब्रा० १।१।४।७)। आवपति प्रक्षिपति। पांसुभिरावपेत् (व० बृ० सं० ५४।१२०)। आकिरेदित्यर्थः। त्वं कल्याण वसु विश्वमोपिषे (ऋ० १।३१।९)। ओपिषे विकिरसि संकिरसि। अग्नौ तुषानावप जातवेदसि (अथर्व० ११।१।२९)। प्रक्षिपेत्यर्थः। श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद् भुवि (मनु० ३।१०५)। उक्तोऽर्थः। तस्मिन्नन्या देवता ओप्यन्ते (नि० १२।५)। ओप्यन्तेऽन्तर्निवेश्यन्ते समावेश्यन्ते। किंस्विदावपतां श्रेष्ठम् (भा० वन० ३१३।५५)। आवपतां जुह्वताम्। आवापो हविःप्रक्षेपः। अभोज्यं बुभुक्षमाणः पृथिवीमावपेत् (गौ० ध० ३।६।३)। आवपेत् प्रक्षिपेत्। केशानावपन्ती (भा० आदि० ३।१५७)। आवपन्ती प्रसाधयन्ती। लाजानावपन्तिका (पा० गृ० १।६।२)। विकिरन्तीत्यर्थः। किन्तु पारावतीमेनां चञ्च्वा चञ्चुषु तण्डुलान्। आवपन्तीं स्वशावानामीक्षे पुत्रवतीमिति (बृ० श्लो० सं० ४।६०)॥ आवपन्तीं निक्षिपन्तीम्। स्यादालवालमावालमावाप इत्यमरे पर्यायाः। आवापः संमिश्रणं भवत्युपयोगार्हतां नीयमाने द्रव्ये द्रव्यान्तरसंसर्गो वा। शाल्यावापे कृषीवलाः (नारद स्मृतिः)। आवापो बीजसन्तानः। तान् गृहीतशरावापान् (भा० आदि० १८९।१३)। ततः शरा-

वापमपास्य सूतजः (भा० कर्ण० ९०।६६)। शरावापः शरासनं धनुः। आवापोद्वापी। अभ्युच्चापोद्धारौ। तन्त्रावापविदा (शिशु० २।८८)। आवापो विरोधभावना, अवस्कन्दसंकल्पः। कुशलं हि मे बह्वन्यदस्ति यत्रायमावापं गतः स्वर्गेऽप्यपकर्षमल्पं करिष्यतीति (यो० सू० भा० २।१३)। प्राक् स्विष्टकृत आवापः (गो० गृ० १।८।१६)। आवापः=प्रधानहोमः। प्रभुरग्निः प्रतपने भूमिरावपने प्रभुः (भा० आदि० ८८।१३)। आवपनं सङ्ग्रहः। भूमिरावपनं महत् (वा० सं० २३।१०)। आवपनं वपनस्थानम्। त्वमस्यावपनी जनानामदितिः (अथर्व० १२।१।६१)। आवपनी भाजनं पात्रम्। आवपनं च भूमेः (गौ० ध० १।१।३१)। आवपनमन्यत आनीय पूरणम्। आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् इत्यमरः।

—वस् (वस् निवासे)। मामावसन्ति सुकृतः (अथर्व० ७।८४।२)। मयि निवसन्तीत्यर्थः। अपामुपस्थे विभृतो यदावसत् (ऋ० १।१४४।२)। उक्तोऽर्थः। स्वाध्यायाद्योगमासीत योगात् स्वाध्यायमावसेत् (वि० पु० ६।६।२)। आवसेत् आश्रयेत्। इह क्वावास्यते पान्थैः (कथा० १२४।१३३)। सुहोत्राद्धस्ती य इदं हस्तिनापुरमावासयामास (वि०पु०४।१९।२८)। आवासयामास निवेशयामास। (राजानः) आवासिता नातिदूरे पट्कुरस्य (कथा० )। उक्तोऽर्थः। कथंविधं पुरं राजा स्वयमावस्तुमर्हति (भा० शां० ८६।१)। आवस्तुमधिवस्तुम्। आसनावसथौ शय्या (मनु० ३।१०७) आवसथो विश्रमस्थानमिति कुल्लूकः। आवसथो विश्रामभूमिरिति मेधातिथिः। तस्य पुरस्तादावसथः (आप० ध० २।२५।४)। एत्यवासन्त्यस्मिन्नित्यावसथ आस्थानमण्डपः। स किलाश्रममन्त्यमाश्रितो निवसन्नावसथे पुराद्बहिः (रघु० ८।१४)। उक्तचर एवार्थः। माद्रीसुताभ्यां सहितः किरीटी सुष्वाप तामावसतिं प्रतीतः (भा० वन० १६५।१४)। उक्तचर एवार्थः। आवसतिं रात्रिम्। वासतेय्यपि रात्रिरुच्यते। रोगी चिरप्रवासी परान्नभोजी परावसथशायी। यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः (हितोप०)॥ आवसथो गृहम्। उद्यानेषु विहारेषु प्रपास्वावसथेषु च (भा० शां० १४०।१४९)। आवसथ आश्रमः। स ह सर्वत आवसथान्मापयाञ्चक्रे (छां० उ० ४।१।१)। आवसथाः शरणानि। स··· ग्रासाच्छादनावसथान् प्रतिविदध्यात् (कौ० अ० १।११)। उक्तपूर्व एवार्थः।

—वह् (वह प्रापणे)। जायां यामस्मा आवाक्षुः (अथर्व० ६।७८।१)। भार्यात्वेन समीपमानैषुरित्यर्थः। यस्मै भूतानि बलिमावहन्ति (तै० आ० १।३१।२)। आवहन्ति हरन्ति उपहरन्ति। आ वां वहन्तु रथाः (ऋ० ४।१४।४)। इत आनयन्त्वित्याह। आ त्वा···ब्रह्मयुजो हरयः···वहन्तु सोमपीतये (ऋ०

८।१।२४)। उक्तोऽर्थः। तेन कूलापहारेण मैत्रावरुणिरौह्यत (भा० शल्य० २।२९)। औह्यत=आ औह्यत=आप्लावितः। बलवत्प्रतिविद्धस्य नस्तः शोणितमावहत् (भा० वि० ६८।४७)। आवहत् प्रावहत्, प्रास्रवत् अक्षरत्, अस्यन्दत। इदं हविर्यातुधानान्नदीफेनमिवावहत् (अथर्व० १।८।१)। आवहतु वहतु, अपनयतु। असिक्नीमावहत् पत्नीम् (वीरणस्य प्रजापतेः कन्याम्) (हरि० १।३।६)। पत्नीमावहत् भार्यां पर्यगृह्णात्। अथास्मै पञ्चविंशतिवर्षाय षोडशवर्षां पत्नीमावहेत् (सुश्रुत० १०।)। पञ्चविंशतिवर्षं पुमांसं षोऽशवर्षां पत्नीं लम्भयेदित्यर्थः। गृहीतवेतनः कर्म त्यजन् द्विगुणमावहेत् (याज्ञ० २।१९३)। स्वामिने द्विगुणां भृतिं दद्यादित्याह। आम्नानवैषम्यमपि नावश्यमर्थवैषम्यमावहति (ब्र० सू० शां० भा० ३।३।१७)। आवहति जनयति, करोति। हिंसा हि पुरुषस्य दोषमावक्ष्यति (सां० तत्त्व० १)। आवक्ष्यति जनयिष्यति। तद्धरति वहत्यावहति भाराद् वंशादिभ्यः (पा० ५।१।५०)। आवहति उत्पादयति। अभ्यासो हि कर्मणां कौशलमावहति (गणहरत्न० १।४)। उक्तोऽर्थः। सूक्ष्मेभ्योपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः। द्वयोर्हि कुलयोः शोकमावन्हेयुररक्षिताः (मनु० ९।५)। धर्मो ह्युपचितः सम्यगावहत्यर्थमुत्तमम् (अवदा० जा० २२।३३)। गीतनृत्यहसितैरुन्मत्ततामावहन्त्युपेक्षिता विकारा इव वातिकाः (हर्ष० ४)। रामबाणासनक्षिप्तमावहत् परमां गतिम् (रा० ४।१७।८)। बाणासनं धनुः। क्षिप्तमस्त्रमिषुः। आवहत् प्रापयत्। अग्ने सुखतमे रथे देवाँ ईलित आवह (ऋ० १।१३।४)। आवह आनय। यस्य हि स्रोतांसि यच्च वहन्ति यच्चावहन्ति यत्र च•••तानि सर्वं तदन्यत्तेभ्यः (चरक० वि० ५।४)। आवहन्ति पुष्णन्ति। अमूमावहामूमावह ! अमूममूं देवतामामन्त्रयस्वेत्यर्थः। याँ आवह उशतो देव देवान् (वा० सं० ८।१९)। आवह आहूतवानसि। पुत्र मज्जनमावह (भा० पु० १०।११।१८)। मज्जनं स्नानं निर्वह निर्वर्तय आचरेत्यर्थः। अन्यत्र सुदुर्लभोऽत्रार्थ आङ्पूर्वस्य वहतेः प्रयोगः। सुमन्त्रावाहय क्षिप्रमृत्विजो ब्रह्मवादिनः (रा० १।१२।५)। आवाहय मत्समीपं प्रापय। वशे स्थास्यन्ति ते देवा यांस्त्वमावाहयिष्यसि (भा० आश्रम० ३०।६)। आवाहयिष्यसि आह्वास्यसि, उपह्वास्यसे। पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन् (मनु० ३।८२)। आवहन् जनयन्। राघवः परमोदारो मुनीनां प्रीतिमावहन् (रा० १।३०।२३)। उक्तोऽर्थः। पुष्पं फलं चार्तवमावहन्त्यो बीजं च बालेयमकृष्टरोहि। विनोदयिष्यन्ति नवाभिषङ्गामुदारवाचो मुनिकन्यकास्त्वाम् (रघु० १४।७७)॥ आवहन्त्यो वहन्त्यः। वयस्थां च महाप्राज्ञः कन्यामावोढुमर्हति (भा० अनु० १०४।१२४)।

आवोढुं वोढुमुद्वोढुं परिणेतुम् । आवाहाश्च विवाहाश्च सह सूतैर्मया कृताः (भा उ० १४१।१४) । आवाहः कुलधर्म इति नीलकण्ठः । अथास्य कर्म । वहनं हविषामावाहनं च देवतानाम् (नि० ७।८) । आवाहनं निमन्त्रणम् ।

—वा (वा गतिगन्धनयोः) आ वात वाहि भेषजं वि वात वाहि यद्रपः (ऋ० १०।१३७।३) । आवाहि आगमय । द्वाविमौ वातौ वात आ सिन्धोरा परावतः (ऋ० १०।१३८।१) । दक्षं ते अन्य आ वातु (ऋ० १०।१३७।२) । आवातु आदायाऽऽगच्छतु आगमयतु, इतः प्रेरयतु । सर्वा दिश आवाति वातः । सर्वासु दिक्षु वातीत्यर्थः । देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणामिति दिशां कर्मत्वम् । बद्धां बद्धां भित्ति शङ्कामपुष्मिन्नावानावान्मातरिश्वा निहन्ति (कि० ५।३६) । आवान् समन्तात्प्रवहन् ।

—वास् (वास उपसेवायाम्) । आवासयन्तो गन्धेन जग्मुरन्यद्वनं ततः (रा० २।१०३।४१) । आवासयन्तः सुरभीकुर्वन्तः ।

—विज् (ओविजी भयचलनयोः) । स रामलक्ष्मणौ…शरैः…भृशमावेजयामास (रा० ६।२०।८) । आवेजयामास संरम्भं गमयामास, क्षोभयामास । आविग्ने हृदि सन्तापं जनयत्यशिवं मम (भा० आदि० २३३।१६) । आविग्नं चलितं क्षुभितम् ।

—विद् (विद ज्ञाने) । कश्छन्दसां योगमा वेद धीरः(ऋ० १०।११४।९) । आवेद अञ्जसा वेत्ति । श्रद्धां भगस्य मूर्धनि वचसाऽऽवेदयामसि (नि० ९।३१।१) । वचनेनावेदयाम आघोषयाम इत्याह । स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः । यदावेदयति राज्ञे व्यवहारपदं हि तत् (याज्ञ० २।५) ॥ आवेदयति विज्ञापयति । यावदावेद्यते राज्ञे हतः कर्णोऽर्जुनेन वै (भा० कर्ण० ९६।११) । राज्ञ आवेद्यते प्रवृत्तिर्दीयते, वृत्तान्तः शस्यते । आवेदयन्ति प्रत्यासन्नमानन्दं निमित्तानि (काद० ६५) । पुरः स्फोरयन्तीति यावत्

—विश् (विश प्रवेशने) । तामाविशत तां प्रविशत (अथर्व० १६।१६।१) । आविशत अभिमुखं प्रविशत प्रवेशोन्मुखा भवतेत्यर्थः । गौरीगुरोर्गह्वरमाविवेश (रघु० २।२६)। आविवेश प्रविवेश । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् (मनु० ३।२) । आविशेत् प्रविशेत्, श्रयेत्, सङ्क्रामेत् । आ त्वा स्वो विशतां वर्णः (अथर्व० १।२३।२) । आ नो द्रप्सा मधुमन्तो विशन्तु (ऋ० १०।९८।४) । उक्तोऽर्थः । अभिभूय च रक्षांसि ब्रह्मघोषो विनादयन् । आविवेश दिशः सर्वाः…(रा० ६।११।२३) ॥ आविवेश व्यानशे व्याप । तदाविशन्ति भूतानि महान्ति (मनु० १।१८) । तद् ब्रह्म पञ्चतन्मात्रात्मना स्थितमाविश्योत्पद्यन्त इत्यर्थः । ध्रुवं प्रशान्ताः सुखमाविशेयुः (भा० उ० २।३) ।

**सुखमाविशेयुः सुखमाप्नुयुः** । वृत्रे विवर्धमाने च कश्मलं महदाविशत् (पुरन्दरः) (भा० वन० १०१।८) । **आविशत्प्राविशत्** । हृतस्वं कामिनं चौरमाविशन्ति प्रजागराः (भा० उ० ३३।१३) । **उक्ततोऽर्थः** । रामः कवचमाविशत् (रा० ३। २४।१६) । **आविशत् धृतवान्** । नासंविभज्य भोक्तास्मि नाविशामि परस्त्रियम् (भा० शां० ७७।२१)। **आविशामि संविशामि, संभवामि, मिथुनी भवामि** । न हृष्यन्ति न कुप्यन्ति नाविशन्त्याहरन्ति च (यो० वा० ६ (२) ६८।२) । **नाविशन्ति कामाद्यावेशं न गच्छन्ति, कामादिभिर्नाभिभूयन्ते इत्यर्थः** । देहावरणं विभिद्य ते (बाणाः) सात्यकेराविविशुः शरीरम् (भा० द्रोण० ११८।११)। **शरीरमाविविशुः शरीरेऽन्तः प्रविविशुः** । आविशन्ति च यं यक्षाः (भा० वन० २३०।५३) । **आविशन्ति अभिभवन्ति** । स मा धीरः पाकमत्राविवेश (ऋ० १।१६४।२१)। **मामाविवेश मामुपसर्पति** । आविष्टासि गृहे शून्ये सा त्वं परवशं गता (रा० २।१०।१८) । **आविष्टा ग्रहगृहीता** । आविष्टा इव युध्यन्ते पाण्डवाः कुरुभिः सह (भा० भीष्म० ४६।३) । **उक्ततोऽर्थः** । आविष्टा इव नरेन्द्रवन्दपरिवृताः (हर्ष० ४) । हृच्छयाविष्टचेतसा (भा० वन० २१०६)। हृच्छयः कामस्तेनाविष्टा व्याप्ता चेतना यस्याः सा । तं तथा कृपयाऽऽविष्टम् (गीता २।३) । आविष्टलिङ्गा जातिः । **आविष्टं लिङ्गं यया । नियतलिङ्गकेत्यर्थः** । संज्ञप्तमश्वमाविश्य तया मिश्री बभूव सः (हरि० ११२३७) अथान्तर्गृहमाविश्य राजा दशरथस्तदा (रा० २।४।३) । **आविश्य प्रविश्य** । जरावानभवद्राजा भारमावेश्य बन्धुषु (हरि० १।३०।२१) । **आवेश्य निधाय** । कन्दर्पः•••आवेष्टुमभ्ययात्तूर्णं कृतोद्वाहमुमापतिम् (रा० १।२५।१०) । **आवेष्टुमभिभवितुम्** । युद्धाय च मतिं चक्रुरावेशं च परं ययुः (भा० शल्य० ६।२३) । **आवेशः संरम्भः** । चिच्छायावेशतो बुद्धौ भानम् (बालबो० ६) । **आवेशः प्रवेशः** । कारुकावेशनानि (मनु० ९।२६५) । **आवेशनं शिल्पिशालेति वैजयन्ती । स्युरावेशिक आगन्तुरतिथिर्ना गृहागते इत्यमरः** ।

**—वी (वी गतिप्राप्तिप्रजनकान्त्यसनखादनेषु)** । तमेव मन्ये नृपतिं जनानां यः प्रथमो दक्षिणानामाविवाय (ऋ० १०।१०७।५)।

**—वृ (वृञ् वरणे वृङ् संभक्तौ)** । तपश्चरत्सु पृथिवीं प्रचेतस्सु महीरुहाः। अरक्ष्यमाणामावव्रुर्बभूवाथ प्रजाक्षयः (हरि० १।२।३५) ॥ **आवव्रुः-आवृतवन्तः परिचिक्षिपुः** । व्याजेनागतमावृणोति हसितम् (बालरा० १५) । **आवृणोति प्रच्छादयति गोपायति** । आवव्रे मुसली तरुम् (भट्टि० १४।१०९) ॥ **मुसली प्रहस्तस्तरुमावव्रे मुसलेनापरुरोध** । इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु । इन्द्र तानि त आवृणे (अथर्व० २०।२०।२) । **इह वृणातिः केवले**

वरणे संभक्तो वर्तते न तु रोधने । निर्धनेन ममैकेन कामुकेनावृतं गृहम् (कथा० १२।६६) । आवृतं स्वीकृतमधिष्ठितम् । किमर्थमावृता लोका ममैते (भा० आदि० २२६।६) । आवृताः पिहिताः । अनावृताः किल पुरा स्त्रिय आसन् (भा० १२२।१४) । अनावृता अनवरुद्धाः । अनावृता हि सर्वेषां वर्णानामङ्गना भुवि इति पाठान्तरम् । सत्येनावृता श्रिया प्रावृता यशसा परीवृता (अथर्व० १२।५।२) । पथि क्षेत्रेऽनावृते पालक्षेत्रि-कयोः (गौ० ध० २।३।१८) । अनावृते क्षेत्रेऽकृतावृतिनि । पटान्तेन मुखमावृत्य (शा० ५ ) । आवृत्य पिधाय । तं बाणमयं वर्षं शरीरावार्य सर्वतः (भा० आदि० १०२।८) । आवार्य परिहृत्य । युधिष्ठिरस्तमावार्य बाहुना बाहुशालिनम् (भा० सभा० ७२।१६) । आवार्य अपरुध्य पराणुद्य । अथावरणमुखानि नानाप्रहरणानि च (भा० आदि० १६।१) । आवरणं कवचः ।

—वृजी (वृजी वर्जने) । अथ तौ वध्यमानौ तु द्रोणेन रथसत्तमौ । आवर्जयेतां दुर्धर्षं युगान्ताग्निमिवोत्थितम् (भा० द्रोण० ९२।१५) ॥ आवर्ज-येतां पर्यहरेताम् । कुविदादस्य रायो गवां केतं परमावर्जते नः (ऋ० १।३३।१)। आ स्त्रीणां सुकृतं वृङ्क्ते (श० ब्रा० १४।६।४।३) । आवृङ्क्ते हरति स्वाधीनं करोति । सर्वत्रावर्जयामास नगरीवासिनां मनः (कथा० २४।१०४) । आवर्ज-यामास जहार । आ मा वृक्त मर्त्यो दभ्रचेताः (ऋ० ७।९०।१६) । आदित्यो-पि वृक उच्यते । यदावृङ्क्ते (नि० २।५।२१) । कलशमावर्जयति (शा० १) । कलशमवाङ्मुखमवाचीनं करोति रेचयितुमिच्छन् । मन्त्रैरावर्ज्यमानं हविरमर-पतेरस्तु कल्याणवृष्ट्यै (आश्चर्य० ७।३६) । आवर्ज्यमानं प्रक्षिप्यमाणम् । गौरवेणावर्जितः (पञ्चत० ४) । आवर्जिता किञ्चिदिव स्तनाभ्याम् (कु०) । आनतेत्यर्थः । हविरावर्जितं होतस्त्वया विधिवदग्निषु (रघु० १।६२) । आवर्जितं प्रक्षिप्तम् । तनयावर्जितपिण्डकाङ्क्षिणः (रघु० ८।२६) । आव-र्जिताः पूर्ता न्युप्ताः (पिण्डाः) । अपि त्वदावर्जितवारिसंभवम् (कु० ५।३४) । आवर्जितं मुक्तं क्षारितं सिक्तम् । आवर्जितं यया चञ्च्वा हृदयात्तव शोणि-तम् (नागा० ५) । आवर्जितं मुक्तमुद्धृतम् । निष्कास्य पीतमिति यावत् । आवर्जितानि च मया सकलसामाजिकमनांसीति मे निश्चयः (नागा० १) । आवर्जितानि आकृष्टानि हृतानि । आवर्जितमुखस्कन्धं प्रेरयंस्तालमूर्धनि (हरि० २।१३।१९) । आवर्जितं भ्रमितम् । तस्यावर्जितनागस्य म्लेच्छ-स्याधः पतिष्यतः (भा० द्रोण० २६।१७) । आवर्जितः पतनप्रवणो नागो यस्य तस्य । शिरोभिरावर्जितचारुमौलिभिः (अवदा० हस्तिजा० २७) ।

लम्बमानकिरीटैरित्यर्थः। स्नेहपूर्वं प्रयुक्तेन स्वेदेनावर्जितेऽनिले (चरक० सूत्र० १४।४)। आवर्जितेऽपनीते। कुमारस्य शिरसि कलशमावर्ज्य (विक्रम० )। आवर्ज्य अवाङ्मुखं कृत्वा। आवर्ज्य शाखाः सदयं च यासाम् (रघु० १६।१६)। आवर्ज्य नमयित्वा। कथं चिद् दानमानाभ्यां तानावर्ज्यापि शस्त्रिणः (राज० ८।८१५)। आवर्ज्य वशे कृत्वा सङ्गृह्य।

—वृत् (वृतु वर्तने)। को अध्वरे मरुत आववर्त (ऋ० १।१६५।२)। आववर्त आवर्तयामास इतोऽभिवर्तयामास इतोऽभिमुखांश्चकार। इमं मानवावर्तं नावर्तन्ते (छां० उ० ४।१५।६)। नावर्तन्ते न पुनरागच्छन्ति। यावदावर्तते चक्रं तावती मे वसुन्धरा (रा० २।१०।३६)। यावत्सूर्यमण्डलं परिभ्रमतीत्यर्थः। एवं वृत्तिसंस्कारचक्रमनिशमावर्तते (यो० सू० १।५ भा०)। आवर्तते भ्रमति। लब्धास्वादाः प्रविवेकेन कामेष्वावर्तन्ते (अवदा० जा० १८)। आवर्तन्ते पर्यटन्ति। नावर्तते व्रतं स्वप्ने शुक्रमोक्षे कथं चन (भा० शां० ३४।२६)। व्रतं नावर्तते व्रतस्यावृत्तिर्न भवति, पुनरुपनयनं न कर्तव्यं भवतीत्यर्थः। आवर्तयेन्मुहुर्मन्त्रं धारयेच्च प्रयत्नतः (का० नी० सा० १२। ४४)। आवर्तयेत् अभ्यस्येत्। अथाप उपस्पृश्य त्रिः प्रदक्षिणमुदकमावर्तयति (बौ० ध० २।५।८।६)। आवर्तयति परिभ्रमयति। तेजसा निर्दहेल्लोकान्कम्पयेद् धरणीं पदा। संक्षिपेच्च महामेरुं तूर्णमावर्तयेद् दिशः (भा० आदि० ७१।३६)॥ आवर्तयेत् एकी कुर्यात्। अविसंवादनं दानं समयस्याव्यतिक्रमः। आवर्तयन्ति भूतानि सम्यक् प्रणिहिता च वाक् (भा० उ० ३८।३६)॥ आवर्तयन्ति परिवर्तयन्ति परिणमयन्ति। शत्रूनपि स्वीयान्कुर्वन्तीत्यर्थः। विद्यामावर्तनीं पुण्यामावर्तयति स द्विजः (रा० ७।८८।२०)। आवर्तयति अभ्यस्यति, आमनति। मनांसि तस्य योधानां ध्रुवमावर्तयिष्यति (भा० उ० ६।६)। आवर्तयिष्यति आवर्जयिष्यति। सामदानविभेदैश्च प्रतिलोमानुलोमतः। आवर्तयत वैदेहीं बहुदण्डोद्यमैरपि (रा० ५।२४।३४)॥ आवर्तयत अनुनेतुमयतत। तं प्रत्यञ्चमावर्तयन्ति (ऐ० ब्रा० १।१४)। तं शकटं प्रतीचीं प्रति निवर्तयन्तीत्याह। अक्षमालिकामावर्तयति (कथा० २४।१०२)। योऽसावक्षमालामावर्तयन्नास्ते स तापसो वा तापसव्यञ्जनो वा (इति वयम्)। पाणिसर्ग्या हि रज्जवो द्रढीयस्यो भवन्तीत्यात्मनः कृते रज्जुमावर्तयामि। अम्बा मे पय आवर्तयति। सन्तापेन घनी करोतीत्यर्थः। (इमे अपि नः स्वे वाक्ये)। जिह्वामावर्तयामास तस्यापि हुतभुक्तथा (भा० अनु० ८५)। आवर्तयामास निवर्तयामास जहारेत्यर्थः। द्रव्यैर्युक्तं सम्प्रहारोपपन्नैर्वाहैर्युक्त तूर्णमावर्तयस्व (भा० द्रोण० २।२७)। आवर्तयस्व आनय। आवर्तयन्ति तेऽश्रूणि नयनैः शोक-

पीडितैः (रा० २।४७।१६)। **आवर्तयन्त अमुञ्चन्।** अश्रूण्यावर्तयन्ती च नेत्राभ्यां करुणायती (भा० वन० ६।१४)। **आवर्तयन्ती मुञ्चन्ती, विसृजन्ती।** आ कृष्णेन रजसा वर्तमानः (ऋ० १।३।५।२) **आवर्तमानः परिभ्रमन्।** शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति (मनु० ४।१७२)। **आवर्तमानः फलाभिमुखी भवन्** (अधर्मः)। प्रयुद्धानां प्रभग्नानां पुनरावर्तिनामपि (भा० भीष्म० ४४। २६)। शिरसा किंचिदावृत्तमौलिना (हरि० ५७६३)। **आवृत्तोऽवस्रस्तः।** स कृत्स्न एव सन्दर्भोऽस्माभिरावृत्तः (उत्तर० ६)। **आवृत्तोऽभ्यस्तोऽसकृत्पठितः।** त्रिरावृत्ता दश त्रिंशत् सम्पद्यन्ते। **त्रिभिर्गुणिताः, त्रिभिरभ्यस्ता इत्यर्थः।** आवृत्तानां गुरुकुलाद् विप्राणां पूजको भवेत् (मनु० ७।८२)। **आवृत्तानां समावृत्तानाम्। वेदसमाप्तौ व्रतसमाप्तौ वा स्नात्वा गुरुमनुमान्य गृहानागतानाम्।** नानिर्विधित्सो नावृत्तो नापवृत्तोऽस्ति कश्चन (भा० शां० २६६।४६)। **आवृत्तः सङ्गनिर्मुक्तः।** प्रणिधानाद्भक्तिविशेषादावर्तित ईश्वरस्तमनुगृह्णात्यभिध्यानमात्रेण (यो० सू० १।२३ भा०)। **आवर्तितोऽभिमुखीकृतः।** एतैरेव तथा स्पष्टं ताम्रसौवर्णराजतम्। शुध्यत्यावर्तितम् (शङ्ख० १६।२-३)। **आवर्तितं तप्त्वा द्रवीकृतम्।** सुध्मातसुतीक्ष्णावर्तितेऽयसि (वाग्भट० २६।२)। **आवर्तिते आभुग्नीकृते।** तस्मादावर्तितश्चैव क्रतुरिन्द्रेण ते विभो (हरि० ३।५।२६)। **आवर्तितो निवर्तितो विघ्नितः।** सार्धमावर्त्य हेम्ना रजतम् (विद्ध०)। **अग्नौ शुद्धान्दशभिरावर्तैः** सिन्धुजान्वातरंहसः (भा० वन० ७१।१४)। **आवर्तैः शुद्धान् ह्लदावर्तादिदुष्टावर्तहीनान्।** रेखासन्धिषु पक्ष्मसु यानि ते स्वावर्तेषु च यानि ते (मन्त्रब्रा० १।३।१)। **आवर्ताः ककुदावर्ताद्यभिधा लोमसन्निवेश-विशेषाः।** आवर्तोऽम्भसां भ्रमः (अमरः)। आवर्तबुद्बुदतरङ्गमयान् विकारान् (उत्तर० ३।४७)। जगदप्येवमनिशं वार्यावर्तविवर्तवत् (यो० वा० (२) १४४।३)। खेऽनिशं चक्रमृक्षाणां गुणावर्तो विवर्तते (यो० वा० ६(२) ६६।११)। **गुणावर्तो वारियन्त्रपेषणी।** उत्पत्योत्पत्य लीयन्ते ते स्वावर्तविवर्तया (यो० वा० ६ (२) ६६।१६)। तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः (मनु० १।२२)। **आर्या अत्रावर्तन्ते पुनः पुनरुद्भवन्तीत्यार्यावर्तं इति कुल्लूकः।** स मया सागरावर्ते दृष्ट आसीत्परीप्सता (भा० वन० १४।१६)। **सागरद्वीप इत्यर्थः।** भ्रमति सलिलं वृक्षावर्ते (प्रतिमा० ५।२)। **आवर्त आलवालम्।** शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्ता प्रकीर्तिता (सुश्रुत० १।३४३।११)। **आवर्तः=वलिः। त्र्यावर्ता त्रिवलिः।** आम्रावर्तः=घनभावमापन्न आम्ररसः। ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवो (अमरः)। **आवर्तश्चक्रवर्तिचिह्नम्।** हृद्वक्त्रावर्ती श्रीवत्सकी हयः तेषां पुरुषरूपक मिव कृत्वा तस्मिंस्तामावृतं कुर्युः (ऐ० ब्रा० ७।२)। **अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः** (मनु० २।६६)।

**आवृत्** जातकर्मादिक्रियाकलापः । अनयैवावृता कार्यं पिण्डनिर्वपणं सुतैः (मनु० ३।२४८) । **आवृता परिपाट्याऽनुक्रमेण** । आवृते सोमपीतये (ऋ० ३।४२।३) । **आवृते इतोऽभिमुखीकरणाय** । नास्याः (धुरः) वश्मि विमुचं नावृतं पुनः (ऋ० ५।४६।१) । **आवृत् आवर्तनम्** । आदित्यस्यावृत् (तै० सं० ५।२।१।३) । **दैवस्वतः पन्था इत्यर्थः** । यो वा एतेषामावृतं ब्राह्मणं च न विद्यात् (श० ब्रा० ६।२।१।३९)। **आवृत् परिणतिः** । स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत् (याज्ञ० ३।२) । **आवृत् परिपाटी** । पिष्टानामावृत्य धानाः पिंष्टः (भा० श्रौ० ८।६।२१) । **उक्तोऽर्थः** । जातवेदो निवर्तय शतं ते सन्त्वावृतः (अथर्व० ६।७७।३) । **आवृत आवर्तनोपायाः** । आवर्तनोद्वर्तनकम्पितस्तन० (भा० पु० ८।१२।१९) । **आवर्तनं नमनम्** । उदगयनपूर्वपक्षपुण्याहेषु प्रागावर्तनात् (द्रा० गृ० १।१।२) । मध्यन्दिनादूर्ध्वमहरावर्तनमित्याहुः । आवर्तकोऽनिवर्ती च व्ययायी तु पृथग् द्विधा (शु० नी० २।३३९) । **आवर्तकः पुनः पुनरागामी आयो व्ययश्च** । जातं वंशे भुवनविदिते पुष्करावर्तकानाम् (मेघ०६) । **पुष्करावर्तकाः प्रलयमेघाः** । आवर्तन निवर्तनं यो गोपा अपि त हुवे (ऋ० १०।१९।४) । तैजसावर्तनी मूषा (अमरः) । तैजसं हेमादि आवर्त्यते द्रवी क्रियतेऽस्यामिति स्वामी । आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन (गीता ८।१६) । **आवर्तिन आवृत्तिमन्तः** ।

—**वृष् (वृषु सेचने)** । (इन्द्र) उरुव्यचा जठर आवृषस्व (ऋ० १।१०४। ९) । **आवृषस्व आसिञ्च** ।

—**वृह् (वृहू उद्यमने)** । स इन्द्र इष्टकामावृहत (मै० सं० १।६।९, तै० सं० १।१।२।४) । **उदपाटयदित्यर्थः** । मूलमस्यावर्हि (पा० ४।४।८८) । **आवृह्यत उत्पाट्यत इत्यावर्हि** । मुष्कावर्हो गवामिव (अथर्व० ३।९।२) । **मुष्कमावृहत्युत्पाटयत्युन्मूलयतीति मुष्कावर्हः** । **कर्मण्यण्** । तस्यामावृढायाम् (श० ब्रा० ८।१।२।१६) । **तस्यामिष्टकायां निष्कासितायामित्यर्थः** ।

—**वे (वेञ् तन्तुसन्ताने)** । अन्धो मणिमविध्यत्तमनङ्गुलिरावयत् (तै० ब्रा०, योगभाष्ये ४।३१ इत्यत्रोद्धृतम्) । **आवयत् सूत्रे प्रावयत् प्रोतमकरोत्** । ये अन्ता यावतीः सिचो य ओतवो ये च तन्तवः (अथर्व० १४।२।५१)। **ओयन्ते प्रोयन्त इत्योतवः प्रोतानि सूत्राणि** । नाहं तन्तुं न विजानाम्योतुम् (ऋ० ६।९।२) ।

—**वेष्ट् (वेष्ट वेष्टने)** । फेनस्तायते यदप्स्वावेष्टमानः प्लवते (श० ब्रा० ६।१।२।३) । **आवेष्टमान आवृण्वानः** । उष्णीषेणावेष्ट्य (श० ब्रा० ४।५।२।७) । **उक्तोऽर्थः** । गोपाल इव दण्डेन यथा पशुगणान्वने । आवेष्टयत तां सेनां भगदत्तस्तथा मुहुः । (भा० द्रोण० २६।६३) । **आवेष्टयत अरुन्द्ध** ।

—व्यध् (व्यध ताडने)। आविध्यद् हस्ततलयोरुभयोरर्जुनस्तदा (भा० द्रोण० १०३।३१)। आविध्यत् अताडयत् प्राहरत्, तत्र च्छिद्रमकरोत्। निवस्स्वाविध्य च स्रजम् (भट्टि०२०।११)। आविध्य (शिरसि) क्षिप। लोटि रूपम्। ततः शाल्वं गदां गुर्वीमाविध्यन्तं महाहवे। द्विधा चकार सहसा प्रजज्वाल च तेजसा (भा० वन० ३।२३।३७)। आविध्यन्तम् प्रास्यन्तम्। नश्यतीषुर्यथाऽऽविद्धः खे विद्धमनुविध्यतः (मनु० ६।४३)। आविद्धः क्षिप्तः। प्रास्तः। शब्दानुकारी सङ्क्रुद्धो दर्पाविद्धसटाननः (हरि० २।१३।१५)। आविद्धा भ्रमिताः सटा यस्य तादृगाननं यस्य स एवम्भूतः। आविद्धपुच्छो हृषितो व्यात्तानन इवान्तकः (हरि० २।१३।१६)। आविद्धमुत्क्षिप्तमूर्ध्वीकृतम् पुच्छम्। यथाऽऽविद्धं याति (विक्रम० ४।२८)। कुटिलं यथा स्यात्तथा याति। स पाण्डुराविद्धविमानमालिनीं (लङ्कापुरीम्)। आविद्धाऽतिसंनिकर्षेण निवेशिता विमानमाला, तद्वतीम्। वाताविद्धेन भामिनि काशपुष्पलवेनेदं साश्रुपातं मुखं मम (स्वप्न० ४।७)। वाताविद्धेन वायुनेतः प्रेरितेन। पादपाविद्धपरिघः (रणः) (रघु० १२।७३)। आविद्धो मग्नः। स महाधनरत्नौघो वस्त्रकम्बलफेनवान्। पाण्डुसागरमाविद्धः (भा० सभा० ५। ३४)। आविद्धः सर्वतो विप्रकीर्णः। आविद्धावेव दृश्येते रथिनौ तौ रथोत्तमौ (भा० आदि० २२६।३)। आविद्धौ=अलातचक्रवद् भ्रमितौ। आविद्धाभिश्च मुक्ताभिरुत्तमैः स्फाटिकैरपि। (रा० २।१७।४)। आविद्धाभिः कृतच्छिद्राभिः। अनाविद्धं रत्नं किसलयमलूनं कररुहैः (शा० २।१०)। अनाविद्धं शलाकयाऽकृतच्छिद्रं वज्रेणानुत्कीर्णम्। तेन सहसा गृहीत्वा शिलायामाविध्य विगतप्राणः कृतः (तन्त्रा० १।१४)। आविध्य क्षिप्त्वा। गदामाविध्य तरसा (भा० पु० १०।५५।१६)। आविध्य भ्रमयित्वा। तां व्यवासृजदाविध्य क्रुद्धः कर्णं प्रति (भा० द्रोण० १४०।६६)। उक्तोऽर्थः। आविध्याविध्य तौ वृक्षान् मुहूर्त्तमितरेतरम्। ताडयामासतुः··· (भा० वन० १५७।६१)॥ अनन्तरोदीरित एवार्थः। आविध्य दण्डं चिक्षेप (रा० २।३२।३६)। इहापि पूर्वेण समोऽर्थः। यत्त्वां संचोदयति मे वच आविध्य राघव (रा० २।२४।३६)। आविध्य आक्षिप्य आच्छिद्य। आविधो विध्यते येनेत्यमरः। घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् (पा० ३।३।५८ सू० वा०)। तेनाङ्पूर्वाद्विध्यतेः कप्रत्ययो घञर्थे करणे।

—व्ये (व्येञ् संवरणे)। आ वो हार्दि भयमानो व्ययेयम् (ऋ० २।२९। ६)। आव्ययेयमात्मानमाच्छादयेयं (स्वस्य क्षेमाय)।

—व्रज (व्रज गतौ)। स त्वमायुधमादाय क्षिप्रमाव्रज (रा० २।३१।३१)। आव्रज =आयाहि, एहि। वैश्वदेवे तु निवृत्ते यद्यन्योऽतिथिराव्रजेत् (मनु० ३। १०८)। उक्तोऽर्थः। जनको ह वैदेह आसाञ्चक्रे। अथ ह याज्ञवल्क्य आव-

व्राज (श० ब्रा० १४।६।१०।१)। आवव्राज=आजगाम। त्वामाव्रजेद्यदि रहः सा पुत्र वरवर्णिनी (भा० आदि० ९७।२१)। आव्रजेत् उपेयात्। स पुनर्हृदयं कस्य क्रूरस्यापि न निर्दहेत्। कस्य ह्यकरुणस्यापि नेत्राभ्यामश्रु नाव्रजेत् (भा० सौ० ४।२८)॥ आव्रजेत् प्रवहेत् स्यन्देत।

—व्रश्च् (ओव्रश्चू छेदने)। एताभ्यस्त्वा देवताभ्य आवृश्चामः (श० ब्रा० १२।१।२।२२)। आवृश्चामः पृथक् कुर्मः। आवृश्च्यन्तामदितये दुरेवाः (ऋ० १०।८७।१८)।

—शंस् (आङः शसि इच्छायाम्, शंसु स्तुतौ)। अग्निहोत्रिणि देवता आशंसन्ते (मै० सं०)। आशंसन्ते कामपूर्तये तत्र लम्बन्ते। त्वय्याशंसन्त्यमरा मानवाश्च (भा० अनु० ७२।५६)। उक्तोऽर्थः। तस्मादबलीयान् बलीयांसमाशंसते धर्मेण (श० ब्रा० १४।४।२।२६)। बलीयस्त्वमिच्छतीत्यर्थः। आशंसन्तोऽस्माकमनुस्मरन्तः (भा० उ० ३०।१०)। आशंसन्त आशीर्भिर्वर्धयन्तः, आशिषाऽऽशासानाः। स्वकार्यसिद्धिं पुनराशशंस (कु० ३।५७)। स्वकार्यसिद्धौ भूयोऽप्याशावानभूत्। आशंसता बाणगतिं वृषाङ्के (कु० ३।१४)। आशंसता कथयता। इत्याशशंसे करणैरबाह्यैः (रघु० १४।५०)। आशंसाऽऽशीः। न नूनं मयि कैकेयि किंचिदाशंससे गुणान् (रा० २।१६।२४)। आशंससे संभावयसि, जानासि। आ तू न इन्द्र शंसय गोष्वश्वेषु (ऋ० १।२९।१)। आशंसय समन्तात्प्रशस्तान् कुर्विति सायणः। स दुष्टः पापमाशंसुः पाण्डवानां महात्मनाम् (भा० शां० ३९।२५)। पापमनिष्टमाशंसुरिच्छुः।

—शङ्क् (शकि शङ्कायाम्)। अहं खल्वार्यस्य प्रसादाद् देवानामपि राज्यमाशङ्के किं पुनर्वानराणाम् (अभिषेक० १)। आशङ्के प्राप्तिमुत्प्रेक्षे।

—शस् (शसु हिंसायाम्)। यदाशसा वदतो मे विचुक्षुभे (अथर्व० ७।५९।१)। आशसा वातृभिः कृतेन याच्ञाप्रतिघातेन भर्त्सनप्रहरणादिरूपेण हिंसनेन (सायणः)।

—शास् (आङः शासु इच्छायाम्)। आशासते कुटुम्बिभ्यस्तेभ्यः कार्यं विजानता (मनु० ३।८०)। आशासते प्रार्थयन्ते। दीर्घमायुर्धनं पुत्रान् सम्यगाराधिता शुभाः। पुत्रेष्वाशासते नित्यं पितरो दैवतानि च (भा० उ० १३२।२५-२६)। आशासत इच्छन्ति, कामयन्ते। तं त्वा वयं विश्ववाराऽऽशास्महे पुरुहूतं (ऋ० १।३०।१०)। आशास्महे याचामहे। ऋचच्छन्दसाऽऽशास्ते (शा० ४)। आशिषं प्रदिशति। किमन्यदाशास्महे केवलं वीरप्रसवा भूयाः (उत्तर० १)। नान्यामाशिषमुच्चारयाम इत्यर्थः। सर्वमस्मिन्वयमाशास्महे

(शा० ७)। आशास्महे संभावयामः। आशिषश्च प्रशिषश्च संशिषो विशिषश्च याः (अथर्व० ११।१०।२७)। आशिष इष्टफलप्रार्थनानि।

—शी (शीङ् स्वप्ने)। ज्योगेव दीर्घं तम आशयिष्ठाः (ऋ० १०।१२४।१)। आशयिष्ठा आस्थाय शयनमकार्षीरित्यर्थः। नास्य जाया शतवाही कल्याणी तल्पमाशये (अथर्व० ५।१७।१२)। तल्पमाशये तल्पमधिशेत इत्याह। यस्ते गर्भममीवा दुर्णामा योनिमाशये (ऋ० १०।१६२।२)। आशये आशेते श्रयते। कुसुमान्याशेरते षट्पदाः (विक्रम० २।२३ पाठभेदः)। आशेरते आश्लिष्यन्ति। अहिमोहानमप आशयानम् (ऋ० ५।३०।६)। अप आशयानम् अप्सु श्रयन्तम्। वृत्रमाशयानं सिरासु (ऋ० १।१२१।११)। इहाङ्शीङ-कर्मकः। सुद्युम्नस्याशयन्पुंस्त्वम् (भा० पु० ९।१।३७)। आशयन् इच्छन्। आशयोऽभिप्रायस्तं कुर्वन्नित्यर्थ इति कल्पना। आशयाश्चोदपानाश्च प्रभूत-सलिलाकराः (भा० शां० ८६।१५)। आशया निपानानि। आशयाग्निदीप्तिः (दशकु० १६०)। आशय आमाशयः। निरनन्दं गतश्रीकं हृतारामिवाशयम् (भा० शल्य० २९।१०३)। आशयो वनसत्त्वग्रहणाय कृतो गर्तः। जगाम धरणीं तूर्णं महोरग इवाशयम् (भा० कर्ण० १४।३२)। आशयो बिलम्। इति कवे-राशयः। अभिप्राय इत्यर्थः। पयसामिवाशयः (कि० २।३)। आशय आधारः। तन्मे दहति गात्राणि विषं पीतमिवाशये (रा० ६।५।६)। आशयो हृदयम्। अहमात्मा गुडाकेश सर्वभूताशयस्थितः (गीता १०।२०)। उक्तोऽर्थः। वैरस्य रूपमेतद्धि भेदं याति मुहुर्मुहुः। सन्धीयमानमपि यत्क्लिन्नाम्बरमिवाशयम् (राज० ७।३८४)॥ उदितचर एवार्थः। क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः (यो० सू० १।२४)। क्लेशकर्मणां फलं विपाकस्तदनुगुणा वासना आशया इति भाष्यम्।

—श्यै (श्यैङ् गतौ)। यावन्नाश्यायते वेदिरभिषेकजलाप्लुता (रघु० १७।३७)। आश्यायते शुष्यति। सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान् (रघु० ४।२४)। आश्यानो घनभावं गतः कर्दमः पङ्को यत्र तान्।

—श्रि (श्रिञ् सेवायाम्)। पापमेवाश्रयेदस्मान्हत्वा स्वजनमाहवे (गीता १।३६)। आश्रयेत् विन्देत्, लिम्पेत्। उवाच धर्मसंयुक्तमश्वमेधाश्रितं वचः (रा० ७।९१।६)। अश्वमेधाश्रितं वचः=अश्वमेधसम्बद्धम्। भीष्माश्रिताः कथाः (भा०)। भीष्माधिकरणाः। विनाश्रयं न तिष्ठन्ति पण्डिता वनिता लताः (उद्भट श्लोकः)। प्रयोजनापेक्षितया प्रभूणां प्रायश्चलं गौरवमाश्रितेषु (कु० ३।८)। आश्रिता उपजीवकाः, भार्याः।

—श्रु (श्रु श्रवणे)। आ स्मा अशृण्वन्नाशाः (अथर्व० १६।५।३)। आशा दिशः सर्वाः प्राच्यादय आशृण्वन् आश्रवणं फलं दातुमङ्गीकरणं कृतवत्य इति सायणः। प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता (पा० १।४।४०)। न म आशृणोः किमभुग् वदासि (ऋ० १०।९५।११)। न म आशृणोः=न मद्वचोऽङ्गी कुरुषे। यस्य देवा आशृण्वन्ति (ऋ० १।१६०।१)। आभिमुख्येन शृण्वन्तीत्याह। आ रोदसी वरुणानी शृणोतु (ऋ० ५।४६।८)। उक्तोऽर्थः। आ ते कारो शृणवामा वचांसि (ऋ० ३।३३।१०)। आशृणमोऽङ्गी कुर्म इत्यर्थः। प्रत्याख्यायान्तत आशुश्रुवुः (नि० २।२६)। उक्तोऽर्थः। आशृण्वन्तं यवं देवं यत्र त्वाऽच्छावदामसि (अथर्व० ६।१४२।२)। आभिमुख्येनास्मदुक्तमाकर्णयन्तमित्यर्थः। आश्रावयेदस्य जनम् (भट्टि० १२।३०)। देशादिदानेनाकर्षेदित्यर्थः। स वै प्रवरायाश्रावयति (श० ब्रा० १।५।१।१)। आकारयति, प्रेषयति प्रहिणोति। वचने स्थित आश्रव इत्यमरः। यशः पथादाश्रवतापदोत्थात् (नै० ३।८४)। आश्रवतापदम् आज्ञाकारित्वं वश्यत्वं विधेयत्वम्। भिषजामनाश्रवः (रघु० १९।४९)। भिषजां वचने न सन्तिष्ठत इत्याह। तथानुशिष्टाप्यनाश्रवैवासीत् (दशकु० ५७)।

—श्लिष् (श्लिष आलिङ्गने)। आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुम् (मेघ० २)। आश्लिष्टसानुम्=सान्वासक्तम्। सानुना सम्पृक्तम्। अवनितलाश्लिष्टललाटरेखया (काद० ६७)। आश्लिष्टं स्पृष्टम्। कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे (मेघ० ३)। मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतोः (मेघ० २।३९) आश्लेषः परिष्वङ्गः परिरम्भ उपगूहनम्।

—श्वस् (श्वस प्राणने)। न चाश्वसिष्यन्ति पृथात्मजा मयि (भा० कर्ण० ८८।३२)। आश्वसिष्यन्ति विश्वसिष्यन्ति। श्रद्धास्यन्ति। प्रत्येष्यन्ति। आश्वसिहि नरश्रेष्ठ प्राणिनः कस्य नापदः (रा० ३।६६।६)। आश्वसिहि धैर्यं धेहीत्यर्थः। प्रत्ययादाश्वसत्यः (मेघ० ८)। आश्वसत्यः क्षेमिणमात्मानं मन्यमानाः। दूरस्थोऽस्मीति नाश्वसेत् (पञ्चत० १।३०७)। आश्वासितपथिकजनसार्थः। (पञ्चत० २)। आश्वासितः सन्तर्पितः। आश्वास्य पाययित्वा च परिप्लाव्य च वाजिनः (भा० वि० ६७।१६)। आश्वास्य उद्धर्ष्य। तत्र मूर्तमिवाश्वासं जमदग्निं ददर्श सः (कथा० ९।६४)। आश्वासो विस्रम्भो निःशङ्कता।

—सच् (षच समवाये)। ज्योतिष्मतीमदितिं धारयत्क्षितिं, स्वर्वतीमा स चेते दिवे दिवे जागृवांसा दिवे दिवे (ऋ० १।१३६।३)। आसचेते गवेषयेते, मृगयेते, मार्गयेते।

—सञ्ज् (षञ्ज सङ्गे)। मा राजन्सारमज्ञात्वा कदलीस्तम्भमासज (भा० वन० १३१।२०)। माऽऽसज माश्रय। मावलम्बनं कार्षीः। अदस्मयेनाङ्केन द्विषते त्वा सजामसि (अथर्व० ७।१२०।१)। आसजामः सम्बध्नीमः। भुजे...स भूमेर्धुरमाससञ्ज (रघु० २।७४)। आससञ्ज आहितवान्। आससञ्ज भयं तेषाम् (भट्टि० १४।१०४)। आससञ्ज लग्नम्। तान्भयमाविशत्, ते भयमाविशन्नित्यर्थः। तान्भयमविन्दत् इत्यभिप्रायः। यदि नेष्टाऽऽत्मनः पीडा माऽऽसञ्जि भवता जने (कि० ११।६९)। भवतो जने लोक आसक्तिर्मा भूदित्याह। यदि नोऽसुररक्षसान्यासजेयुः (श० ब्रा० १।५।३।२१)। आस्कन्देयुराक्रामेयुरित्यर्थः। तान्दक्षिणतोऽसुररक्षसान्यासेजुः (श० ब्रा० ४।२।४। १९)। आसेजुः=आचस्कन्दुः। स यद्येनं पुरस्तात्। असुररक्षसान्यासिसङ्क्षन्ति (श० ब्रा० १।६।१।१५)। आसङ्क्तुमाक्रमितुमिच्छन्तीत्यर्थः। तिष्ठतां तपसि पुण्यमासजन् (कि० १३।४४)। आसजन् सम्पादयन्। चापमासज्य कण्ठे (कु० २।६४)। आसज्य निधाय। द्वीपिचर्मोत्तरासङ्गं द्वीपिचर्माधराम्बरम् (शि० भा० ११।८)। उत्तरासङ्गः प्रावरणं बृहतिका। त्वगुत्तरासङ्गवतीमधीतिनीम् (कु० ५।१६)। पदाकृष्टव्रततिवलयासङ्गसञ्जातपाशः (शा० १।३०)। आसङ्गः संश्लेषः। ततो हैनमासङ्गो न विन्दति (श० ब्रा० ५।२।३।५)। नैनमुपशयस्थः कश्चिदास्कन्दतीत्यर्थः। आसङ्ग उपशयः। तेऽसुररक्षसेभ्य आसङ्गाद् बिभयाञ्चक्रुः (श० ब्रा० ३।३।४।२)। आसङ्ग आस्कन्द आक्रमः। चेतः स्वर्गतरङ्गिणीतटभुवामासङ्गमङ्गी कुरु (भर्तृ० ३।६०)। आसङ्गोऽनुरागो भक्तिः। त्यक्त्वा कर्मफलासङ्गम् (गीता ४।२०)। आसङ्गोऽभिष्वङ्गः, (फले) स्पृहा। कार्तवीर्यभुजासक्तं तज्जलं प्राप्य निर्मलम् (रा० ७।३२।५)। आसक्तं रुद्धम्। यदासक्तं सख्यं जने (महावीर० ५।५८)। बद्धम्। कासक्तिकः (गो० गृ० १।२।२७)। कृतशिरोवेष्टन इत्यर्थः। कं शिरः। आसक्तिका वस्त्रबन्धनम्। के आसक्तिकाऽस्येति कासक्तिकः। आसङ्गिनी आवर्तः, अम्भसां भ्रमः।

—सद् (षद्लृ विशरणगत्यवसादनेषु)। अग्निं दीप्तमिवासीदेद्राजानमुपशिक्षितः (शु० नी० २।२१५)। आसीदेत् उपसर्पेत, उपेयात् तत्सनिकर्षं गच्छेत्। कः शुष्कवृक्षं वनमापतन्तं दवाग्निमासीदति निर्विशङ्कः (रा० ४।३३ ४१)। आसीदति उपैति। हिमालयस्यालयमाससाद (कु० ७।६९)। प्रापेत्यर्थः। मा विदन्परिपन्थिनो य आसीदन्ति दम्पती (ऋ० १०।८५।३२)। आसीदन्ति उपशयस्था वर्तन्ते। इमं यम प्रस्तरमा हि सीद (ऋ० १०।१४।४)। आसीद

**आगत्योपविश**। आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः (ऋ० २।४१।२१)। **आसीदन्तु निषीदन्तु**। आसीदतु कलशं देव इन्दुः (सामवि० १।५३५)। आसीदतु बर्हिषि मित्रो अर्यमा (सामवि० १।१५०)। **आस्ताम् इत्यर्थः**। सीदता बर्हिरुरु वः सदस्कृतम् (अथर्व० २०।१३।८)। **उक्तोऽर्थः**। मा स्म दुर्बलमासदः (भा० शां० ६१।१४)। **माऽभिभूः**। आसादयतु मद्वीर्यं मुञ्चेमं कुरुसत्तम (भा० द्रोण० १५६।११)। **आसादयतु समासादयतु, समागच्छतु, प्रतिगृह्णातु**। आसादयतु मामेष धराधरमिवानिलः (भा० द्रोण० १६८।६१)। **मया संयुगं गच्छत्वित्यर्थः**। मां पुनः परिभूयैवमासादयसि याच्ञया (अवदा० जा० ३४। १४)। **आसादयसि कदर्थयसि**। असौ देवानासादयिष्यति (यो० वा० ५।३८। १८)। **उत्सादयिष्यतीत्यर्थः**। **स चापूर्वः**। उपहरति हवींष्यासादयति तेषामासन्नानामतिथिरात्मञ्जुहोति (अथर्व० ९।६।२०)। **आसादयति निदधाति**। अनेन रथवेगेन पूर्वप्रस्थितं वैनतेयमप्यासादयेय (शा० १)। **प्रतिपद्येय, उपपद्येय**। यदा ह्यासीदतः पापान्दहत्युग्रेण तेजसा (भा० शां० ६८।४२)। **आसीदतः संनिकृष्यमाणान् संनिहितान्, समीपस्थान्**। **आसन्नपरिचारकः**। **पार्श्वचरोऽनुचरः**। आसन्नमेव नृपति भंजते मनुष्यम् (पञ्चत०)। **आसन्नं सविधे वर्तमानम्**। न च किञ्चिदथोचुस्तं ह्रियाऽऽसन्ना युधिष्ठिरम् (भा० सभा० ७८।४)। **आसन्ना अवनता नम्राः**। आसादितौ कथं ब्रूतं न गजैः कूलमुद्रुजैः (भट्टि० ६।६५)। **आसादितौ व्यापादितौ**। अगृह्यत...शीतासादितसादेन पाणिपादेन सुप्तता। **शीतेन आसादितः प्रापितः सादः कार्श्यं दौर्बल्यं यस्य तेन**। बहुमत्स्योऽयं ह्रदः। अस्मिञ्जालं प्रक्षिपामः। नगरसमीपेऽन्ये ह्रदा अनासादिताः। तानासाद्य पुनरागमिष्यामः (तन्त्रा० १।५)। **अनासादिता अविचिताः, अननुसंहिताः**। नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति (पञ्चत०)। **आसाद्य प्राप्य**। आसाद्य कवचं दिव्यं सहस्रार्कसमद्युति (रा० ७।६।६४)। **आसाद्य परिधाय। व्यूढकङ्कटो भूत्वेत्यर्थः**। किमपि किमपि मन्दं मन्दमासत्तियोगात् (उत्तर० १।२७)। **आसत्तिः सन्निकर्षः, सान्निध्यम्**। वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः (सा० द० २।१)। **उक्तोऽर्थः**। न च ते क्वचिदासत्तिर्बुद्धेः प्रादुर्भविष्यति (भा० शां० ५२।१७)। **आसत्तिः, अवसादः, अवसन्नता**। प्राप्यासदमश्मानमग्निगोमयम् ...(आश्व० गृ० ४।४।१२)। **आसीदन्त्यस्यामित्यासद् गृहम्**। सामाऽऽसाद उद्गीथोऽपश्रयः (अथर्व० १५।३।८)। **आसादः पादपीठम्**। गृहपत्न्यासाद उपविश्योदपात्रं निनयति (कौ० सू० २३।५)। **आसाद आसन्दी**। न त्वाम्... प्रविषह्यतमं दुःखमासादयितुमर्हति (रा० २।१०६।८)। **आसादयितुमवसादयितुमुपद्रावयितुं क्षीणं कर्तुम्**।

—सिच् (षिच क्षरणे)। आ घर्मे सिञ्च पय उस्रियायाः (अथर्व० ७।७३।६)। आसिञ्च प्रपूरय। आ ते सिञ्चामि कुक्ष्योः (ऋ० ८।१७।५)। कुक्षेरुभयोः पार्श्वयोरासिञ्चामि पूरयामीत्याह। आसेचनम् (का० श्रौ० ६।५।४)। उपर्यन्तर्वोक्षणम्। महावीरं करोति…प्रादेशमात्रमूर्ध्वसानुमुपरिष्टादासेचनवन्तं सन्नतं वायव्यप्रकारम्। आसेचनवान् सौषिर्योपेतः। तदासेचनकं रूपं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् (अमरः)।

—सिध् (षिध गत्याम्)। आसेधो राजाज्ञयाऽवरोध इति मिताक्षरा। अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती। विषमस्थश्च नासेध्याः (नारदीय मनु० १।४७)। आसेध्या वार्या अवरोद्धव्याः। आसेधश्चतुर्धेति नारदः—स्थानासेधः कालकृतः प्रवासात्कर्मणस्तथा।

—सु (षुञ् अभिषवे, अभिषवः स्नपनं पीडनं स्नानं सुरासन्धानं च)। यो अस्मै तीव्रान्त्सोमाँ आसुनोति प्रयस्वान् (अथर्व० २०।८६।५)। आसुनोति पीडयति। देवस्य सवितुर्मतिमासवं विश्वदेव्यम् (वा० सं० २२।१४)। आसवमासोतुम् उद्धर्षयितुम्। उवटस्तु भगमित्यस्य विशेषणं मन्यते। सुतं तस्मात्तव प्रसुतमासुतं कुले दृश्यते। आसुतिः सुरासन्धानम्। आसुतीवलः शौण्डिकः।

—सू (षू प्रेरणे)। यद्भद्रं तन्न आसुव (ऋ० ५.८२।४)। आसुव इतः प्रेरय। आ ते प्राण सुवामसि परा यक्ष्मं सुवामि ते (अथर्व० ७।५५।६)। उक्तोऽर्थः। असौ वा आदित्यः सायमासुवति…एष प्रातः प्रसुवति (मै० सं० १।५।७)।

—सृ (सृ गतौ)। आसारसिक्तक्षितिबाष्पयोगात् (रघु० १३।२९)। आसारो वेगवद्वर्षम्। धरासम्पात आसारः (अमरः)। मेघैः सततासारं वर्षद्भिरनिशं तदा (भा० आदि० २६।५)। आसारः स्यात्प्रसरणम् (अमरः)। पार्ष्णिग्राहस्तदासारः (का० नी० सा० ८।४३)। अन्वगच्छद् बलमासार इति स्वामी। आसरतीत्यासारः। शत्रोः सर्वतो रोधोऽप्यासारो भवति। अथ तेष्वाजिसृत्सु रथेषु पुनरासृतेषु (श० ब्रा० ५।१।५।१०)। आसृतेषु आवृत्तेषु।

—सेव् (षेवृ सेवने)। एतानासेवते यस्तु तपस्तस्य प्रहीयते (भा० शां० १६२।१८)। आसेवतेऽसकृत् सेवते जुषते, भजते। निसस्तपतावनासेवने (पा० ८।३ १०२)। आसेवनं पुनः पुनः करणम्। विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः (पा० ३।४।५६)। आसेवाऽऽभीक्ष्ण्यम्। आयुक्तकुशलाभ्यां चासेवायाम्(पा० २।३।४०)। आसेवा तात्पर्यम्। यत्राप्रायश्चित्तं कर्मासेवते

प्रायश्चित्तवति (आप० ध० १।१८।११)। आसेवते तात्पर्येण करोतीति यावत्।

—स्कन्द् (स्कन्दिर् गतिशोषणयोः)। चयमास्कन्दति भस्मनां जनः (कि० २।२०)। भस्मनां चये राशौ पदं निधत्त इत्यर्थः। कथमिदानीमुन्मादोपरागो माधवेन्दुमास्कन्दति (मालती० ६)। आस्कन्दति आक्रामति अभिभवति। आस्कन्दल्लक्ष्मणं बाणैः (भट्टि० १७।८२)। उक्तोऽर्थः। तानि पुनरमूनि प्रतिनियतार्थविषयवृत्त्या वेदमास्कन्दन्ति (निरुक्तोपोद्घाते दुर्गः)। आस्कन्द उत्प्लुत्यारोहणम्। दत्तास्कन्दो वहन् (पक्षी) पृष्ठे शक्तिदेवम् अलक्षितम् (कथा० २६।३६)। आस्कन्तितमश्वानां गतिविशेषः। न हि सिंहो गजास्कन्दी भयाद् गिरिगुहाशयः (रघु० १७।५२)। गजमास्कन्दति प्लुत्यारोहतीति गजास्कन्दी। आस्कन्दी दक्षिणार्धस्य···कीनाशो गीयते द्विजैः (कथा० २४।८७)। आस्कन्दी दाता, वदान्यः, उदारः।

—स्कु (स्कुञ् आप्रवणे)। यो अस्याः कर्णावास्कुनोति (अथर्व० १२।४।६)। आस्कुनोति आकर्षति। अथाङ्गारमास्कौति (श० ब्रा० १।२।१।५)। आस्कौति कर्षति, बहिष्करोति, निष्कासयति। लोके स्कुञ् क्र्यादिकः सौवादिकश्च।

—स्तृ (स्तृञ् आच्छादने)। आस्तृत्य साधु शयनम् (शु० नी० ४।१७)। शयनीयं रचयित्वा, विस्तार्येत्याह।

—स्तॄ (स्तॄञ् आच्छादने)। वेद आस्तरणं ब्रह्मोपबर्हणम् (अथर्व० १५।३।७)। आस्तरणं शय्या। वासो वल्कलमास्तरः किसलयानि (शान्ति० २।२०)। कुसुमास्तरणे सहायतां बहुशः सौम्य गतस्त्वमावयोः (कु० ४।३५)। कुसुमास्तरणं कुसुमशयनम्। निवेशनं पुनर्नवीकृत्य लेपनास्तरणोपस्तरणैः (आश्व० गृ० २।३)। आस्तरणं कुथः, कटः। समुद्रगृहके शय्याऽऽस्तीर्णा (स्वप्न०)। आस्तीर्णा रचिता।

—स्था (ष्ठा गतिनिवृत्तौ)। स मा त्वमातिष्ठ योगं तं येन शीघ्रा हया मम। भवेयुः···(भा० ३।२६।३६)। उपायमाश्रयेत्यर्थः। आतिष्ठ दिव्यं पन्थानमह्नाय भरतर्षभ (भा० शां० ६१।५७)। आ नूनं रघुवर्तनिं रथं तिष्ठाथो अश्विना (अथर्व० २०।१४०।३)। आतिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी (वा० सं० ८।३२)। अधितिष्ठेत्यर्थः। आस्थाद्रथं सविता चित्रभानुः (ऋ० १।३५।४)। उक्तोऽर्थः। शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः (ऋ० १०।१३।१)। आतस्थुः=अधितष्ठुः। अध्यासते संश्रयन्त इत्यर्थः।

न श्मशानमातिष्ठेत्। स चेदमातिष्ठेदुदक हस्ते कृत्वा (गो० ब्रा० २।७)। श्मशाने तिष्ठेदित्यर्थः। प्रत्यक्षं यत्तदातिष्ठ परोक्षं पृष्ठतः कुरु (रा० २।१०८। १७)। आतिष्ठ, गृहाण, प्राद्रियस्व। स त्वमातिष्ठ यानाय यत्र यातो धनञ्जयः (भा० द्रोण० १११।४३)। आतिष्ठ प्रक्रमस्व। एह्यश्मानमातिष्ठ (अथर्व० २।१३।४)। आतिष्ठ आक्राम आक्रम्य तिष्ठ। संयमे यत्नमातिष्ठेद् विद्वान् यन्तेव वाजिनाम् (मनु० २।८८)। आतिष्ठेत् अनुतिष्ठेत्, आचरेत्, कुर्यात्, विदधीत। यथा यथा हि सद्वृत्तमातिष्ठन्त्यनसूयकाः (मनु० १०।१२८)। धर्मेण धर्मवृद्धावातिष्ठेद् यत्नमुत्तमम् (मनु० ६।३३३)। उक्तचर एवार्थः। न तस्योच्छित्तिमातिष्ठेत् (का० नी० सा० ८।६७)। उक्तोऽर्थः। आगन्तुकवेषमातिष्ठति। परिगृह्णातीत्यर्थः। स्वामिचित्तानुकूलैव वृत्तिरास्थीयतामिति (बृ० श्लो० सं० ४।७३)। आस्थीयतां जये योगो धर्ममुत्सृज्य पाण्डवाः (द्रोण० १९०।११)। अङ्गी क्रियतामित्यर्थः। अस्ति सकारमात्रमातिष्ठते। आगमो गुणवृद्धी आतिष्ठते (आङः स्थः प्रतिज्ञान इति वार्तिके वृत्तावुदाहरणे)। आतिष्ठते प्रतिजानीते संगृणीते, अभ्युपैति। तद्यत्कूरी कुर्वन्ति। यदास्थापयन्ति (श० ब्रा० ३।८।२।८)। आस्थापयन्ति प्रहरन्ति। भवतो भवितेत्येवं स्वप्नमास्थापयद् द्विजः (बृ० श्लो० सं० ५।६५)। आस्थापयत् व्याकरोत् सनिश्चयं व्याख्यत्। प्रविश्य तद्वदपरः काव्यमास्थपयेन्नटः (दश० ३।२)। आस्थापयेत् सूत्रयेत्। नवं रथं राजानं ससारथिमास्थापयति (कौ० सू० १५। ११)। आस्थापयति आरोहयति। आस्थिताः क्लृप्तवर्माणो भद्रा नित्यमदा द्विपाः (भा० कर्ण० ८०।१०)। आस्थिता आश्रिता आरूढाः। (योधैः)। आस्थितविष्टरः (रघु० १५।७६)। अधिष्ठितासन इत्यर्थः। आस्थितप्रतिषेधो वक्तव्यः (वा०)। पन्थानं याति न तु पथे यातीति भवति। अनास्थिते तु त्रिपथात्पथे यातीति भवति। आस्थित आश्रित आक्रान्त इत्युदितचर एवार्थः। उपायमास्थितस्यापि (शिशु० २।८०)। उक्तोऽर्थः। कर्मणैव हि संसिद्धिमास्थिता जनकादयः (गीता ३।२०)। आस्थिताः प्राप्ताः। श्वगणिवागुरिकैः प्रथमास्थितं वनम् (रघु० ९।५३)। आस्थितं वेष्टितम्। इत्येवं सा समाभाष्य भूयः सन्देष्टुमास्थिता (भा० ५।६७४०)। आस्थिता आरब्धा। वृद्धैः सम्मन्त्र्य सद्भिश्च बुद्धिमद्भिः श्रुतान्वितैः। आस्थितः... (भा० वन० १५०। ३८)। आस्थितोऽनुगृहीतः। न दृष्टपूर्वं कल्याणं सुखं वा पतिपौरुषे। अपि पुत्रे विपश्येयमिति रामास्थितं मया (रा० २।२०।३८)॥ आस्थितं जीवनं स्थापितम्। समानं चिद्रथमातस्थिवांसा (अथर्व २०।३४।८)। आतस्थिवांसौ आस्थितवन्तौ=आश्रितवन्तौ। रथमास्थाय (हरि० १।११३३)। आस्थाय आरुह्य। महेन्द्रमास्थाय महोक्षरूपम् (रघु० ६।७२)। उक्तोऽर्थः। क्षिप्रं मे

**रथमास्थाय** निगृह्णीष्व हयोत्तमान् (भा० वि० ३७।२२)। सर्ववेदपारिषदं हीदं शास्त्रम्। तत्र नैकः पन्थाः शक्य आस्थातुम् (भाष्ये)। **आस्थातुमाश्रयितुम्।** अवश्य च कश्चित् स्वकृतान्त आस्थेयः। तत्र संस्त्यानप्रसवौ लिङ्गम् इत्यत्र (भाष्ये)। **आस्थेय आश्रेयः।** न ह्येषा बुद्धिरास्थेया अङ्गदं प्रति (रा० ४।२३।११)। **उक्तोऽर्थः।** यदि तु नेष्यते ततो यत्नान्तरमास्थेयमस्माद् विभाषाविज्ञानात् (पा० ६।१।२६ सूत्रे वृत्तौ)। आस्थाता ते जयतु जेत्वानि (अथर्व० ६।१२।१)। **आस्थाताऽऽश्रयिता रथारोहः।** न संभ्रमो न भीः काचिदास्था वा समजायत (भा० शां २८१।१२)। **आस्था समादरः।** मय्यप्यास्था न ते चेत् त्वयि मम नितरामेव राजन्ननास्था (भर्तृ० ३।३०)। **उक्तोऽर्थः।** स्त्री पुमानित्यनास्थैषां वृत्तं हि महितं सताम्। (कु० ६।१२)। **अनास्थाऽनादरः।** अनास्था बाह्यवस्तुषु (कु० ६।६३)। एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु (रघु० २।५७)। **उक्तोऽर्थः।** अत्यद्भुतैर्मम हृतस्य तथाप्यनास्था (महावीर० २।३६)। **अनास्थाऽश्रद्धा भक्त्यभावो वा।** जयलक्ष्म्यां बबन्धास्थाम् (राज० ५।२४६)। **आस्था आशा।** तासामास्थानादुज्जिहतामोषधयः (वा० सं० ११।३८)। **आस्थानं मूलमाधारः।** आस्थाने पर्वता अस्थुः (अथर्व० ६।७७।१)। **आस्थानं संश्रयस्थानम्।** इन्द्रो वृत्रस्यास्थानमच्छिनत् (शा० ब्रा० ५।५।५।१४)। **आस्थानमाश्रीयमाणं निवर्तनमार्गम्।** राजानम् आस्थानगतम् (कथा० २१।१७)। **आस्थानं राजसभा।** **आस्थानी क्लीबमास्थानम् (अमरः)।** अनैषीच्च तातो मे देवस्यालकेश्वरस्यास्थानीम् (दशकु० पृ० ११७)। स्तूयमानो जयाशीर्भिरास्थानस्थानमागतः (बृ० श्लो० सं० २।२२)। **आस्थानमसितं तव** (अथर्व० १।२३।३)। **एत्य तिष्ठत्यत्रेति प्रक्षेपणमाजनादि।** **शोणितास्थापनम्** (सुश्रुत० २।३।१७)। **रक्तस्रुतिविराम इहास्थापनशब्देनोक्तः।** आस्थापनवमनविरेचनैस्तदहरेवोपपादयेत (चरक० वि० ७।१९)। **आस्थापनं घृतेन तैलेन वा वस्तिकर्म।** आस्थापनं तु तरुणे गर्भे नार्या न शस्यते (का० सं० खि० अन्तर्० श्लो० २६)। **उक्तोऽर्थः।** **आस्थायिका** (बृह० उप० ४।१।४)।

—स्ना (ष्णा शौचे)। विवाहे कृत्यां यां चक्रुरास्नाने तां निदध्मसि (अथर्व० १८।२।६५)। **आस्नानं स्नानार्थकं जलम्।**

—स्पृ (स्पृ प्रीतिपालनयोः, प्रीतिचलनयोरित्येके)। तेनेमाँल्लोकानास्पृणोति (श० ब्रा० ३।३।४।३)।

—स्फर् (स्फुर स्फुरणे, अकारोपधं केचित्पठन्ति)। **धनुरास्फालयन्**

(उत्तर० ४)। धातुरेफस्य लत्वापत्तिः। नादयन्, शिञ्जयन्। ध्वनयन्। वीणामास्फलयन्तीम् (काद० १३१)। वादयन्तीमित्यर्थः। आस्फालितं यत् प्रमदाकराग्रैः (रघु० १६।१३)। आस्फालितं ताडितम्। पयोराशेरोघः प्रलय-पवनास्फालित इव (उत्तर० ५।६)। आस्फालित आन्दोलितः। शिलायामा-स्फालितः (पञ्चत० १)। ताडित इत्यर्थः।

—स्फुट् (स्फुट विकसने, स्फुटिर् विशरणे)। आस्फोटयत्तथाऽऽकाशे धर्मः प्राप्तो मयेति वै (भा० शां० २६१।४१)। बाहुशब्दमकरोदित्यर्थः। धृष्टमास्फोटयामास लङ्कां शब्देन पूरयन् (रा० ५।४३।६)। आस्फोटयामास क्षोभयामास। तस्यास्फोटितशब्देन महता श्रोत्रपातिना। पेतुर्विहङ्गमास्तत्र चैत्यपालाश्च मोहिताः (रा० ५।४।७)॥ आस्फोटितम् बाहुताडनशब्दः। वल्गितास्फोटितोत्क्रुष्टैः (भा० द्रोण० ८०।४१)। आस्फोटितं भुजाडम्बरः। —स्फुर् (स्फुर स्फुरणे)। अक्षाणां हृदयं मे ज्यां रथं विद्धि ममास्फुरम् (भा० सभा० ५६।४)। आस्फुरम् अक्षन्यासपातनाविस्थानम्।

—(स्रु गतौ)। सवितर्कविचारमाप शान्तं प्रथमं ध्यानमनास्रवप्रकारम् (बुद्ध० ५।१०)। आस्रवः क्लेशः। आदीनवास्रवौ क्लेशे इत्यमरः। तेषामसि त्वमुत्तममनास्रावमरोगणम् (अथर्व० २।३।२)। आस्रवन्तीत्यास्रावा अतीसा-रातिमूत्रनाडीव्रणादयः। एवा रोगं चास्रावं चान्तस्तिष्ठतु मुञ्ज इत् (अथर्व० १।२।४)। आस्रावो मूत्रातिसारः। कण्टकोपि दुश्छिन्न आस्रावं जनयेच्चिरम् (भा० आदि० २४०।६)। आस्रावः क्षतम् इति नीलकण्ठः। च्युतेष्वास्राववद् विद्यात् (गौ० ध० ११।४३)। आस्राव आस्यजलम्।

—हन् (हन हिंसागत्योः)। आजघान रणे रामं तोत्त्रैरिव महाद्विपम् (रा० ३।२८।१०)। आजघान प्रजहार ताडयामास चक्षाण। आजघ्ने वक्षसि द्रोणो नाराचेन धनञ्जयम् (भा० द्रोण० ६१।२३)। उक्तोऽर्थः। आजघ्ने विषमविलोचनस्य वक्षः (कि० १७।६३)। उभयत्रापाणिनीयमात्मनेपदम्। कः कपाटमाहन्ति। कुट्टिममाजघान (काद० १०)। कील आहन्यमानः प्रतिकीलं निर्हन्ति (पा०२।२।६ भाष्ये)। आहन्यमानो निखन्यमानः (निखायमानः)। दण्डाहतं कालशेयम् (अमरः)। आहतं मथितम्। अङ्कमारोपितायां च तन्त्र्यो यस्यामनाहताः। मधुरं निस्वनेयुस्तां विद्या घोषवतीमिति (बृ० श्लो० स० ५।१४१)॥ अनाहता अताडिताः। हृदये दिग्धशरैरिवाहतः (कु० ४।२५)। उक्तोऽर्थः। पादाहतं यदुत्थाय मूर्धानमधिरोहति (शिशु० २।४६)। पादेना-वताडितं (रजः)। अनाहते वाससी वसानः। अनाहते अधौते अनिक्ते।

रथमास्थाय निगृह्णीष्व हयोत्तमान् (भा० वि० ३७।२२)। सर्ववेदपारिषदं हीदं शास्त्रम् । तत्र नैकः पन्थाः शक्य आस्थातुम् (भाष्ये)। आस्थातुमाश्रयितुम् । अवश्य च कश्चित् स्वकृतान्त आस्थेयः । तत्र संस्त्यानप्रसवौ लिङ्गम् इत्यत्र (भाष्ये)। आस्थेय आश्रेयः। न ह्येषा बुद्धिरास्थेया अङ्गदं प्रति (रा० ४। २३।११)। उक्तोऽर्थः। यदि तु नेष्यते ततो यत्नान्तरमास्थेयमस्माद् विभाषा-विज्ञानात् (पा० ६।१।२६ सूत्रे वृत्तौ)। आस्थाता ते जयतु जेत्वानि (अथर्व० ६।१२।१)। आस्थाताऽऽश्रयिता रथारोहः। न संभ्रमो न भीः काचिदास्था वा समजायत (भा० शां २८१।१२)। आस्था समादरः। मय्यप्यास्था न ते चेत् त्वयि मम नितरामेव राजन्ननास्था (भर्तृ० ३।३०)। उक्तोऽर्थः। स्त्री पुमानित्यनास्थैषां वृत्तं हि महितं सताम्। (कु० ६।१२)। अनास्थाऽनादरः। अनास्था बाह्यवस्तुषु (कु० ६।६३)। एकान्तविध्वंसिषु मद्विधानां पिण्डेष्व-नास्था खलु भौतिकेषु (रघु० २।५७)। उक्तोऽर्थः। अत्यद्भुतैर्मम हृतस्य तथाप्यनास्था (महावीर० २।३६)। अनास्थाऽश्रद्धा भक्त्यभावो वा। जय-लक्ष्म्यां बबन्धास्थाम् (राज० ५।२४६)। आस्था आशा। तासामास्था-नादुज्जिहतामोषधयः (वा० सं० ११।३८)। आस्थानं मूलमाधारः। आस्थाने पर्वता अस्थुः (अथर्व० ६।७७।१)। आस्थानं संश्रयस्थानम्। इन्द्रो वृत्रस्या स्थानमच्छिनत् (शा० ब्रा० ५।५।५।१४)। आस्थानमाश्रीयमाणं निवर्तनमार्गम्। राजानम् आस्थानगतम् (कथा० २१।१७)। आस्थानं राजसभा। आस्थानी क्लीबमास्थानम् (अमरः)। अनैषीच्च तातो मे देवस्यालकेश्वरस्यास्थानीम् (दशकु० पृ० ११७)। स्तूयमानो जयाशीर्भिरास्थानस्थानमागतः (बृ० श्लो० सं० २।२२)। आस्थानमसितं तव (अथर्व० १।२३।३)। एत्य तिष्ठत्यत्रेति प्रक्षेपणभाजनादि। शोणितास्थापनम् (सुश्रुत० २।३।१७)। रक्तस्रुतिविराम इहास्थापनशब्देनोक्तः। आस्थापनवमनविरेचनैस्तदहरेवोपपादयेत (चरक० वि० ७।१६)। आस्थापनं घृतेन तैलेन वा वस्तिकर्म। आस्थापनं तु तरुणे गर्भे नार्यां न शस्यते (का० सं० खि० अन्तर० श्लो० २६)। उक्तोऽर्थः। आस्थायिका (बृह० उप० ४।१।४)।

—स्ना (ष्णा शौचे)। विवाहे कृत्यां यां चक्रुरास्नाने तां निदध्मसि (अथर्व० १८।२।६५)। आस्नानं स्नानार्थकं जलम्।

—स्पृ (स्पृ प्रीतिपालनयोः, प्रीतिचलनयोरित्येके)। तेनेमाँल्लोकाना-स्पृणोति (श० ब्रा० ३।३।४।३)।

—स्फर् (स्फुर स्फुरणे, अकारोपधं केचित्पठन्ति)। धनुरास्फालयन्

(उत्तर० ४)। धातुरेफस्य लत्वापत्तिः। नादयन्, शिञ्जयन्। ध्वनयन्। वीणामास्फलयन्तीम् (काद० १३१)। वादयन्तीमित्यर्थः। आस्फालितं यत् प्रमदाकराग्रैः (रघु० १६।१३)। आस्फालितं ताडितम्। पयोराशेरोघः प्रलयपवनास्फालित इव (उत्तर० ५।६)। आस्फालित आन्दोलितः। शिलायामास्फालितः (पञ्चत० १)। ताडित इत्यर्थः।

—स्फुट् (स्फुट विकसने, स्फुटिर् विशरणे)। आस्फोटयत्तथाऽऽकाशे धर्मः प्राप्तो मयेति वै (भा० शां० २६१।४१)। बाहुशब्दमकरोदित्यर्थः। धृष्टमास्फोटयामास लङ्कां शब्देन पूरयन् (रा० ५।४३।६)। आस्फोटयामास क्षोभयामास। तस्यास्फोटितशब्देन महता श्रोत्रपातिना। पेतुर्विहङ्गमास्तत्र चैत्यपालाश्च मोहिताः (रा० ५।४।७)॥ आस्फोटितम् बाहुताडनशब्दः। वल्गितास्फोटितोत्क्रुष्टैः (भा० द्रोण० ८०।४१)। आस्फोटितं भुजाडम्बरः। —स्फुर् (स्फुर स्फुरणे)। अक्षाणां हृदयं मे ज्यां रथं विद्धि ममास्फुरम् (भा० सभा० ५६।४)। आस्फुरम् अक्षन्यासपातनाविस्थानम्।

—(स्रु गतौ)। सवितर्कविचारमाप शान्तं प्रथमं ध्यानमनास्रवप्रकारम् (बुद्ध० ५।१०)। आस्रवः क्लेशः। आदीनवास्रवौ क्लेशे इत्यमरः। तेषामसि त्वमुत्तममनास्रावमरोगणम् (अथर्व० २।३।२)। आस्रवन्तीत्यास्रावा अतीसारातिमूत्रनाडीव्रणादयः। एवा रोगं चास्रावं चान्तस्तिष्ठतु मुञ्ज इत् (अथर्व० १।२।४)। आस्रावो मूत्रातिसारः। कण्टकोऽपि दुश्छिन्न आस्रावं जनयेच्चिरम् (भा० आदि० २४०।६)। आस्रावः क्षतम् इति नीलकण्ठः। च्युतेष्वास्राववद् विद्यात् (गी० ध० १।१।४३)। आस्राव आस्यजलम्।

—हन् (हन हिंसागत्योः)। आजघान रणे रामं तोत्त्रैरिव महाद्विपम् (रा० ३।२८।१०)। आजघान प्रजहार ताडयामास चक्षाण। आजघ्ने वक्षसि द्रोणो नाराचेन धनञ्जयम् (भा० द्रोण० ९१।२३)। उक्तोऽर्थः। आजघ्ने विषमविलोचनस्य वक्षः (कि० १७।६३)। उभयत्रापाणिनीयमात्मनेपदम्। कः कपाटमाहन्ति। कुट्टिममाजघान (काद० १०)। कील आहन्यमानः प्रतिकीलं निर्हन्ति (पा० २।२।६ भाष्ये)। आहन्यमानो निखन्यमानः (निखायमानः)। दण्डाहतं कालशेयम् (अमरः)। आहतं मथितम्। अङ्कमारोपितायां च तन्त्र्यो यस्यामनाहताः। मधुरं निस्वनेयुस्तां विद्या घोषवतीमिति (बृ० श्लो० स० ५।१४१)॥ अनाहता अताडिताः। हृदये दिग्धशरैरिवाहतः (कु० ४।२५)। उक्तोऽर्थः। पादाहतं यदुत्थाय मूर्धानमधिरोहति (शिशु० २।४६)। पादेनाताडितं (रजः)। अनाहते वाससी वसानः। अनाहते अधौते अनिक्ते।

धावकेन फलके अताडिते इत्यर्थः । ये तत्त्वके निष्प्रवाणिनी इति वोच्येते । आत्मनोऽर्थे त्वया लोको यत्नतः सर्व आहृतः (भा० शल्य० ४।४१) । आहतः क्षतः, हिंसितः । आङ्पूर्वो हन्प्रायेण प्रहरणे ताडने दृष्टः । न हि तद्विद्यते भूतमाहतं यन्न कम्पते (अवदा० जा० ३१।१४) । आहतं ताडितम् । त्र्याहताः पञ्च पञ्चदश सम्पद्यन्ते (आपटेकोषः) । त्र्याहतास्त्रिभिरभ्यस्ताः । सूर्याब्धिसंख्यया द्वित्रिसागरैरयुताहतैः । एकैव मत्वेषु । नवाहतेषु (व० बृ० सं० ८।२२) । निघातिकाताडनादिना दीनारादिषु रूपं यदुत्पद्यते तदाहतमित्युच्यते (काशिका ५।२।१२०) । आहतं रूपमस्य रूप्यो दीनारः । ककुत्स्थ इत्याहतलक्षणोऽभूत् (रघु० ६।७१) । गुणैः प्रतीते तु कृतलक्षणाहतलक्षणौ (अमरः) । आहतान्युद्घोषितानि लक्षणानि यस्यासावाहतलक्षण इति स्वामी । आहतमभ्यस्तं लक्षणं नाम यस्य स तथोक्त इत्येवमपि व्युत्पादयन्ति । तत्राहतास्त्रीणि शतानि शङ्कवः (अथर्व० १०।८।४) । आहता निखाताः । ब्राह्मण इदमाहतम् । सूत्र इदमाहतम् (नि० १।१।६ इत्यत्र दुर्गः) । आहतं पठितम् । नेव मांसे न पीवसि नेव मज्जस्वाहतम् (अथर्व० १।११।४) । आहतमाबद्धम् । आहृत्य सर्वसंकल्पान्सत्त्वे चित्तं निवेशयेत् (भा० शां० २४६।६) । आहृत्य विनाश्य । तेषु यत्राहृत्य प्रायश्चित्तमनुक्तम् (आप० ध० १।१०।२८।१४) । आहृत्य पठित्वा । शब्दत इत्यर्थः । दोषवत्स्वपतनीयेषु पतनीयव्यतिरिक्तेषु कर्मसु येष्वाहृत्य प्रायश्चित्तं नोक्तम् । (आप० ध० १।२६।१२ उज्ज्वलायाम्) । तस्य द्वावनध्यायौ यदात्माशुचिर्यद् देश इत्याहृत्य वक्ष्यमाणत्वात् (आश्व० गृ० ३।१।४ टीकायाम्) । उक्तोऽर्थः ।

—हि (हि गतौ वृद्धौ च) । तत्र त्वं मम नैवासि रामश्च वनमाहितः (रा० २।६१।२५) । वनमाहितो वनं प्रहितः, वनं प्रस्थापितः ।

—हु (हुँ दानादनयोः, आदान इत्येके, प्रीणने इति चापरे) । जिन्वन्ति विश्वे तं देवा यो ब्राह्मण ऋषभमाजुहोति (अथर्व० ६।४।१८) । आङर्थे विशेषकृन्न ।

—हृ (हृञ् हरणे) । आहर सोम्य हस्तम् (बृ० उ० २।२।१३) । आहर गृहाण । समिधं सोम्याहरोप त्वा नेष्ये (छां० उ० ४।४।५) । नास्याग्नि गृहाद्धरन्ति नान्यत आहरन्ति (आप० ५।२।७।६) । आहरन्ति आनयन्ति । आजह्रतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम् (कु० १।३३) । आजह्रतुः=दधतुः । स विश्वजितमाजह्रे यज्ञं सर्वस्वदक्षिणम् (रघु० ४।८६) । आजहार संबभार संबिभरांबभूव, वितेने, चकार । मुनिस्तेषां पूजामथाहरत्

(भा० वन० १८४।६)। पूजोपकरणसङ्ग्रहपूर्वं पूजां समपादयद् इत्युक्तं भवति। आजहारर्जुनो राज्ञो राजसूयं महाक्रतुम् (भा० आदि० १।१२६)। सम्पादितवानित्यर्थः। प्रस्वापनास्त्रं द्रुतमाजहार (कि० १६।२५)। आजहार आचकर्ष। न खल्वकारणं कोपमाहरेन्नरपुङ्गवः (रा० ४।३३।३३)। कोपं दधीतेत्यर्थः। ततः प्रभृत्यसौ दृश्यं नाजहार न चात्यजत् (यो० वा० ५।१२।३)। आजहार स्वी चकार। निर्वासनः शान्तमना वद व्रज पिबाहर (यो० वा० ६ (२) १०६।२४)। आहर अभ्यवहर भुङ्क्ष्व। राम निर्वासनीभावमाहरस्व विवेकतः (यो० वा० ४।३४।२७)। आत्मन्यापादयेत्याह। उपशमसुखमाहरेत् पवित्रम् (यो० वा० ५।८।१८)। आहरेत्=निर्विशेत् भुञ्जीत, अनुभवेत्। (इन्द्रः) तम् (दशरात्रम्) आहरत् तेनायजत (तै० सं० ७।२।५।२)। आहरतिरिय संभारसमाहरणे वर्तते। सार्धं स्वपरिवारेण शीघ्रमाह्रियतामिति (यो० वा० ६ (२) १३४।१४)। आह्रियतामानीयताम्। न हृष्यन्ति न कुप्यन्ति नाविशन्त्याहरन्ति च (यो० वा० ६ (२) ६२।२)। आहरन्ति समाहरन्ति। ऋत्विजो वृत्वा मधुपर्कमाहरेत ( १।२१।१)। आहरेत उपहरेत्, दद्यात्। आहरेत त्वयाज्ञप्तः सन्तानार्थं कुलस्य च (रा० १।११।५)। आहरेत निर्वहेत। क्रतुमिति शेषः। आहरेत् अर्जयेत्। कीर्तिमाहरिष्यति मे सुता (रा० १।६७।२२)। आहरिष्यति सम्पादयिष्यति। ब्रह्मचार्याहरेद् भैक्षम् (मनु० २।१८३)। आहरेद् अर्जयेत्। ददानाश्च ये मर्त्या आहरिष्यन्ति सन्ततिम् (भा० अनु० १२५।७५)। नाहारयति सन्त्रासं बाहू रामस्य संश्रिता (रा० २।६०।३०)। नाहारयति न करोति, न सम्प्राप्नोति। रोषमाहारयत्तीव्रं निहन्तुं समरे खरम् (रा० ३।३०।१६)। रोषमकरोत्। दृष्ट्वा मां बान्धवाः सर्वे हर्षमाहारयन्पुनः (भा० वन० २२।१६)। आहारयन्प्राप्नुवन्। चिरस्य दृष्ट्वा वार्ष्णेयं बाष्पमाहारयत्पृथा (भा० उ० ६०।३)। आहारयत् व्यहरत्, व्यसृजत्, अमुञ्चत्। मातृवद् भोजयित्वाग्रे शिष्टमाहारयत्तदा (भा० वन० ५०।१०)। आहारयत् अभुङ्क्त, आश्नात्। भोज्यान्याहारयन्ति च (भा० शां० ५६।५०)। उक्तोऽर्थः। सम्प्राप्तमाहरन्स्वस्थ आकाश इव तिष्ठति (यो० वा० ६ (२) १३४।१४)। आहरन् भुञ्जानोऽनुभवन्निर्विशन्। स वल्कवासांसि तवाधुनाऽऽहरन् करोति मन्युं न कथं धनञ्जयः (कि० १।३५)। आहरन् परिदधानः। समतामलमाश्रित्य सम्प्राप्तं कार्यमाहरन् (यो० वा० ५।१३।३६)। आहरन् आचरन् अनुतिष्ठन्। हर्षामर्षविनिर्मुक्तः प्रत्यहं कार्यमाहरन् (यो० वा० ५।६०।४)। उदितचर एवार्थः। आहार्यमाणे (अन्ने) कृमयो व्यदृश्यन्त सहस्रशः (भा० मौ० २।१४)। आहार्यमाणे भुज्यमाने। येनाहृतास्त्रिशतं वाजिमेधाः (भा० भीष्म० २२।१५)। आहृताः संभृताः कृताः। यदेव वव्रे तदपश्यदाहृतम्

(रघु० ३।६) । **आहृतमुपनीतम्** । अयाचिताहृतम् (याज्ञ० १।२१५) । **आहृतमुपहृतं दत्तम्** । आहृतपुण्डरीका श्रीः (रघु० १८।८) । **गृहीतपद्मेत्यर्थः** । देवासुरकुटुम्बिभ्यः...अपरस्परमाहृताः (यो० वा०)। **आहृता हृताः अपहृताः** । दुःशासनस्य पापस्य यन्मया नाहृतं शिरः (भा० वि० २१७) । **नाऽऽहृतं छित्त्वा नानीतमिति नीलकण्ठः** । हरिरित्याहृतः (भा० पु० ८।१।३०) । **आहृत इति व्याहृतं व्यपदिष्टमाह । अपूर्वः कविकल्पितोर्थः । व्याहरतिरेव तत्रार्थे रूढ इति नाद्रियते** । आहृत्य सर्वभोगेभ्यो मनो मर्कटचञ्चलम् (यो० वा० ५।१।६) । **आहृत्य प्रत्याहृत्य संहृत्य** । अत आहर्तुमिच्छामि पार्वतीमात्मजन्मने (कु० ६।२८) । **पत्नीत्वेन परिग्रहीतुमित्यर्थः** । स गूढशल्यमाहर्तुं देहाच्छक्नोति देहिनाम् (सुश्रुत० सूत्र० ५।१७)। **आहर्तुमुद्धर्तुम्** । अन्यच्छ्रोतुमथाहर्तुं शान्तं नेच्छति मे मनः (यो० वा० ६ (२) २०१।१३) । **आहर्तुं प्राप्तुम्** । न त्वाहार्यो गुणोऽस्य सः (यो० वा० ५।१२।३) । **आहार्य उत्पाद्यः** । प्रभुतावृंहितं चेतो नाहार्यमभिनन्दति (यो० वा० ५।४६।६) । **आहार्यं बाह्यं संस्कारसाधनम्** । न रम्यमाहार्यमपेक्षते गुणम् (कि० ४।२३) । **आहार्यं बाह्यम् । गुणं संस्कारम् । अयं चन्द्रो मुखमित्यादौ चन्द्रभिन्ने मुखे चन्द्राभेदज्ञानं तच्चाहार्यमेव** (वाचस्पत्यम्) । **आहार्यमभिप्रायकृतं सङ्कल्पकल्पितम्** । दहेयुराहार्य्येणाहिताग्निम् (आश्व० श्रौ० ६।१०) । **अन्यत आनीतेनाग्निना** । मधुमान्भवति मधुमदस्याहार्यं भवति (अथर्व० ६।१।२३) । समिदाहरणाय प्रस्थिता वयम् (शा० १) । **आहरणमानयनम्** । को लम्बयेदाहरणाय हस्तम् (रघु० ६।७५) । **आहरणं ग्रहणम्** । अश्वमेधस्य कौरव्य चकाराहरणे मतिम् (भा० आश्व० ७१।१७) । **आहरणमुपकरणग्रहणपूर्वकं निर्वहणम्** । सत्त्वानुरूपाहरणीकृतश्रीः (रघु० ७।३२) । **आहरणं यौतकम् । अमरस्तु यौतकादि तु यद् देयं सुदायो हरणं च तत् इति हरणं सुदायेऽर्थे पठति । आङाऽनियतवस्तुदानं ध्वन्यत इति मल्लिः** । बालः कृतोपनयनो वेदाहरणतत्परः (वि० पु० ३।६।१) । **वेदाहरणं वेदग्रहणम्** । तन्महाभैरवीं विद्यां धर्मश्रद्धयोऽऽहरणाय प्रस्थापयामः (प्र० च० ) । **आहरणं ग्रहणम्** । प्रसह्य वित्ताहरणं न कल्कः (भा० आदि० १।२७५) । **प्रकर्षेण दुःखं सोढ्वा वित्तार्जनम्** । आहर्ता राजसूयस्य (हरि० १।२३।२५) । **आहर्ता कर्ता** । प्रतिहन्ति मनो मेऽद्य राजसूयो दुराहरः (भा० सभा० १६।५) । **दुराहरो दुष्करानुष्ठानः** । आहारः फलमूलानि प्रजानामभवत्तदा (हरि० १।६।१८) । **आहारो भोज्यम्, भक्ष्यम्** ।

**—ह्वे (ह्वेञ् स्पर्धायां शब्दे च)** । कंसश्चाणूरमाह्वयते (सि० कौ०) । **स्पर्धमानस्तस्याह्वानं करोतीत्यर्थः** । आह्वत चेदिराण्मुरारिम् (शिशु० २०।१)।

उक्तोऽर्थः । आह्वयद् द्वैरथेन (भा० शां० ५।१) । आहूतवानित्यर्थः । एकैक आवयो रथमारुह्य परस्पर योधयत्वित्यामन्त्रयतेति यावत् । हन्तैनं ब्रह्मोद्यमाह्वयामहा इति (श० ब्रा० ११।४।१।२) । ब्रह्मणि वादाय तमामन्त्रयामहै तदभिमवेच्छयेति ब्राह्मणार्थः । स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च (मनु० ८।७)। प्राणिद्यूतमाह्वयः । प्राणिद्यूतं समाह्वय इत्यमरे पाठः । आह्वय आह्वेति नामधेयपर्यायौ । तथा चामरः पठति—अथाह्वयः । आख्याह्वे अभिधानं च नामधेयं च नाम च । रामायणाह्वयं काव्यम् । वसिष्ठाह्वो मुनिसत्तमः । नगरं गजसाह्वयम् । (हस्तिनापुरम्) । गजेन हस्तिना (हस्तिनाम्ना नृपतिना) समानं आह्वयो यस्य तत्तथाभूतम् । वृद्धेरष्याह्वया इमे (अमरः) । आह्वया नामानि, पर्यायाः । पूर्ण आहावो मदिरस्य मध्वः (ऋ० १०।११२।६) । आहावो निपानम् । निपानमाहावः (पा० ३।३।७४) । आहावस्तु निपानं स्यादुपकूपजलाशये इत्यमरः । आहवो युद्धम् । आह्वायका आह्वातारः । आह्वायकान्भूमिपतेरयोध्याम् (भट्टि० २।४३) । अत्र भविष्यदर्थकेन ण्वुला योगे षष्ठीनिषेधशिष्टिर्नादृता कविना । भूमिपतिमिति तूचितम् ।

## नि

—अच् (अञ्चु गतिपूजनयोः अचु इत्येके) । अथाङ्गुलीर्न्यचति (श० ब्रा० ३।१।३।२५) । न्यचति=न्यञ्चति=न्यक्नाः करोति ।

—अञ्च् (अञ्चु गतिपूजनयोः) । द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति (काशिका १।३।६४) । न्यञ्चि अवाङ्मुखानि । तस्मात्पशवो न्यक्नाः (भुग्नाः) । श्वानः सिंहमिव दृष्ट्वा ते न विन्दन्ते न्यञ्चनम् (अथर्व० ४।३६।६) । न्यञ्चनम् अपिधा, गुप्तिः, अन्तर्धिस्थानम् ।

—अञ्ज् (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु) । यथा मक्षा इदं मधु न्यञ्जन्ति मधावधि (अथर्व० ६।१।१७) । न्यञ्जन्ति निलिम्पन्ति । त्वष्टा ग्नास्वन्तर्न्यानजे (ऋ० १।१६१।४) । न्यानजे=अन्तर्विवेश, अन्तर्दधे । मेधां मे विष्णुर्न्यनक्त्वासन् (अथर्व० १८।३।११) । न्यनक्तु संयोजयतु । आसनि मुखे ।

—अस् (असु क्षेपे) । अथ पुनर्लोष्टं न्यस्यति (श० ब्रा० ३।२।२३१) । न्यस्यति निक्षिपति अधःक्षिपति । दृष्टिपूतं न्यसेत्पादम् (मनु० ६।४६) । न्यसेत्=न्यस्येत्=निदधीत । अर्थान्तरं न्यस्यति (शिशु० १।१७ इत्यत्र मल्लिः) । अपि प्राणान् न्यसिष्यन्ति (रा० २।४६।२०) । जीवितं त्यक्ष्यन्तीत्यर्थः । श्रोतुं चैव न्यसेद्राजा प्राज्ञान्सर्वार्थदर्शिनः (भा० शां० ६९।२८) । न्यसेत्

अधिकुर्यात्, नियुञ्जीत । क्रय्यं न्यस्तं क्रयाय यत् (अमरः) । न्यस्तं रचितं प्रसारितम् । स यदि प्रतिपद्येत यथान्यस्तं यथाकृतम् (मनु० ८।१८३) । न्यस्तं निक्षिप्तमुपनिहितम् । भगवन्न्यस्तशस्त्रोऽहम् (हरि० १।११।४२) । न्यस्तशस्त्रस्त्यक्तायुधः । न्यस्तदण्डा वयं राजन् (रा० ३। , ) । न्यासितः समरे शस्त्रं भीष्मेण भरतर्षभ (भा० भीष्म० १७।१३) । न्यासितः त्याजितः । स राज्यं सचिवे न्यस्य (भा० ३।९९२२) । न्यस्य समर्प्य । धनुर्न्यस्य पृषत्कांश्च पञ्चभिः पुरुषर्षभैः (हरि० १।३०।२१) । धनुर्न्यस्य संन्यस्य परित्यज्य । पञ्चभिः पुत्रैः कृतकृत्यो भूत्वेति वाक्यशेषार्थः । भीम नारायणास्त्रे मे गोषु च ब्राह्मणेषु च । एतेषु गाण्डिवं न्यस्यमेतद्धि व्रतमुत्तमम् (भा० द्रोण० १९९। ५३) ॥ न्यस्यं न्यास्यं त्याज्यमप्रयोक्तव्यम् । यथान्यासमेवास्तु (भाष्ये) । न्यासः सूत्रे पदन्यासः । काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः (गीता १८।२) । न्यासस्त्यागः । संवत्सरेण सोऽल्पायुर्देह-न्यासं करिष्यति (भा० वन० २९४।२५) । देहन्यासो देहत्यागो निधनम् । चरणन्यासैः कम्पयन्निव मेदिनीम् (रा० ४।१४।५) । चरणन्यासैः पादनिक्षेपैः । करन्यासं ततः कुर्याद् द्वादशाक्षरविद्यया (भा० पु० ६।८।६) । खादन्ति हस्तिनं न्यासैः क्रव्यादा बहवोऽप्युत (भा० शां० ८।१८) । न्यासैः सर्वकर्मत्यागैरुपेतं हस्तिनम् इत्याह ।

—इ (इण् गतौ) । स यत्रायं शारीर आत्मा बल्यं नीत्य (=नि इत्य) संमोहमिव न्येति (श० ब्रा० १४।७।२।१) । न्येति निगच्छति निश्चयेन प्राप्नोति । तद्यथैकपात् पुरुषो यन्नेकचक्रो वा रथो वर्तमानो भ्रेषं न्येति (गो० ब्रा० पूर्व० ३।२) । भ्रंशमाप्नोतीत्याह । वाश्रेव वत्सं सुमना दुहाना पतिरिव जायामभि नो न्येतु (ऋ० १०।१४९।४) । अमून्हेति पतत्रिणी न्येतु (अथर्व० ६।२९।१) । न्येतु नितरां गच्छतु । न्यङ् नियन्त्युपरस्य निष्कृतम् (ऋ० १०।९४।५) । न्यङ् नियन्ति=अन्तर्विशन्ति । नि यन्नियन्त्युपरस्य निष्कृतिम् (अथर्व० ६।४९।३) । नियन्ति निर्गच्छन्ति निष्कृतिं निर्माणमिति सायणः । ये केचन ग्राम्याः पशवो ये चारण्या अणिमानमेव तत् परुषिमाणं नियन्ति (ऐ० ब्रा० ४।२६) । युध्यमाना शरैः···ध्वजिनी न्यगात् । अन्योन्यम् (भा० भीष्म० ४८।२०) । न्यगात्=अन्तः प्राविक्षत् । एनो मा निगां कतमच्चनाहम् (ऋ० १०।१२८।४, अथर्व० ५।३।४) । मा दम्पती पौत्रमघं नि गाताम् (अथर्व० १२।३।१४) । पुत्रादागतं व्यसनं माऽऽपत्साताम् इत्याह । नियन्त्यनेनेति न्यायं इति दीक्षितः (सि० कौ० ३।३। ३७) । यन्नियानं न्ययनं संज्ञानं यत् परायणम् (ऋ० १०।१९।४) । य उदानट् परायणं य उदानण्न्यायनम् (अथर्व० ६।७७।२) । न्यायनं=न्ययनं नीचीनं

गमनमिति सायणः । अपामिदं न्ययनं समुद्रस्य निवेशनम् (वा० सं० १७।७, अथर्व० ६।१०६।२)। निलयनमावासस्थानम् । न्ययं गतः पापः (काशिका ३।३। ३७)। न्ययो नीचैर्गतिः। अधोगतिः।

—ईर् (ईर गतौ)। उतादः परुषे गवि सूरश्चक्रं हिरण्ययं न्यैरयद्रथीतमः (ऋ० ६।५६।३)। न्यैरयत् प्रैरयत् प्राणुदत् ।

—उच् (उच समवाये)। तत्र सेदिर्न्युच्यतु (अथर्व० २।१४।३)। नीचीना समवैतु। सेदिर्निर्ऋतिः सादयतीति । नि यो गृभं पौरुषेयीमुवोच (ऋ० ७।४।३) । असावि देवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेमुवोच (ऋ० ७।२१।१)। न्युवोच परितोषमाप। संगतोऽभूदिति वा।

—उब्ज् (उब्ज आर्जवे)। भाजनानि सम्प्रक्षाल्य न्युब्जति (बौ० ध० ३। २।२।८)। अवाङ्मुखानि करोति।

—उष् (उष दाहे)। सत्यं धूर्वन्तमचितं न्योष (ऋ० १०।८७।१२)। पराशृणीतमचितं न्योषतम् (ऋ० ७।१०४।१)। न्योषतं नितरां दहतम्। भस्मसात्कुरुतमित्यर्थः।

—ऊह् (ऊह वितर्के)। न्योहतेऽधा नियुत ओहते (ऋ० ५।५२।११)। न्योहते =न्योहन्ते =अवदधते।

—ऋ (ऋ गतौ)। तमग्निमस्ते वसवो न्यृण्वन् (ऋ० ७।१।२)। न्यृण्वन् न्यक्षिपन्। न्यर्पयतं वृषणा तमोवृधः (ऋ० ७।१०४।१)। न्यर्पयतम् =नीचैर्गमयतम्, निर्ऋतिं प्रापयतम्। इन्द्रासोमा तपतं रक्ष उब्जतं न्यर्पयतम् (अथर्व० ८।४।१)। उक्तोऽर्थः। यथा वातेन प्रक्षीणा वृक्षाः शेरे न्यर्पिताः (अथर्व० १०।३।१५)। न्यर्पिता नीचैर्गमिताः, पातिताः, भुग्नाः।

—ऋच्छ् (ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु)। उप यद्धीदं किं च जायतेऽस्यां तदुपजायते ऽथ यन्न्यृच्छत्यस्यामेव तदुपोप्यते (श० ब्रा० २।३।४।६)। न्यृच्छति नीचैर्गच्छति निखातं भवति।

—कम् (कमु कान्तौ, कान्तिरिच्छा)। तदग्निर्न्यकामयत (तै० सं० १।५। १।१)। न्यकामयत नितरामकामयत। ज्यायो भागधेयं निकामयमानः (तै० सं० १।५।२।२)। निकामयमानोऽभीच्छन्। माध्यन्दिनं वा एष (सोमः)। निकामयमानोऽभ्यतिरिच्यते (पञ्च० ब्रा० ६।७।२)। उक्तोऽर्थः। तं (उत्तरसवनसोमं) निकामयमानोऽभ्यतिरिच्यते (पूर्वसवनसोमः) (का० श्रौ० २५। १३।१६)। निकामे निकामे नः पर्जन्यो वर्षतु (वा० सं० २२।२२)। यदा यदास्माभिः काम्येत तदा तदेत्युक्तं भवति।

—कष् (कष हिंसायाम्)। उद्धरन्ति कृमीनङ्गाद् दशतो निकषन्ति च

(भा० शां० १८०।१४)। निकषन्ति कण्डूयनेन हिंसन्ति। सभानिकषकटस्व-स्तरांश्च (आप० ध० १।८।१३)। निकषो नाम कृषीवलानामुपकरणं कृष्टं क्षेत्रं येन समीक्रियते, यच्च कस्मिंश्चिदारूढे केनचिदाकृष्यते इति हरदत्त उज्ज्वलायाम्। निकषिष्यते निकषमाणाय निकषिताय (तै० सं० ७।१।१६।३)।

—काश् (काशृ दीप्तौ)। प्रेष्यन्तं निकाशं मे कालेनाल्पीयसा पुनः (भा० ३।१६३१)। निकाशः सामीप्यम्। नीकाश इति तु पाणिनीयाः। क्वचिन्मणिनिकाशोदाम् (नदीम्) (रा० २।६५।१०)। स्फटिकसदृशोदका-मित्याह।

—कित् (कित निवासे)। नय मां स्वनिकेतनम् (हरि० १।२६।४२)। निकेतनं वसतिर्गृहम्।

—कृ (डुकृञ् करणे)। नि काव्या वेधसः शश्वतस्कः (ऋ० १।७२।१)। नीचैरकरोः। अवानयः। मा नो नि कः पुरुषत्रा (ऋ० ३।३३।८)। मा स्मास्मा-नवमानयः। तेना नि कुर्वे त्वामहं यथा तेऽसानि सुप्रिया (अथर्व० ७।३८।२)। निकुर्वे स्ववशे करोमीत्यर्थः। मा त्वा नि क्रन् पूर्वचित्ता निकारिणः (अथर्व० ७।८७।३)। अनपकारिणं त्वां स्वाधीनं मा कार्षुरित्याह। निकारिणोऽप-कारिणः। येना निचक्र आसुरीन्द्रं देवेभ्यस्परि (अथर्व० ७।३८।२)। उक्तोऽर्थः। देवेभ्यस्परि देवान्वर्जयित्वा। परिर्वर्जने। अयं स शिङ्क्ते येन गौरभीवृता... सा चित्तिभिर्नि हि चकार मर्त्यम् (ऋ० १।१६४।२९)। त्वां रुद्र निचिकीर्षति (अथर्व० ११।२।१३)। निचिकीर्षति अभिभवितुमिच्छति प्रसोढुमभिलषति। सायणस्त्वाह—निपूर्वः करोति हिंसने वर्तत इति। न चानि क्षिप्तदण्डस्य परेषामनिकुर्वतः (अवदा० अपुत्र जा० १३)। स निकुर्वतोऽतिर-स्कुर्वतः, शाठ्यं वाऽनाचरतः। सुबहूनि नृशंसानि पुत्रैस्तव जनेश्वर। नि-कृतानीह पाण्डूनां नीचैरिव यथा नरैः (भा० भीष्म० ६५।२०)॥ जरायुजानि भूतानि निकृतान्यपि (भा० आश्व० ४२।३८)। निकृतानि प्राकृतानि। निकृत-प्रज्ञः (रा० ५।२३।६)। उक्तोऽर्थः। निकृतस्त्वनृजुः शठ इति कोशः। दुर्योधनेन निकृता वर्षमद्य चतुर्दशम् (भा० उ० ९०।६०)। निकृता वञ्चिताः। अस-कृन्निकृताः पूर्वं मत्स्यशाल्वेयकैः प्रभो (भा० वि० ३०।२)। असकृच्चापि निकृतो न च निर्विद्यसे ततः (भा० शां० १७७।१८)। अनन्तरोदीरित एवार्थः। न हि ते व्युपशाम्यन्ति निकृता वा निराकृताः (भा० वन० ३०।३०)। म्लेच्छा-श्चान्ये बहुविधाः पूर्वं ये निकृता रणे (भा० आश्व० ७३।२५)॥ निकृताः परा-भूताः। अस्माभिर्हृर्यप निकृतो वर्षाणीह त्रयोदश (भा० वि० ४६।१८)। निकृतो वमतिः। विमार्गयो ग्रावा निकृत इव तेजांसि वमति (उत्तर० ६।

१४)। उक्तोऽर्थः। नास्ति त्वनिकृतार्थानां रणेऽरीणां प्रतिक्रिया (भा० वन० ८६।१५)। ततेजस्वी पुरुषः परकृतनिकृतिं कथं सहते (भर्तृ० २।३०)। निकृतिः पराभवः। अवमानः। स्वाग्रासनापनयनान्निकृतिर्न सोढा (मुद्रा० ४। ११)। उक्तोऽर्थः। अनिकृतिनिपुणं ते चेष्टितं मानशौण्ड (वेणी० ५।२१)। निकृतिः शाठ्यम्। निकृत्योपचरन्वध्य एष धर्मः सनातनः (भा० वन० १२।७)। उक्तोऽर्थः। निकृत्या कामये नाहं सुखान्युत धनानि वा (भा० सभा० ५९। १३)। नीचेन कर्म्मणेत्यर्थः। हत्वा वै पुरुषो राजन्निकर्तारमरिन्दम (भा० वन० ३५।१०)। निकर्ता वञ्चकः। मृगः स मृगयुस्त्वं न त्वा निकर्तुमर्हति (अथर्व० १०।१।२६)। निकर्तुमभिभवितुम्, धर्षयितुम् अधरीकर्तुम्। अवश्यं तैर्निकर्तव्यमस्माकं तत्प्रियैषिभिः (भा० वन० ३५।३१)। प्रयोक्तव्यमस्मासु शाठ्यमित्यर्थः। तीर्णो निकारार्णवः (वेणी० ६।४३)। निकारोऽवहेलाऽपमानः। अलमङ्ग निकारोऽयं त्रयोदश समाः कृतः (भा० उ० १२९।४७)। निकारोऽपकारः।

—कृत् (कृती छेदने)। क्षालयन्नपि वृक्षाङ्घ्रीन्नदीवेगो निकृन्तति (हितोप० ४।५९)। निकृन्तति मूलोच्छेदं करोति। निकृन्त छिन्धि भिन्धीति परवर्मविकर्तनम् (भा० आश्व० ३७।४)। निकृन्त समूलमुद्धर। विश्वासाद्भय-मुत्पन्नं मूलान्यपि निकृन्तति (पञ्चत० २।३९)। निशब्दो निःशेषत्वे। भल्ल-निकृत्तकण्ठैः (रघु० ७।५८)। यानि शप्तानि गेहानि निकृत्तानीव कृत्यया (भा० अनु० ४६।७)। एतान्निकृत्य धीमान् बाणसङ्घैरतन्द्रितः (भा० आश्व० ३१।३)। निकृत्य छित्त्वा। निकर्तनमिवात्युग्रं लाङ्गूलस्य महाहरिः (भा० द्रोण० १७०।२५)। स्पष्टोऽर्थः। उत्सादनममित्राणां परसेनानिकर्तनम् (भा० वन० १६७।५५)। निकर्तनं निसूदनं निबर्हणं कदनम्। निकर्तने देवने योऽद्वितीयः (भा० उ० ३०।२८)। निकर्तनेऽर्थापहारे।

—कृष् (कृष विलेखने)। यः संस्थितः पुरुषो दह्यते वा निखन्यते वापि निकृष्यते वा (भा० आदि० ९०।१७)। निकृष्यतेऽपवाह्यते नदीरयेण। निकर्षणमधस्तात् कर्षणम्। निशब्दो नीचैस्त्वे। नितरां वा कर्षणं निकर्षणम्। (मौर्यनृपस्य लक्ष्मीम्) निकृष्यमाणामिव लक्षयामि (मुद्रा० २।२)। निकृष्यमाणाम् अधः पात्यमानाम्। निकृष्टयुद्धं संसक्तं महदा-सीत्सुदारुणम् (भा० द्रोण० १८७।१५)। निकृष्टयोः सन्निकृष्टयोः संश्लिष्टयोर्युद्धम्। नातिदूरे निकृष्टे वा (सुश्रुत० १।१९।१४)। निकृष्टे संनिकृष्टे। सुनिकृष्टा च ते योनिः (भा० आदि० ७४।८०)। निकृष्टाऽवरा, जघन्या। सर्वे राज्ञो मैथिलस्य मैनाकस्येव पर्वताः। निकृष्टभूता राजानो वत्सा

ह्यनडुहो यथा (भा० वन० १३४।५) ॥ उक्तोऽर्थः । निकृष्टप्रतिकृष्टार्ववयाप्य-रेफावमाधमा इत्यमरः पर्यायान्पठति । संलीनवालधिराकृष्य करं निकृष्टजानुः (तन्त्रा० ३।३) । निकृष्टजानुः =अन्वञ्चितजानुः । वयमेनं हनिष्यामो निकृष्या-मो धनाद् बहिः (भा० द्रोण० १७।१५) । निकृष्य आकृष्य । यत्र पदार्थ-स्वरूपं प्रस्तावानुगुण्येन केनापि निकर्षेणोत्कर्षेण वा युक्तम् (वक्रोक्ति० १) । निकर्षोऽपकर्षः । सन्निवेशो निकर्षणम् (अमरः) । निकर्षणमिति सर्वानन्दः पठति, निकर्षण इति तु स्वामी । निकृत्तं कर्षणमत्रेति व्युत्पत्तेर्निकर्षणशब्देन विहारार्थः प्रकाशोऽवकाश उच्यते । यथा हि कनकं शुद्धं तापच्छेदनिकर्षणैः । परीक्षेत···(भा० शां० ३२७।४६) ॥ निकर्षणं निकषणम् ।

—कृ (कृ विक्षेपे) । निकारो धान्यस्य (काशिका ३।३।३०)। धान्यस्याव-क्षेप इत्यर्थः । निशब्दोऽवस्यार्थे ।

—क्रम् (क्रमु पादविक्षेपे) । सोदक्रामत् सा (विराट्) गार्हपत्ये न्यक्रामत् (अथर्व० ८।१०।२)। न्यक्रामत् अन्तः प्रविवेश, न्यलीयत । तौ (मित्रावरुणौ) ततो गां समैरयतां सा यत्र यत्र न्यक्रामत् ततो घृतमपीडयत तस्माद् घृतपद्यु-च्यते (तै० सं० २।६।७।१) । न्यक्रामत् प्राविशत्, पादान्वा न्यधत्त । महान्तं चिदर्बुदं न्यक्रमीः पदा (ऋ० १।५१।६) । आस्कान्त्सीः, अधस्पदमकार्षीः । मधुमन्मे निक्रमणम् (अथर्व० १।३४।३)। निक्रमणं निकटगमनम् । संनिहितार्थेषु प्रवर्तनम् । निक्रमणं निषदनं विवर्तनं यच्च पड्वीशमर्वतः (ऋ० १।१६२।१४)।

—क्रीड् (क्रीडृ विहारे) । तस्याश्चत्वारि चत्वार्यक्षराणि निक्रीडयन्निव गायति (लाट्या० श्रौ० ७।१२।६) ।

—क्षिप् (क्षिप प्रेरणे) । अन्नं भूमौ श्वचाण्डालवायसेभ्यश्च निक्षिपेत् (याज्ञ० १।१०३) । निक्षिपेत् स्थापयेत् । निक्षिप्य चरणं रक्ताक्ते मेषचर्मणि (राज० ५।३२५) । निक्षिप्य न्यस्य निधाय । गात्राणि कान्तासु च निक्षिपन्ति (रा० ५।११।१२) । समावेशयन्ति । निक्षिपैतद् धनुस्तात प्राप्तोसि परमां गतिम् (भा० वन० ३०।४७) । निक्षिप त्यज । निक्षिपाम्यहमग्नित्वं त्वमग्निः प्रथमो भव (भा० वन० २१७।१६) । निक्षिपामि त्यजामि । निक्षेप्स्यन्ति च शस्त्राणि वाहनेभ्योऽवरुह्य ये (भा० द्रोण० १९९।४१) । निक्षेप्स्यन्ति त्यक्ष्यन्ति । हिरण्यं भाण्डागारेषु निक्षिपेत् (याज्ञ० १।३२७) । यो यथा निक्षेपेद् हस्ते यमर्थं यस्य मानवः (मनु० ८।१८०) । निक्षिपेत् रक्ष्यमित्यर्पयेत् । पुत्रेषु भार्यां निक्षिप्य (मनु० ६।३) । अवेक्ष्येयमित्यर्पयित्वा । राज्ये रामम-

निक्षिप्य पिता मे विनशिष्यति (रा० २।५१।१७)। **राज्येऽनधिकृत्य, अप्रतिष्ठाप्य।** रक्षितं वर्धयेद वृद्ध्या वृद्धं पात्रेषु निक्षिपेत् (मनु० ७।१०१)। **निक्षिपेत् प्रतिपादयेत्, दद्यात्, वितरेत्।** वलं प्रसादयेद्राजा निक्षिपेद् बलिनो नरान् (भा० आश्रम० ७।१७)। **अधिकुर्यादित्यर्थः।** निक्षिप्तवादेषु जनाधिपेषु (भा० आदि० १८७।२६)। **त्यक्तधनुरुद्यमनकयेषु इति नीलकण्ठः।** निक्षिप्तक्षितिरक्षस्तु सर्वमेव विमुञ्चति (बृ० श्लो० सं २।४)। **निक्षिप्ता त्यक्ता।** सशोणितैस्तेन शिलीमुखाग्रैर्निक्षेपिताः केतुषु पार्थिवानाम् (वर्णाः) (रघु० ७।६२)। **निक्षेपिता न्यस्ता उल्लिखिता इत्यर्थः।** निक्षिप्य मानं दर्पं च वासुदेवसहोदरा (भा० शल्य० ५।२०)। **निक्षिप्य विहाय उत्सृज्य।** अलं मान्यानां व्याख्यानेषु कटाक्षनिक्षेपेण (सा० द०)। **कृतं तिर्यग्दृष्टिपातेनेत्यर्थः।** निक्षेपे पतिते हर्म्ये श्रेष्ठी स्तौति स्वदेवताम्। निक्षेपी म्रियते तुभ्यं प्रदास्याम्युपयाचितम् (पञ्चत० १।१४)॥ **निक्षेपो न्यासः।** निक्षेपस्वर्णसम्पूर्णकटाहजठरा धराम् (शि० भा० ३०।६)। **निक्षेपो निधिः।**

—**खन्** (**खनु अवदारणे**)। हृदि रामो विराधस्य निचखान शरोत्तमम् (रा० ३।८।७)। ऊनद्विवर्षं निखनेत् (याज्ञ० ३।१)। **निखनेत् भूमाववटं कृत्वा निदध्यात्।** वसुधायां निचख्नतुः (रघु० १२।३०)। **उक्तोऽर्थः।** निचखान जयस्तम्भान् (रघु० ४।३६)। **निचखान निममौ, उच्छिश्राय।** असुरास्त्वां न्यखनन्देवास्त्वोदवपन् पुनः (अथर्व० ६।१०९।३)। निचखान शरं भुजे (रघू० १२।९०)। **समानच्छं शरेण बाहुमित्यर्थः।** शल्यं निखातमुदहारयतामुरस्तः (रघु० ९।७८)। **अन्तःप्रलुप्तं शल्यम् उदहारयतामुद्धृतवन्तौ।** गाढं निखात इव मे हृदये कटाक्षः (मालती० १।२९)। **उक्तोऽर्थः।** इमां महीं परितो निखनद्भिः (सगरात्मजैः) (भा० पु० ५।१९।२९)। **निखनद्भिः=उत्खनद्भिः। यथान्यत्र तथात्राप्यस्थान उपसर्गप्रयोगः कवेः।** यावतः कुरुते जन्तुः सम्बन्धानात्मनः प्रियान्। तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः (हितोप० ४।६९)॥ **निखन्यन्ते निमीयन्ते निहन्यन्ते।**

—**खिद्** (**खिद परिघाते**) त्वा युजा नि खिदत्सूर्यस्येन्द्रश्चक्रम् (ऋ० ४।२८।२)। **अवाधात्, अवाकृक्षत्, अवाक्षिपत्।**

—**गद्** (**गद व्यक्तायां वाचि**)। सार्पराज्ञीर्होता निगदेत् (शां० श्रौ० १३।११।७)। **निगदेत् शंसेत्, गायेत्।** नञभावे निगद्यते। **नञिति निपातोऽभावमाचष्टे।** मखांशभाजां प्रथमो मनीषिभिस्त्वमेव देवेन्द्र सदा निगद्यसे (रघु० ३।४४)। **निगद्यसे संज्ञायसे समाख्यायसे।** पुलकैः प्रियं नववधून्यंगदत् (शिशु० ९।७६)। **न्यगदत् असूचयत् प्रावेदयत् प्राख्यापयत्।** सिंहोरुसत्त्वं निजगाद सिंहः (रघु० २।३३)। **निजगाद अभ्युवाच।** धर्मे निगदितश्चैव पितुर्निर्देशकारकः (रा०

४।५३)। **धर्मे धर्माचरणे। निगदितः प्रख्यातः।** (गदाः) अस्मिञ्शास्त्रे निगदिताः (सुश्रुत० २।३८१।२१)। **निगदिता विशिष्य निर्दिष्टाः परिगणिताः।** यदधीतमविज्ञातं निगदेनैव शब्द्यते (नि० १।१८।१)। **निगद उच्चारणमात्रम्।** इति निगदव्याख्यातम्। **पाठमात्रेणैव व्यक्तार्थम्, व्याख्यानानपेक्षम्। निगदो गद्यात्मकं स्तोत्रम्। निगद इति च यजुरिति च मिथो भिद्येते। यजुरनुच्चैरुच्चार्यते।**

—**गम् (गम्लृ गतौ)।**···यत्र दुःखान्तं च निगच्छति (गीता १८।३६)। **निगच्छति प्राप्नोति। निर्निश्चयस्य द्योतकः स्यात्।** शश्वच्छान्तिं निगच्छति (गीता ९।३१)। गङ्गायाः सुरनद्या वै स्वादु भूत्वा यथोदकम्। महोदधेर्गुणाभ्यासाल्लवणत्वं निगच्छति (भा० भीष्म० ८३।५)। अमुं वा एते लोकं निगच्छन्ति ये पितृयज्ञेन चरन्ति (मै० सं० १।१०।१९)। बहु हि वाचा घोरं निगच्छति (श० ब्रा० ९।३।१।१२)। इज्यमाना देवता निगच्छति तस्मान्निगमस्थानानि (शां० श्रौ० १६।१०।६)। किमु स्वा्ा यन्निर्ऋतिर्निगच्छात् (ऋ० १०।१०।११)। **सर्वत्र निगमिः प्राप्तौ।** पा ाहुर्यः स्वसारं निगच्छात् (ऋ० १०।१०।१२)। **निगच्छात् निगच्छेत् संविशेत्, संभवेत्।** सूक्तवाके देवता निगच्छन्ति (शां श्रौ० १।१६।१०)। **सूक्तभाजोऽनुवाकभाजश्च भवन्तीत्युक्तं भवति।** तस्माद्यत्र क्व च कुरुक्षेत्रस्य निगच्छति (श० ब्रा० १४।१।१।२)। **कुरुक्षेत्रे तत्सदेशे वा निविशत इत्याह।** हते मित्रे निगतान् हन्ति वीरान् (ऋ० १०।१३२।५)। **निगता नीचैर्गता आक्रान्ताः।** तमिदं निगतं सहः (अथर्व० १३।४।१२)। **उत्तमे चैनं** प्रयाजे प्रागाज्यपेभ्यो निगमयेत्सूक्तवाके चाग्निहोत्रेणेत्येतस्य स्थाने (आश्व० श्रौ० २।१६)। **निगमयेत् अन्तः प्रक्षिपेत्।** स्वमतं निगमयन्परमतं शुश्रूषुः पृच्छति (इति वयम्)। **निगमयन् प्रतिज्ञाहेतूभयकथनपूर्वमुपसंहरन्।** उक्तमर्थं निगमयति (इति बहुत्र टीकासु)। **उपसंहरतीत्यर्थः।** पिपर्त्ति पपुरिरिति पृणातिनिगमौ वा प्रीणातिनिगमौ वा (नि० ५।२४।१)। **पृणात्यर्थं निगमयतः प्रत्याययत इत्यर्थः।** यदुद्वतो निवतो यासि (ऋ० १०।१४२।४)। **निवतो निगतानीति सायणः। नीचैर्गमनानीत्यर्थः।** अविचिकित्सा यावद निगन्तव्यम् इति हारीतः (आप० ध० १।४।१३।११)। **निगन्तव्यं नियमपूर्वमधिगन्तव्यमित्यर्थः।** निगमतरोर्गलितं फलम् (भा० पु० १।१।३)। **निगमो वेदः।** तत्रापि च निगमो भवति (नि० बहुत्र)। **वेदोद्धृतं पदं वाक्यं वा।** नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् (मनु० ४।१९)। **वेदार्थबोधकान्निगमाख्यान् ग्रन्थान् इति कुल्लूकः।** निगमेष्वध्ययनं वर्जयेत् (आप० ध० १।९।

४)। **निगमाश्चत्वराणि ग्रामनिर्गमनमार्गा वा।** सयोधश्रेणिनिगमः सोपाध्यायपुरोहितः। सर्वः प्ररुदितो जनः (रा० गो० सं० २।१२३।५)। **निगमः—नैगमो वाणिजः।** संमूढनिगमां सर्वां संक्षिप्तविपणापणाम् (पुरीम्) (रा० २।१२५।१०)। **उक्तोऽर्थः।** अमात्या बलमुख्याश्च मुख्या ये निगमस्य च (रा० २।१५।२)। **निगमो वणिक्समूहः।** सर्वे च येऽन्ये धृतराष्ट्रपुत्रा बलप्रधाना निगमप्रधानाः (भा० उ० २।६)। **निगमो नीतिशास्त्रम्।** स्वनिगममपहाय मत्प्रतिज्ञाम् (भा० पु० १।९।३७)। **निगमो निश्चयः प्रतिज्ञा वा।** इमं स्वनिगमं ब्रह्मन्नवेत्य मदनुष्ठितम् (भा० पु० १।५।३९)। **निगम उपदेशोऽनुशासनम्।** पन्था मन्निगमः स्मृतः (भा० पु० ११।१९।४२)। **मन्निगमो मत्प्राप्तिकः, मत्प्रापकः।** निगमनं च प्रतिज्ञाया हेतोश्च पुनर्वचनम् (मी० ७।१।१२ शा० भा०)। इत्येवमुपक्रम्य निगमन इदं श्रूयते (मी० ३।३।२ शा० भा०)। **निगमनमुपसंहारोऽवसानम्।**

**—गर्ह्** (गर्ह गल्ह कुत्सायाम्)। श्राद्धाय निगर्हते (क्रियाग्रहणमपि कर्तव्यम् इत्यत्र भाष्यस्थमुदाहरणम्)। **श्राद्धं कुत्सयतीत्यर्थः।** अवृत्त्या क्लिश्यमानोपि वृत्त्युपायान्निगर्हयन् (भा० अनु० १२४।१३)। **विगर्हयन्निति पाठान्तरम्। अर्थेऽविशेषः।**

**—गुप्** (गुपू रक्षणे)। इच्छतीशश्च्युताचारान् दारानिव निगोपितुम् (कि० १५।१६)। **निगोपितुं निगोप्तुं निगोपायितुम् प्रच्छादयितुम्।**

**—गॄ** (गॄ निगरणे)। मा मामिमं तव सन्तमत्र इरस्या द्रुग्धो भियसा नि गारीत् (ऋ० ५।४०।७)। अत्रे इति सम्बुद्धिः। **मा निगारीत् मा ग्रसिष्ट।** असंखादन्निगिरेत् (लाट्या० श्रौ० ४।११।१३)। भूमिरेतौ निगिरति सर्पो बिलशयानिव। राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् (भा० शां० २३।१५)॥ **निगिरति ग्रसते। चाप्ययोद्धारम् इत्यनुशासने ३६।१३ इत्यत्र पाठान्तरम्।** सर्वानेव गुणानियं (द्विजिह्वावली) निगिरति श्रीखण्ड ते सुन्दरान् (भामिनी० १।३८)। **निगिरति निगिलति ग्रसते अध्यवस्यति। नाशयतीति तात्पर्यार्थः।**

**—गै** (कै गै शब्दे)। वीणामेव वादयन्तो निगायन्तः (श० ब्रा० ३।२।४।६)। तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि (मनु० ९।१९)। **निगीताः पठिताः। उद्घोषिताः।**

**—ग्रन्थ्** (ग्रन्थ सन्दर्भे)। यद्यथा पुनराग्रन्थं पुनर्निग्रन्थं लघ्नीयान्मयूखं वाऽन्ततो पारणाय निहन्यात् तादृक् तत् (ऐ० ब्रा० ५।१५)।

—ग्रह् (ग्रह उपादाने)। उरसि न्यगृह्णीत (श० ब्रा० ३।६।४।१५)। वक्षसा पर्यरभतेत्यर्थः। तं वरुणो न्यगृह्णीत (ऐ० ब्रा० ३।३४)। श्रद्धया मम पुत्रोऽयमिति भृगुं वरुणः पर्यग्रहीत्। तपाम्यहमहं वर्षं निगृह्णामि च भारत (गीता ६।१६)। निगृह्णामि अवगृह्णामि प्रतिबध्नामि। राज्यं स त्वं निगृह्णीष्व भरतेन प्रसादितः (रा० २।१०८।१८)। वशे कुरु, स्वायत्तं कुर्वित्यर्थः। अधार्मिकं त्रिभिर्न्यायैर्निगृह्णीयात्प्रयत्नतः। निरोधनेन बन्धेन विविधेन वधेन च (मनु० ८।३१०)॥ उक्तोऽर्थः। द्विपा वा बलिनो राजन्नृपभा वा महाबलाः। विनिग्राह्या यदि मया निग्रहीष्यामि तानपि (भा० वि० २।६)॥ अनन्तरोदीरित एवार्थः। निगृह्णीष्व महाबुद्धे हयानेतान्महाजवान्। वार्ष्णेयो यावदेनं मे पटमानयतामिह (भा० वन० ७२।४)॥ निगृह्णीष्व निरुन्त्स्व, स्तम्भान, स्थापय। न चेत्स मम राजेन्द्र गृह्णीयान्मधुरं वचः। पथ्यं च भरतश्रेष्ठ निगृह्णीयां बलेन तम् (भा० वन० १३।१२)॥ निगृह्णीयां वारयेयम्, प्रतिषेधेयम्। जीवग्राहं निगृह्णीमो वयमेतम् (भा० ६।६३४६)। निगृह्णीमः प्रगृह्णीमः, बध्नीमः। तत एनां बलाद्राजा निजग्राह रहोगताम् (भा० आदि० १२५।८)। निजग्राह जग्राह परामम‍र्श। क्षिप्रं मे रथमास्थाय निगृह्णीष्व हयोत्तमान् (भा० वि० ३७।२२)। निगृह्णीष्व यच्छ संयच्छ, रश्मिषु लम्बस्व, प्रग्रहान्गृहाण। तथा पापान्निगृह्णीयात् (मनु० ६।३०८)। शिष्यात्, दण्डयेदित्यर्थः। इन्द्रः सीतां निगृह्णातु (ऋ० ४।५७।७)। नीचीनं गृह्णात्वित्यर्थः। स वै प्रविशमानस्तु शूद्रेणान्धेन रक्षिणा। निगृहीतो बलाद् द्वारि''' (३।१०७६६)। रुद्ध इत्यर्थः। (चटकः) निगृहीतः कन्धरायां शिशुना दृढमुष्टिना। दुर्भङ्गमुष्टिना राजन्नसून् सद्यस्त्वजीजहत् (हरि० १।२०।९८)। निगृहीतो गृहीतो धृतः। निगृहीतधेनुः (रघु० २।३३)। दृढं गृहीता धेनुर्येन सः। तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता (गीता २।६८)। निगृहीतानि संहृतानि प्रत्याहृतानि। प्रविशन्नेव स वनं निगृहीतः स कण्टकैः (भा० शां० १४६।७)। निगृहीतः प्रतिरुद्धः। कण्टका अस्य लग्ना इत्यर्थः। निगृहीतस्त्वया ब्रह्मन् विश्वामित्रो महाबलः (रा० १।५६।२१)। निगृहीतः = वैवश्यं नीतः, अभिभूतः। किं ह्रियमाणं किं निगृहीतम् (श० ब्रा० ११।५।३।१२)। निगृहीतं निहितम्। भो निगृहीतोसि (उत्तर० ४)। पराजितोसि। नोत्तरं प्रतिपत्तुमर्हसीत्यर्थः। किमिति निगृहीतवाननागसं सरस्वतीम् (हर्ष० १)। दण्डितवान्। ता वामेन पाणिना निगृह्य (गो० गृ० २।६।१५)। दृढं गृहीत्वा, सर्वतोभावेन गृहीत्वा। निगृह्य पाणिना चापम् (रा० ३।३०।३४)।

निगृह्य आलम्ब्य। मायुरोऽक्षिणी निगृह्य (मृच्छ० २)। निगृह्य संकोच्य निमील्य। प्रज्ञया निग्रहीतुं शक्यः (मुद्रा० १।२६)। निग्रहीतुं वशयितुमात्मीयः कर्तुम्। ज्येष्ठं पुत्रं निगृह्णानः (ऐ० ब्रा० ७।१५)। हस्तेन स्वसमीपं समाकर्षन्नित्यर्थः। वेगादहं प्रविसृतं पवनं निरुन्ध्यां त्वन्निग्रहे तु वरगात्रि न मे प्रयत्नः (मृच्छ० १०।२१)। निग्रहो ग्रहो वशीकारः। यत्राश्रौषं कर्णदुर्योधनाभ्यां बुद्धिं कृतां निग्रहे केशवस्य (भा० आदि० १।१७६)। उक्तोऽर्थः। तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् (गीता० ६।३४)। निग्रहो निरोधः। दमनं दमः। इदं त्वन्यत् प्रवक्ष्यामि न राजन्निग्रहादिव (भा० शां०२६०।२)। निग्रहात् कुतर्कनिग्रहेण। तयोरथ भुजाघातान्निग्रहात्प्रग्रहात्तथा। आसीत्सुभीमसम्पातः (भा० सभा० २३।२३)॥ निग्रहो हस्ताभ्यां कन्धराकर्षणेन शत्रोरधोमुखीकरणम्। निग्राहस्ते वृषल भूयात् (पा० ३।३।४५ इत्यत्र वृत्तावुदाहरणम्)। निग्रहोऽस्य भवेदित्याक्रुश्यते। अधा सपत्नानिन्द्रो मे निग्राभेणाधराँ अकः (वा० सं० १७।६३)। निग्राभेण नीचैः कृत्वा हस्तसन्नादिग्रहणेन। मत्तस्ते ममारयो धनादि याचेरन्नित्यर्थः।

—घृष् (घृषु सङ्घर्षे)। त्रिशूलमाश्रित्य सुतीक्ष्णधारं सर्वाणि गात्राणि निघर्षसि त्वम् (भा० कर्ण० ३६।१७)। निघर्षसि नितरां घर्षसीत्यर्थः। तस्यामञ्जनं निघृष्य (गो० गृ० ४।२।२१)। घर्षणेनान्तः प्रेर्येत्यर्थः।

—चम् (चमु अदने)। निचुम्पुणः सोमो (भवति)। निचान्तपृणो निचमनेन प्रीणाति (नि० ५।१८।१)। अत्र निराङ्प्रतियोगी। आङीषदर्थे, निस्तु साकल्ये। निचान्तपृणः=निचान्तः सन्प्रीणाति।

—चर् (चर गतिभक्षणयोः)। अवभृथ निचुम्पुण निचेरुरसि (वा० सं० ३। ४८)। निचेरुर्नितरां गमनशीलः। निचुम्पुणो मन्थरगामी। चुप मन्दायां गतौ।

—चि (चिञ् चयने)। तत्रास्यस्थाने गुल्मो निचीयते (का० सं० चिकित्सा० गुल्म० श्लो० ६)। निचीयते प्रचीयते। निचीयते त्वया साधो यशोपि सुहृदा (मुद्रा० ६।१८)। निचीयते संचीयते उपार्ज्यते संगृह्यते। तासां निचिक्युः कवयो निदानम् (ऋ० १०।११४।२)। निचिक्युः=विविदुः, विदामासुः। निदानमादिकारणम्। निचेतारो हि मरुतो गृणन्तम् (ऋ० ७।५७।२)। निचेतारो वर्धयितारः। वर्धनं शीलमेषामित्याह। सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः (रा० २।१०५।१६, भा० स्त्री० २।३)। निचयाः सङ्ग्रहाः। निचय इवाम्बुमुचां नगाधिराजः (ददृशे) (कि० ४।३७)। निचयो राशिः। नीचैर्निचितं भवति (नि० ४।२४)। (तत्रैव उच्चैरुच्चितं भवतीत्युक्तम्)। यः सोमपा निचितो वज्रबाहुः (अथर्व० २०।३४।१४)। निचितो नितरां चितः, दृढाङ्गः, वृद्धिं गतः। शकुन्तनिचितं बिभ्रज्जटामण्डलम् (शा० ७।११)। शकुन्तनिचितं

**पत्ररथाकुलम्** । ब्राह्मणनिकायः । वैयाकरणनिकायः । **निकायः सङ्घः । औत्तराधर्ये गम्यमाने तु सूकरनिचयः ।**

**—डी (डीङ् विहायसा गतौ)** । निडीनम् (भा० कर्ण० ४१।२६)। **शनकैर्डीनमित्यर्थः ।**

**—तन् (तनु विस्तारे)** । पुरूणि चिन्नि तताना रजांसि (ऋ० १०।१११।४)। **नितताान व्याप । व्यानशे ।** यदुत्ततं नि तत्तनु (अथर्व० ७।९०।३)। **नितनु निकर्ष, नीचैः कुरु, अवनतं कुरु ।** भगो नो राजा नि कृषिं तनोतु (अथर्व० ३।१२।४) । **नितनोतु नितरां करोतु ।** नितत इव हीह क्षत्रियो राष्ट्रे वसन्भवति नितत इव न्यग्रोधोऽवरोधैर्भूम्यां प्रतिष्ठितो भवति (ऐ० ब्रा० ७।३१) । **नितन इतस्ततः संचरणेन सन्ततः ।** शतं तव प्रतानास्त्रयस्त्रिंशन्नितानाः (अथर्व० ६।१३९।१) । **नितानाः न्यञ्चन्त्यः शाखाः, अवरोहाः । न्यग्विस्तार्यमाणाः प्ररोहाः ।**

**—तप् (तप सन्तापे)** । तदाहुर्निशोचति नितपति वर्षिष्यति वा इति (छां० उ० ७।११।१) । **नितरां तपतीत्यर्थः ।** द्विषतो नितपन्मणे (अथर्व० १९।२८।३) । **उक्तोऽर्थः ।**

**—तम् (तमु काङ्क्षायाम्)** । ताभिरेनं नितमयति (आप० श्रौ० ५।५।१७।८) ।

**—तुद् (तुद व्यथने)** । आतोदिनौ नितोदिनावथो सन्तोदिनावुत (अथर्व० ७।१००।३) । **नितोदिनौ नितरां निकृष्टं वा व्यथयन्तौ अतिकष्टं बाधाकारिणौ ।** वेद त्वाहं निमीवन्तीं नितुदन्तीमराते (अथर्व० ५।७।७) । **नितुदन्तीं विध्यन्तीम् ।**

**—तृद् (उतृदिर् हिंसानादरयोः)** । त्वयाहं दुर्हार्दो जिह्वां नि तृणद्मि वचांसि (अथर्व० १९।३२।४) । **नितृणद्मि—अपच्छिनद्मि ।**

**—तृप् (तृप प्रीणने)** । त्वं न इन्द्र ऋतयुस्त्वानिदो नि तृम्पसि (ऋ० ८।७०।१०) ।

**—तॄ (तॄ प्लवनतरणयोः)** । ऋतं पिपर्त्यनृतं नि तारीत् (ऋ० १।१५२।१) । **नितारीत् निकर्षति नीचैः कर्षति, रुणद्धि । न्यर्बुदस्य विष्टपं वर्ष्माणं बृहतस्तिर** (ऋ० ८।३२।३) । **नितिर निकर्ष रुन्धि अभिभव । अनिस्तीर्णो मां** रोषो दहेदग्निरिवारणिम् (भा० आदि० १८०।२) । **अनिस्तीर्णोऽकृतकार्यः ।**

**—त्यज् (त्यज हानौ)** । यदिदं क्षुद्रं सरीसृपं ग्रीष्महेमन्ताभ्यां नित्यक्तं भवति (श० ब्रा० १।५।३।११) । **नित्यक्तमपसारितमपसेधितमपत्रस्तम् ।** इमा ओषधयो ग्रीष्महेमन्ताभ्यां नित्यक्ता भवन्ति (श० ब्रा० १।५।३।१२)। **त्यक्ताः सत्यः क्षीणा भवन्तीत्यर्थः ।**

——दह् (दह भस्मीकरणे)। निदाघमिहिरज्वालाशतैः (भामिनी० १।१३)। निदाघो ग्रीष्मः। प्रस्नापयामास मुखं निदाघः (कि० १७।८)। निदाघः प्रस्वेदः। स्त्रियो निदाघं शमयन्ति कामिनाम् (ऋतु० १।४)। निदाघोऽन्तर्दाहः, कामजोऽभितापः।

—दा (डुदाञ् दाने)। निपृणाति निददाति ह्यसौ पिण्डान् पितृभ्य इति पुत्रः (नि० २।११।१ इत्यत्र दुर्गः)। निदीयते जन्यतेनेनेति निदानमित्यमरोद्घाटने स्वामी।

—दिश् (दिश अतिसर्जने)। निर्देशो निदेशः शासनं च स इत्यमरः। कालमेव प्रतीक्षेत निदेशं भृतको यथा (भा० शां० २४५।१५)। निदेश आदेशः। वाक्येनेयं स्थापिता स्वे निदेशे (माल० ३।१४)। उक्तोऽर्थः। निदेशवर्ती च पितुः पुत्रो भवति धर्मतः (भा० आश्रम० ४।८)। निदेशवर्ती वचने स्थितः, विधेयः। निदेशवर्ती च भवन्तं शरणं गतः (भा० शां० १३८। ७१)। उक्तोऽर्थः। प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः (मनु २।१९७)। निदेशे निकट इति कुल्लूकः। निदेशः सदेशः सविध इति पर्यायाः।

—दिह् (दिह उपचये)। निदिग्धोपचिते (विशेष्यनिघ्नवर्गेऽमरः)। निदिग्धं लिप्तम्। यथाऽधोभूमौ निदिग्धं तदमुया स्यादेवं तत् (श० ब्रा० १।७।२।१३)। निदिग्धं लेपि। निदिग्धिका स्पृशी व्याली इत्यमरः पृश्निपर्ण्या नामधेयेषु पठति।

—दृश् (दृशिर् प्रेक्षणे)। द्रष्टुमिच्छामि ते रूपमैश्वरं त्वं निदर्शय (भा० आश्व० ५५।३)। निदर्शय सन्नयनविषयतां नय। तन्मतं पद्ममिहिरो दृष्ट्वाशोकादिपूर्वगान्। अष्टौ लवादीन्नृपतीन् स्वस्मिन् ग्रन्थे न्यदर्शयत् (राज० १। १८)॥ न्यदर्शयत् न्यरूपयत् व्यवर्णयत्। हस्तेन निदर्शयन् (शा०)। निदर्शयन् बोधयन्। तमहं विविधैर्वाक्यैर्हेतुमद्भिर्न्यदर्शयम् (रा० ५।८९। ५६)। उपादिक्षम्, अबूबुधम्, अन्वशासम्। त्रयी चान्वीक्षिकी चैव वार्ता च भरतर्षभ। दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः (भा० शां० ५९।३३)॥ निदर्शिता उपवर्णिता विस्तरेण निरूपिताः। अध्यास्त तन्निदर्शितमासनम् (राज०)। तन्निदर्शितं तन्निर्दिष्टम्। अनेत्रत्वाद्यदेतेषां न मे रूपनिदर्शनम् (भा० शल्य० २।६)। निदर्शनं दर्शनं निशामनं विलोकनम्। निशब्देन नार्थः।

—दो (दो अवखण्डने)। चरन्वत्सो रुशन्निह निदातारं न विन्दते (ऋ० ८।७२।५)। निदातारं बन्द्धारम्। निदाय वत्सम् (तै० आ० ४।८।९)। निदाय सन्दाय बद्ध्वा। शुनश्चिच्छेपं निदितं सहस्राद् यूपादमुञ्चः (ऋ० ५। २।७)। निदितं सन्दितं सन्दानितं बद्धम्। उदिता यो निदिता वेदिता वस्वा

यज्ञियो वतर्तति (ऋ० ८।१०३।११)। **निदितानि प्रच्छन्नगुप्तानि वसूनि ।** उदुस्रियाणामसृजन्निदानम् (ऋ० ६।३२।२)। **निदानं वत्सदाम । गवां बन्धनम-मुञ्चदित्यर्थः ।** तासां निचिक्युः कवयो निदानम् (ऋ० १०।११४।२)। **निदान-मादिकारणम् ।** बालजेन निदानेन (भा० अनु० ६४।४)। कुम्भीं शाखापवित्रम-भिधानौ निदाने दारुपात्रं दोहनमयस्पात्रम्··(आप० श्रौ० १।४।११।६)। **निदाने गोपादसम्बन्धिन्यौ रज्जू इति रुद्रदत्तः ।** यजमानो वा एष निदानेन (ऐ० ब्रा० २।११, श० ब्रा० १।२।४।१२)। **निदानेन मूलतः तत्त्वतः, याथार्थ्येन ।** यत्पशुः अग्निर्वा एष निदानेन यदाग्नीध्रः (श० ब्रा० ४।४।२।१८)। **उक्तोऽर्थः ।**

**—द्रा (द्रा कुत्सायां गतौ)** । यदि निद्रायात् कामं स्वप्यात् (श० ब्रा० ३।६।३।११)। **यदि निद्रायाद् यदि प्रमीलितः स्यात्, यदि प्रचलायितः स्यात् ।** न निद्रान्त्यार्द्रपाणयः (भा० अनु० १६२।३६)।

**—धन् (धनि लौकिक इति सभ्याः)** । धनस्य निःसारलघोः स सारो यद दीयते लोकहितोन्मुखेन । निधानतां याति हि दीयमानमदीयमानं निधनै-कनिष्ठम् (अवदा० जा० २।५०)॥ **निधनं मरणम् ।** स्वधर्मे निधनं श्रेयः (गीता ३।३५)। अस्य वाक्यस्य निधने प्रादुरासीच्छिवोऽनिलः (भा० भीष्म० ११६।३८)। **निधनमवसानम्, समाप्तिः । विरामः ।** निधनेऽत्र प्रसूतस्त्वं प्रजा-पतिरसंशयम् । (हरि० १।५।१०)। **निधने वंशे इति नीलकण्ठः । निधनं कुलनाशयोरिति विश्व इति कोशं चोद्धरति ।** अयुजो मुष्टीँल्लुनोति । तथा निधनानि । (आप० श्रौ० १।२।४।२) । **निधनानि चूडा इति धूर्तस्वामी । निधनानि मुष्टीनां राशय इति रुद्रदत्तः ।** अहो निधनता सर्वापदामास्पदम् (मृच्छ० १।१४)। **निधनता निर्धनता ।**

**—धा (डुधाञ् धारणपोषणयोः)** । रराण ता मरुतो वेद्याभिर्नि हेडो धत्त (ऋ० १।१७१।१)। **निधत्त नीचैर्धत्त । एकतः कुरुत ।** ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः । अलङ्कृत्य शुचौ भूमौ··(मनु० ५।६८)॥ **निदध्यु-र्निखनेयुः ।** निदधे प्रतिकारेच्छामिव खड्गे दृशं मुहुः (कथा० १०।६७)। **दृष्टिमाससञ्ज, दृष्टिं बबन्ध ।** सर्गाय निदधे मनः (हरि० १।८।३५)। अहो नरेश्वरस्येयं यत्किञ्चनविधायिता । पृथग्जनोचिते कर्मण्यर्हतो निदधाति यः (राज० ३।२१२)॥ **निदधाति नियुङ्क्ते ।** नि मे धेहि नि ते दधे (वा० सं ३। ५०)। **निधेहि = प्रदेहि ।** स शेवधिं निदधिषे विवस्वति (ऋ० २।१३।६)। निदधिषे न्यासिथ, अर्पयामासिथ उपनिचिक्षेपिथ । निदधे विजयाशंसां चापे सीतां च लक्ष्मणे (रघु० १२।४४)। तं चिकित्वान् प्रतिगृह्या निधत्ते (ऋ० १।१२५।१)। **निधत्ते गोपायति ।** तयोरिदवसा सनेम वयं नि च धीमहि (ऋ० १।१७।६)। **निधीमहि निदधीमहि रक्षेम ।** शनैरादायोच्चै निदध्यात् (श० ब्रा० ११।४।२।८)।

योऽयमुच्चैरादाय शनैर्निदधाति (श० ब्रा० ११।४।२।१६)। निदधाति समाप्नोति। स क्षपः (निशाः) परि षस्वजे न्युस्रो मायया दधे (ऋ० ८।४१।३)। उस्रा गाः। निदधे बबन्ध। प्रनष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् (मनु० ८।३०)। निधापयेत् = गोपाययेत्, सुरक्षितं स्थापयेत्। गोमांसमुदकं चेति सप्तरात्रं निधापयेत् (शुक्र० ४।५६)। निधापयेत् अधो मूले दधीत। शिरसि निदधानोऽञ्जलिपुटम् (भर्तृ० ३।१२३)। निदधानो बिभ्रत्। तद्धैके। निदधत्येतानि वासांसि (श० ब्रा० ५।३।५।२५)। निदधति अवतारयन्ति। उर्व्याः पदो निदधाति सानौ (ऋ० १।१४६।२)। निदधाति न्यस्यति निक्षिपति। नि यं (अग्निं) दधुर्मनुष्यासु विक्षु (ऋ० १।१४८।१)। निदधुः = निहितवन्तः। मनुष्वत् त्वा निधीमहि मनुष्वत् समिधीमहि (ऋ० ५।२१।२)। निधीमहि = आदध्मः। इन्द्रस्य मध्ये अदिति र्नि धातु नः (ऋ० १०।११।२)। निधातु निदधातु स्थापयतु। उरौ लोके निधीयस्व (अथर्व० १८।२।२०)। निधीयस्व वसतिं कुरु, निविशस्व विश्राम्य। नि ते मनो मनसि धाय्यस्मे (ऋ० १०।१०।३)। निधायि = न्यधायि = निहितम्। (यत्रास्य पुरुषस्य मृतस्य) अप्सु लोहितं च रेतश्च निधीयते (श० ब्रा० १४।६।२।१३)। निधीयते निमज्जति। अश्वस्य शिश्नं महिष्युपस्थे निधत्ते। उपस्थे योनौ निक्षिपतीत्यर्थः। आत्मा गुहायां निहितोऽस्य जन्तोः (श्वेताश्व० उ० ३।२०)। निहितो निगूढः। वह पितृभ्यो यत्रैतान्वेत्थ निहितान्पराके (अथर्व० ११।६।२२)। निहिता निक्षिप्ताः। दिनान्ते निहितं तेजः सवित्रेव हुताशनः (रघु० ४।१)। उक्तोऽर्थः। निधानं धर्माणाम् (गङ्गा० १८)। निधानमाधारः। निधानगर्भामिव सागराम्बराम् (रघु० ३।९)। निधानं निधिः। इमा शफानां सनितुर्निधाना (ऋ० १।१६३।५)। निधाना निधानानि। नेरनिधाने (पा० ६।२।१९२)। निधानमप्रकाशतेति वृत्तिः। मुमुग्ध्यस्मान्निधयेव बद्धान् (ऋ० १०।७३।११)। गृभ्णाति रिपुं निधया निधापतिः (ऋ० ६।८३।४)। पाशा वै निधा इत्यैतरेयब्राह्मणे (३।१९)।

—धु (धुञ् कम्पने)। जरायै निधुवामि त्वा (अथर्व ३।११।७)। निधुवामि बलवत्प्रेरयामि। करौ निधुन्वन् (हरि० ४६५०)। एषा ते राजन्कन्या वधूर्नि धूयताम् (अथर्व० १।१४।२) निःसार्यतां पतिगृहादित्याह।

—धृ (धृञ् धारणे)। नि वो यामाय मानुषो दध्र उग्राय मन्यवे (ऋ० १।३७।७)। निदध्रे ननाम। न्यस्मिन्दध्रे मनः (अथर्व० २०।५।७)। अन्यतो निरुध्यात्र बहुसोमयागे धारयसीत्यर्थ इति सायणः।

—ध्यै (ध्यै चिन्तायाम्)। तं (गरुत्मन्तं) निदध्यौ रघूत्तमः (भट्टि० १४।६५)। चिन्तयामास, सस्मार, मनसा जगाम। आर्ये किमिदानीं मामपहसितु-

मिव निध्यायसि । (स्वप्न० २) । निध्यायसि चिन्तयसि । उप वै शुश्रूषते निध्यायति (ऐ० ब्रा० ३।२) । निध्यायति निर्ध्यायति । व्याचक्षणस्य तु मे निदिध्यासस्व (श० १४।५।४।४)। निदिध्यासस्व = अवधत्स्व, अवहितश्चिन्तय।

—ध्वंस् (ध्वंसु अवस्रंसने, गतौ च) । सनामाना चिद् ध्वसयो न्यस्मा अवाहन्निन्द्र उषसो यथानः (ऋ० १०।७३।६) । न्यध्वसयः = न्यध्वंसयः ।

—नद् (णद अव्यक्ते शब्दे) । निनदत्सु मङ्गलतूर्येषु (पञ्चत०) । उच्चैर्ध्वनत्सु । सूताः परमसंस्कारा मागधाश्चोत्तमश्रुताः । गायकाः स्तुतिशीलाश्च निनदन्तः पृथक् पृथक् (रा० २।६५।३) । उच्चैर्व्याहरन्त इत्यर्थः । दिशः सर्वा निवादयन् (भा० आदि०) ।

—नम् (णम प्रह्वत्वे शब्दे च) । न्यस्मै द्युम्ना जन्या नमन्ताम् (अथर्व० २०।८९।६) । निनमन्ताम् उपनमन्तु । (अग्ने) उच्छ्ञ्चस्व निनम वर्धमान आ त्वा वसवः सदन्तु (ऋ० १०।४२।६) । निनम नितरां नमयात्मानम् । नि षू नमध्वं भवता सुपाराः (ऋ० ३।३३।९) । हे नद्यो निनमध्वं गाधा भवतेत्याह । नि ते नंसै पीप्यानेव योषा (ऋ० ३।३३।१०) । निनंसै निनता आवर्जिता भवामि । अग्रेणाग्नीध्रं चतुर उपस्रावं विमितं विमिन्वन्ति पुरस्तादुन्नतं पश्चान्निनतम् (आपस्तम्बे) । उक्तोऽर्थः । अग्नेरर्धं प्रत्युपनतं यूपस्य कुर्याद् बहिरग्नेर्निनतम् (भा० श्रौ० ७।८।११) ।

—नह् (णह बन्धने) । इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः (ऋ० ६।७५।५) । निनद्धो दृढं बद्धः ।

—नी (णीञ् प्रापणे) । दिष्टं नो अत्र जरसे निनेषत् (अथर्व० १२।३।५५) । निनेषत् = नयेत् प्रापयेत् । मां तत्र सरसि निनयतम् (पञ्चत०) । प्रापयतमित्यर्थः । दासीकुम्भं बहिर्ग्रामान्निनयेरन् स्वबान्धवाः (याज्ञ० ३।२९४)। दास्यानीतमपां पूर्णं कुम्भं दासीकुम्भं निनयेरन् स्वबान्धवा आवर्जयेरन् तत्स्थमुदकम् अवसिञ्चेरन् । नि मातरा नयति रेतसे भुजे (ऋ० १।१५५।३) । निनयति प्रेरयति । यत्पूर्णपात्रमन्तर्वेदि निनयति (तै० सं० १।७।५।३) । उक्तोऽर्थः । उदकं निनयेच्छेषं शनैः पिण्डान्तिके पुनः (मनु० ३।२१८) । निनयेत् उत्सृजेत् । किं जघनेनाहवनीयमग्रो न्यनैषीः (श० ब्रा० ११।५।३।४) । न्यनैषीः प्रौक्षीः । येन मखो निनीयते (भा० पु०) । पूर्यते निःशेषः क्रियत इत्यर्थः । यत्सुपुप्सु निद्राणिनिनयति (गो० ब्रा० पूर्व० २।८) । उदस्थालीमादाय गार्हपत्यादग्रे आहवनीयन्निनयन्नियाद् (श० ब्रा० १०।४।१।५) । निनयन् आवर्जयन् अवाङ्मुखीं कुर्वन् । वक्त्रं निनीय (भा० पु० १।८।३१) । अवाचीनं कुर्वन्नित्यर्थः । यन्मुखं निनीय पठसि अक्षिनिकाणं च, तद् दोषाय (इति वयम्) ।

सकृदपो निनीय चतुर्धा बलिं निदध्यात् (गो० गृ० १।४।६)। **निनीय=अवसिच्य।** प्रदक्षिणमग्निं परिक्रम्यापां शेषं निनीय पूरयित्वा चमसम्...(गो० गृ० १।३।१२)। **निनीय पात्रादपनीय।** ते निनीयोदकं सर्वे विलप्य च भृशं पुनः (भा० पु० १।८।२)। **उदकं निनीयोत्सृज्य।** नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते (मनु० २।१७२)। **स्वधाशब्देन श्राद्धमुच्यते। निनीयते निष्पाद्यते येन मन्त्रजातेन तद् वर्जयित्वेति कुल्लूकः।**

—**नृत्** (**नृती गात्रविक्षेपे**)। यत्पुरावृत्तं यत्पुनर्निनृत्तम् (ऐ० ब्रा०)।

—**पत्** (**पत्लृ गतौ**)। क्षते प्रहारा निपतन्त्यभीक्ष्णम्। **निपतन्ति अवपतन्ति।** उच्चावचेष्वर्थेषु निपतन्तीति निपाताः (नि० १।४।११)। **निपतन्ति व्यवहारमवतरन्ति।** उत्पतेदपि वाऽऽकाशं निपतेच्च यथेच्छकम् (भा० वन० १५५।१६, ५।१५।१०)। **निपतेत् अधःपतेत्।** मा नि पप्तं भुवने शिश्रियाणः (अथर्व० १२।१।३१)। **मा निपप्तम् इति माङ्युपपदे पतेर्लुङि रूपम्।** उत्पपात भृशं क्रुद्धः श्येनवन्निपपात च (भा० द्रोण० १७४।३५)। **उक्तोऽर्थः।** निपेतुरन्तः करणैर्नरेन्द्रा देहैः स्थिताः केवलमासनेषु (रघु० ६।११)। बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः। त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे (रघु० १०। २७)॥ **निपतन्ति उपयान्ति, प्रविशन्ति।** मा ते स्वकोऽर्थो निपतेत् मोहात् (भा० वि० २१२६)। **निपतेत् भ्रंशेत, पराभवेत्, नश्येत्।** सकृदंशो निपतति (मनु० ६।४७)। **ऋक्थविभागः सकृदेव भवति न पुनरन्यथा क्रियत इत्यर्थः।** अभ्यर्हितं पूर्वं निपतति। **पूज्यवाचकं पदं द्वन्द्वे समासे प्रथमं स्थानं लभते।** सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु (भर्तृ० २।३८)। **निपतति आपतति आस्कन्दति, उपद्रवति।** निपतन्ती पतिमप्यपातयत् (रघु० ८।३८)। **निपतन्ती अवपतन्ती।** गुडेन वर्धितः श्लेष्मा सुखं वृद्ध्या निपात्यते (सुश्रुत०)। **निपात्यते नाश्यते, निर्ह्रियते।** न चास्थाने न चाकाले करांस्तेभ्यो निपातयेत् (भा० शां ८८।१२)। **कराङ् गृह्णीयादित्याह।** अमावसोरहं ण्यतो निपातयाम्यवृद्धिताम् (पा० ३।१।१२२ इत्यत्र सङ्ग्रहश्लोकः)। **असाधारणीं शास्त्राप्राप्तामवृद्धिमिच्छामीत्यर्थः।** तातं निपात्य सह बन्धुजनाक्षितोयैः (मुद्रा० ५।७)। **निपात्य हत्वा, निहत्य।** नश्यतो विनिपाते तावनिपाते त्वनाशिनौ (मनु० ८।१८५)। **तौ निक्षेपोपनिधी निक्षेप्तुरनिपातेऽविनाशेऽनिधने नाशिनौ नेत्याह।** सङ्गरेषु निपातेषु तथापद्व्यसनेषु च (भा० उ० १२२।६)। **निपातेषु आपत्सु।** सम्पातेष्वभिघातेषु निपातेष्वसिचर्मणोः। न तयोरन्तरं कश्चिद् ददर्श नरसिंहयोः (भा० द्रोण० १४।६६)॥ निपातमेवैते उत्तरे ज्योतिषी अनेन नामधेयेन भजेते (नि० ७।५।१६)। **निपातमप्राधान्यम्। आनुषङ्गिकं**

**कीर्तनम्** । तेनेश्वरनिपातेन पथा याति महाजनः (रा० ५।८१।२२) । **निपात उत्पातः** । उत्पाताश्च निपाताश्च (भा० शां० ५९।४६) । **निपाता उल्कापात-भूमिकम्पादयः** । क्व च निशितनिपाता वज्रसाराः शरास्ते (शा० १) । **निशितनिपाताः शिताश्रयः । निपतत्यनेनेति निपातोऽग्रभागः ।**

—**पद्** (पद गतौ) । स्वादोः फलस्य जग्ध्वाय यथाकामं निपद्यते (ऋ० १०।१४६।५) । **निपद्यते शेते संविशति** । ऊर्ध्वः सुप्तेषु जागार न नु तिर्यङ् नि पद्यते (अथर्व० ११।४।२५) । यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते (ऋ० १०।१६२।५) । **उक्तोऽर्थः** । यस्त्वा स्वप्ने निपद्यते भ्राता भूत्वा पितेव च (अथर्व० ८।६।७) । **संविशति संभवति । इहोभयत्र निपदिः सकर्मकः** । अकामां स्म मा निपद्यासै (श० ब्रा० ११।५।१।१) । **मां मा संविक्ष इत्याह । निपदिरिव संविशिरपि क्वचित्सकर्मकोऽन्यत्राकर्मकः** । त्वां यज्ञेष्वृत्विजं चारुमग्ने नि पेदिरे (ऋ० १०।२१।७) । **मनुषो निपेदिरे मर्त्याः प्राप्नुवन्तीत्याह** । नि मायिनो दानवस्य माया अपादयत् (ऋ० २।११।१०) । **न्यपादयत् अधोऽशाययत्, अभ्रंशयत्** । अपश्यं गोपामनिपद्यमानम् आ च परा च पथिभिश्चरन्तम् (ऋ० १।१६४।३१, वा० सं० ३७।१७) । **अनिपद्यमानम् अशयानमस्वपन्तमविश्राम्यन्तम् । अपतन्तमिति तूवटः । अनालम्बनेऽन्तरिक्षे गच्छन्नासौ पततीति भावः** । प्राणो वै गोपाः । स हीदं सर्वमनिपद्यमानो गोपायति (जै० उ० ३।३७।२) । **अनिपद्यमानोऽशयानोऽस्वपन् । अप्रयुच्छन्निति भावः । असन्दिग्धमुक्तेनानेनार्थेनोवटोक्तोऽर्थः सन्देहभाजनं भवति** । शेते निपद्यमानस्य चराति चरतो भगः (ऐ० ब्रा० ७।१५) । **उक्तोऽर्थः** । समा भवन्तूद्वतो निपादाः (ऋ० ५।८३।७) । **निपादा निम्ना भूभागाः ।**

—**पा** (पा पाने, पा रक्षणे) । ऋतं पिपर्त्यनृतं नि पाति (अथर्व० ९।१०।२३) । कदा च न प्रयुच्छस्युभे निपासि जन्मनी (लौ० गृ० ८।७ इत्यत्र देवपालेन भाष्ये समुद्धृतो मन्त्रः) । **निपासि नितरां रक्षसि** । ऋतस्य पदं कवयो नि पान्ति (ऋ० १०।५।२) । **उक्तोऽर्थः** । सा नो अमासो अरणे नि पातु (ऋ० १०।६३।१६) । तृष्णार्तैश्च निपीयते वनमृगैरुष्णं पयः सारसम् (मृच्छ० ८।११) । **निपीयते निर्धीयते** । (तां) निपीयमानलावण्यां लोलैर्देवासुरेक्षणैः (कथा० ५०।१३२) । **उक्तोऽर्थः** । दन्तच्छदं प्रियतमेन निपीतसारम् (ऋतु० ४।१३) । **निपीतश्चूषितः सारोऽस्य तं तथाभूतम्** । निपानं सर्वभूतानां भूत्वा त्वं पावनं महत् (भा० शां० १८।१७) । **निपानमाहावः** । गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितम् (शा० २।६) । **निपानं पल्वलम्** । जह्नुः स्वराडिव निपानखनित्रमिन्द्रः (भा० पु० २।७।४८) । **इह निपानेनोदपानः कूप उक्तः । कविरिति तत्रार्थेऽसतीमपि शक्तिमुत्प्रेक्षते ।**

—पीड् (पीड अवगाहने)। देवदानवगन्धर्वा रक्षांसि पतगोरगाः। तेपि भोगाय कल्पन्ते दण्डेनैव निपीडिताः (मनु० ७।२३)॥ **निपीडिता बाधिताः कदर्थितास्ताडिताः। परुषमाचरिताः।** निपीड्य श्रवणान् हस्तैर्मेनिरे तं गतायुषम् (हरि० २।२३।१)। गुरोः सदारस्य निपीड्य पादौ (रघु० २।३)। **पादौ निपीड्य चरणौ गृहीत्वा।** मातुश्च शिरसा पादौ निपीड्य (हरि० २।३०।६०)।

—पॄ (पॄ पालनपूरणयोः)। यां ते धेनुं निपृणामि यमु ते क्षीर ओदनम् (अथर्व० १८।२।३०)। **निपूर्वः पृणातिः पितृदाने वर्तते। निपृणामि निवपामि।** अथ यदध्वर्युः पितृभ्यो निपृणाति। **उक्तोऽर्थः।** परापुरो निपुरो ये भरन्ति (अथर्व० १८।२।२८, आप० श्रौ० १।३।७।११)। **निपृणन्ति नियमेन पिण्डदानादिकं कुर्वन्तीति निपुरः। निपृणातेः क्विप्।**

—बन्ध् (बन्ध बन्धने)। न च मां तानि कर्माणि निबध्नन्ति धनञ्जय (गीता ९।९)। **निबध्नन्ति कर्मफलैः सम्बध्नन्ति। कर्मफलेन सुखदुःखादिना मां युञ्जन्तीत्याह।** इह वत्सान् निबध्नीमः (अथर्व० ४।३८।७)। **निबध्नीमः सन्दानयामः=सन्द्यामः, सिन्मः।** सूच्या सूत्रं यथा वस्त्रे संसारयति वायकः। तद्वत्संसारसूत्रं हि तृष्णासूच्या निबध्यते (भा० शां० २१७।३६)॥ **निबध्यतेऽभिनह्यते।** संविभागेन कृत्वा तु निबध्नीमोऽस्य पौरुषम् (भा० वि० ३०।१२)। **निबध्नीमो निगृह्णीमः।** उपकूलं कालिन्द्याः स्कन्धावारं निबध्नता (राज० १।६)। **निबध्नता निवेशयता।** आबद्धा मानुषाः सर्वे निबद्धाः कर्मणोर्द्वयोः (भा० सौ० २।२)। **निबद्धाः पुरुषकारे निहीनतया बद्धा इति नीलकण्ठः।** यत्रानिबद्धोऽपीक्षेत शृणुयाद्वापि किञ्चन (मनु० ८।७६)। **अनिबद्धोऽनियुक्तः। त्वमस्मिन्विषये साक्षी भवेत्येवमकृतोपीति कुल्लूकः।** प्रातरेव प्रतीहारैः समुत्सारितनिखिलानिबद्धलोकं विविक्तमक्रियत (हर्ष०)। **अनिबद्धो बाह्यः।** निबद्ध इव पाशेन किशोरः (रा० २।४०।३९)। **निबद्धः सन्दितः।** आभाति वेला लवणाम्बुराशेर्धारानिबद्धेव कलङ्करेखा (रघु० १३।१५)। **निबद्धा संयुक्ता सम्पृक्ता।** दैवी सम्पद् विमोक्षाय निबन्धायासुरी मता (गीता १६।५)। **निबन्धो बन्धः कर्मफलहेतुकं संसारित्वम्।** प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधिर्निबन्धं चक्रे (वासवदत्ता)। **निबन्धं ग्रन्थम्।** दत्त्वा भूमिं निबन्धं वा (याज्ञ० १।३१८)। **अस्मिन्ग्रामे प्रतिक्षेत्रस्वामिनैतद् धनमस्मै प्रत्यब्दं प्रतिमासं वा देयमित्यादिर्नियमो निबन्ध इत्यपरार्कः।** सद्वृत्तिः सन्निबन्धना ...राजनीतिः (शिशु० २।११२)। गोहिरण्यादिशाश्वतपारितोषिकदानानि निबन्धनानि। भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा (याज्ञ० २।१२१)।

**एकस्य पर्णभरकस्येयन्ति पर्णानि, तथा एकस्य क्रमुकफलभरकस्येयन्ति क्रमुकफलानीत्युक्तलक्षणो निबन्ध इति मिताक्षरा।** नानिबन्धेक्षणां तद्वद् वृत्ताक्षीं नोद्वहेद् बुधः (वि० पु० ३।१०।१६)। **अनिबन्धेक्षणाऽपक्ष्मलनेत्रा।** तं ददर्श यवक्रीतो यत्नवन्तं निबन्धने (भा० वन० १३५।३४)। **निबन्धने प्रग्रहणे।** आशानिबन्धनं जाता जीवलोकस्य (उत्तर० ३)। **निबन्धमालम्बनम्।** यत्स्वमिव मामकीनस्य मनसो द्वितीयं निबन्धनम् (मालती० ३)। **उक्तोऽर्थः।** वाक्प्रतिष्ठानिबन्धनानि देहिनां व्यवहारतन्त्राणि (मालती ४)। **निबन्धनं कारणम्।** सहजविलासनिबन्धनं शरीरम् (मालती० २।६)। **निबन्धनमाश्रयः।** संस्कारपूतेन वरं वरेण्यं वधूसुखग्राह्यनिबन्धनेन (कु० ७।६०)। **निबन्धनेन प्रबन्धेन वाचां सन्दर्भेण।**

**—बाध्** (बाधृ लोडने)। पदा पणीँ रराधसो नि बाधस्व महाँ असि (ऋ० ८।६४।२)। **निबाधस्व निपीडय, उपपीडय, कदर्थय। बलात्कारय।**

**—बुध्** (बुध अवगमने, बुधिर् बोधने)। अमरान्वै निबोधास्मान्दमयन्त्यर्थमागतान् (भा० वन० ५५।३)। **निबोध जानीहि।**

**—बृह्** (बृह बृहि वृद्धौ, बृहू उद्यमने)। दस्यून्···हत्वा पृथिव्यां शर्वा निबर्हीत् (ऋ० १।१००।१८)। **निबर्हीत्=न्यबर्हीत्=अवर्तीत्, शकलान्यकार्षीत्।** पुरू सहस्रा शर्वा निबर्हीत् (ऋ० ४।२८।३)। **उक्तोऽर्थः।** यत्कारवे दश वृत्राण्यप्रति बर्हिष्मते नि सहस्राणि बर्हयः (ऋ० १।५३।६, अथर्व० २०।२१।६)। **निबर्हयः=न्यबर्हयः=उदसादयः, व्यनाशयः।** अनसूयाव्रतैस्तात प्रत्यूहाश्च निबर्हिता (रा० २।११७।११)। **निबर्हिता विनाशिताः, अपोहिताः, अपाकृताः।** विलोकनेनैव तवामुना···निबर्हितांहसा (शिशु० १।२६)। **निबर्हितांहसाऽपहतपाप्मना, अपाकृतैनसा।** ततोऽग्निः संप्रजज्वाल दशग्रीवनिबर्हणः (रा० ६।९६।१७)। **दशाननकलेवरप्रध्वंसकः, दशकन्धरशवस्य दाहक इत्यर्थः।**

**—भृ** (भृञ् भरणे, डुभृञ् धारणपोषणयोः)। अभवद् व्यभ्रमाकाशमभूच्च निभृतोऽर्णवः (हरि० २।१६।२४)। **निभृतः पूर्णः। इहानुपसर्जितो धात्वर्थः क्रान्ते। निशब्दो निःशेषतां साकल्यं कात्स्न्र्यमाह।** चिन्तया निभृतः (भा० पु०) **इहापि तल्लक्षण एवार्थः।** गर्भावसाने निभृतं चकार (शक्रम्) (हरि० १।४०।२५)। **निभृतं पूर्णकामम्।** कोऽयं निभृतं तपोवनमिदं ग्रामी करोत्याज्ञया (स्वप्न० १।)। **निभृतं नीरवं प्रशान्तम्।** कारणेन खलु मया नैभृत्यमवलम्बितम् (माल० ५)। **नैभृत्यम्=तूष्णीम्भावः।** निष्कम्पवृक्षं निभृतद्विरेफं ···तत्काननम् (कु० ३।४२)। **निभृता विरतविरावा विगतस्वनाः शान्ता द्विरेफाः षट्पदा यत्र तत्।** निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः (शा०

१।८)। **निभृता निष्कम्पाः।** अनिभृतकरेष्वाक्षिपत्सु प्रियेषु (मेघ० ६८)। कम्पवत्करेष्वित्याह। वारिधीनिव युगान्तवायवः क्षोभयन्त्यनिभृता गुरूनपि (कि० १३।६३)। **अनिभृता रंहस्वन्तो वेगवन्तः प्रविचलाः।** नाऽनिभृतोऽग्निमुपासीत (चरक०)। **उक्तोऽर्थः।** तया व्याहृतसन्देशा सा बभौ निभृता प्रिये (कु० ६।२)। **निभृता दृढनिश्चया, स्थिरमनाः।** निभृतात्मा युधिष्ठिरः (भा० पु० १।१५।३२)। **उक्तोऽर्थः।** शिरोभिर्निभृताचार महीपतनपांसुलैः (रा० २।४५।२७)। **हे निश्चलधर्मानुष्ठानेति विवक्षति। निश्चलमविश्रमं धर्माचरणमस्येत्यर्थः।** दानशीलोवदान्यश्च निभृतो ह्रीनिषेवकः (भा० वि० २८।१५)। **निभृतो नियतेन्द्रियः।** निभृतो भूत्वा (पञ्चत० १)। **निभृतः प्रच्छन्नस्तिरोहितोऽदर्शनं गतः।** नभसा निभृतेन्दुना (रघु० ८।१५)। **निभृतोऽदृश्य इन्दुर्यस्य।** निभृतमिति चिन्तनीयं शीघ्रमिति सुकरम् (शा० ४)। **रहस्यं यथा स्यात्तथा करणीयं चेच्चिन्तनीयं भवेदित्यर्थः।** प्रणामनिभृता कुलवधूरिव निश्चला संवृत्ता (मुद्रा० १)। **निभृता नम्राऽवनता।** ततः स जाम्बुनदभाण्डभृद्भिश्चतुर्भिर्निभृतैस्तुरङ्गैः (बुद्ध० ३।८)। **निभृतैर्विनीतैः।** अद्य मे निभृतो देहः (भा० पु० १०।२८।५)। **निभृतो ऽर्थवद्धूरणः। अत्रैवायमर्थो दृष्टो नेतरत्रेत्यस्य परिग्रहेऽनध्यवसायो नः।** तेषां तत्राविधेयानां निभृतानां महात्मनाम् (भा० वि० २७।५)। **निभृतानामत्यन्तावहितानामिति नीलकण्ठः।** त्वमेनं निभृतो भूत्वाऽभिरक्ष (तन्त्रा० ४।२)। **निभृतोऽवहितः प्रतिजागरितः, समाहितः।** पीनश्रोणि गभीरनाभि निभृतं मध्ये भृशोच्चस्तनम्। पायाद्वः परिरब्धमब्धिदुहितुः कान्तेन कान्तं वपुः (सरस्वती० ३।१५)॥ धृत्या च पुरुषव्याघ्रो नैभृत्येन च पाण्डवः (भा० उ० ५३।१०)। **नैभृत्येन मन्त्रगुप्त्या।** गुरुवात्सल्यमत्यन्तं नैभृत्यं विनयो दमः (भा० द्रोण० ३४।६)। **नैभृत्यं कृतकर्तव्याऽप्रकाशनम्।** बन्धिरनिभृतत्वे (नि० १०।४।१)। **निश्चलीकरण इत्यर्थः।**

**—मन्त्र् (मत्रि गुप्तपरिभाषणे)।** न्यमन्त्रयत सन्तुष्टो द्विश्चैनं वरैस्त्रिभिः (भा० अनु० १५२।६)। **न्यमन्त्रयत उपाच्छन्दयत्।** विद्यान्ते गुरुरर्थेन निमन्त्र्यः (गौ० ध० १।२।५४)। **निमन्त्र्यः प्रष्टव्यः किं भगवत उपहराणीति। निमन्त्रणमावश्यके श्राद्धादौ दौहित्रादेर्नियोगः** (पा० ३।३।१६१ इत्यत्र दीक्षितः)।

**—मा (माङ् माने)।** निधो निमितम् (पा० ३।३।८७)। **समन्तान्मितं निमितम्। समारोहपरिणाहम्।**

**—मि (मिञ् प्रक्षेपे)।** पूर्वया द्वारा स्थूणां निहत्य दक्षिणतो निमिन्वन्ति

(श० ब्रा० १४।१।३।७) । **निमिन्वन्ति = निखनन्ति ।** इहैव ध्रुवां निमिनोमि शालाम् (अथर्व० ३।१२।१) । **निमिनोमि स्थूणानिखननादिना करोमि ।** यूपो यस्यां निमीयते (अथर्व० १२।१।३८) । **निमीयते निखन्यते ।** यान्वो नरो देवयन्तो निमिम्युः (ऋ० ३।८।६) । तद्यथाऽऽम्रे फलार्थे निमिते छाया गन्ध इत्यनूत्पद्येते (आप० ध० १।७।२०।३) । **निमित आरोपिते ।** पदे पदे दुर्निमिते गलन्ती (रघु० ७।१०) । **दुर्निमिते दुर्न्यस्ते ।** ब्रह्मणा शालां निमितां कविभिर्निमितां मिताम् (अथर्व० ९।३।१९) । **निमितां निखननेन कृताम् ।**

**—मिष् (मिष स्पर्धायाम्) ।** न तिष्ठन्ति न निमिषन्त्येते देवानां स्पश इह ये चरन्ति (ऋ० १०।१०।८) । **न निमिषन्ति न नेत्रे निमीलयन्ति ।** निमिष्य नोन्मिषन्त्येव यावत्ते तस्य सैनिकाः (शि० भा० २१।५६) । **निमिष्य नेत्रे निमील्य ।**

**—मिह् (मिह सेचने) ।** यस्माद्ग्रीषा निमेहसि (आप० श्रौ० ६।५।१८।१७) ।

**—मील् (मील निमेषणे, निमेषणं संकोचः) ।** यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति (मनु० १।५२) । **निमीलति प्रलीयते ।** निमिमील नरोत्तमप्रिया हृतचन्द्रा तमसेव कौमुदी (रघु० ८।३७) । **नेत्रे निमिमील, ममारेत्यर्थः ।** नरेशे जीवलोकोऽयं निमीलति निमीलति (हितोप० ३।१३८) । **निमीलति विनश्यति ।** उन्मीलितापि दृष्टिर्भिर्निमीलितेवान्धकारेण (मृच्छ० १।३३) । **दृष्टिभिरुन्मीलिता विवृतनयनाप्यन्धकारेण हेतुना संवृतनेत्रेत्यर्थः ।** प्रजालोपनिमीलितः (रघु० १।६४) । **अनपत्यतया तमसा गूढ इवाप्रज्ञातः ।**

**—मृज् (मृजू शुद्धौ) ।** कुमारस्य जिह्वायां निमार्ष्टि (गो० गृ० २।७।१६) । **निमार्ष्टि निश्च्योतयति ।** इत्युपसाद्य बर्हिषि लेपं निमार्ष्टि (भा० श्रौ० ६।१२।८) । **निमार्ष्टि प्रमार्ष्टि ।** तं हस्तं निमृज्याल्लेपभागिनम् । (मनु० ३।२१६) । **निमृज्यात् निर्लेपं कुर्यात् ।** स्वधितिना वपां निमृज्य (आप० श्रौ० ७।६।१६।२) । **यदन्यद् वपायास्तन्निर्णुद्येत्यर्थः ।** नि भगाहं त्वयि मृजे (तै० उ० १।४।३) । **निमृजे निमार्ज्मि शोधयामीत्यर्थः ।**

**—मृद् (मृद क्षोदे) ।** निमृदोसि न्यहं तं मृद्यासं योऽस्मान्द्वेष्टि (आप० श्रौ० ६।५।१८।२) । **निमृद्यासम् = क्षुन्द्याम्, चूर्णी कुर्याम् ।** उत्तरत आग्नीध्र उल्मुकं निमृद्नाति । (भा० श्रौ० ७।१२।१३) । **उक्तोऽर्थः ।**

**—मे (मेङ् प्रणिदाने) ।** संख्याया गुणस्य निमाने मयट् (पा० ५।२।४७) । **निमानं मूल्यम् ।** पक्वेनामस्य निमयं न प्रशंसन्ति साधवः (भा० शां० ७८।७) ।

**निमयं विनिमयम्।**

—म्रुच् (म्रुचु गत्यर्थः)। निम्रुचस्तिस्रो व्युषो ह तिस्रः (अथर्व० १३।३।२१)। **निम्रुचोऽस्तमयाः।**

—यत् (यती प्रयत्ने)। नि या देवेषु यतते वसूयुः (ऋ० १।१८६।११)। **नियतते देवानासादयतीत्यर्थः।**

—यन्त्र् (यत्रि सङ्कोचे)। निसर्गतरला नारीः को नियन्त्रयितुं क्षमः। **नियन्त्रयितुं नियमयितुं, नियन्तुम्।**

—यम् (यम उपरमे)। नियच्छ यच्छ संयच्छ इन्द्रियाणि मनो गिरम् (भा० शां० १०४।४६)। **अत्रानुपसर्गस्य सोपसर्गस्य च यमेर्विशेषो न।** नियच्छेदं मनः पापात्सर्वलोकपराभवात् (भा० आदि० १७६।२१)। **नियच्छ निवारय। पराभवो विनाशः।** प्रयुक्ता स्वामिना सम्यगधर्मेभ्यो नियच्छति (भा० शां० ६९।७६)। **उक्तोऽर्थः।** गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः। शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति (चाणक्य सू० ५।४७)। **नियच्छति रुणद्धि।** मा त्वा केचिन्नि यमन्विं न पाशिनोऽति धन्वेव ताँ इहि (ऋ० ३।४५।१)। **मा नियमन् मा रुधन्।** वाचस्पति र्नियच्छतु (अथर्व० १।१।३)। **नियच्छतु नियमयतु। यथा मां न जहाति तथा स्थिरी कुर्वित्यर्थः।** दण्डनीतिः स्वधर्मे भ्यश्चातुर्वर्ण्यं नियच्छति (भा० शां० ६९।७६)। **स्वधर्माचरणाय नियमयति, स्वधर्माचरणमवशं कारयतीत्यर्थः।** इत्यादि बन्धपारुष्यं शैथिल्यं च नियच्छति (काव्यादर्शे १।६०)। **नियच्छति ददातीत्यर्थः।** को नः कुले निवपनानि नियच्छति (शा० ७।२५)। **उभयत्र नेरुपसर्गस्य वशाद् यमेरुपरामे वर्तमानस्य धातूनामनेकार्थत्वात्प्रयोगः स्वीकर्तव्यो भवति न तु दाण् दाने इत्यस्य।** ब्राह्मणः सप्तरात्रेण वैश्यभावं नियच्छति (मनु० १०।९३)। **नियमेन प्राप्नोतीत्यर्थः।** तांस्तान्व्याधीनवाप्नोति मरणं वा नियच्छति (सुश्रुत० सू० अ० ४६)। **नियमेनाधिगच्छतीत्यर्थः।** कालात्सर्वाणि भूतानि कालाद् वृद्धिं प्रयान्ति च। काले चास्तं नियच्छन्ति कालो मूर्त्तिरमूर्तिमान् (मैत्र्युप० ६।१४।१५)॥ **उक्तचर एवार्थः।** यो ह्यसूयुस्तथा युक्तः सोऽवहासं नियच्छति (भा० शां० २९०।२४)। **अवश्यमाप्नोतीत्यर्थः। अवहासो निन्द्यता।** वृत्ते स्थितस्तु शूद्रोपि ब्राह्मणत्वं नियच्छति (भा० अनु० १४३।५१)। **अनन्तरोदीरित एवार्थः।** संनियम्य तु तान्येव ततः सिद्धिं नियच्छति (मनु० २।९३)। **नियच्छति वशे करोति, लभत इत्यर्थः।** तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति (याज्ञ० ३।११५)। **उक्तोऽर्थः।** नास्य कर्म नियच्छन्ति किञ्चिदामौञ्जिबन्धनात्। (बौ० ध० १।२।३।७)। **नियच्छन्ति विदधति।**

**प्रायशो नियमरूपत्वाद् विधीनां नियच्छन्तीत्युक्तमिति गोविन्दस्वामी** । यमं समेयाद् वरुणं नियच्छेत् (रा० ६।४३।४२) । **नियच्छेत् वशे कुर्यात्** । लोकचित्तानुवर्तिन्या क्रीडामात्रैककार्यया । गोष्ठ्या सह चरन्विद्वाँल्लोकसिद्धिं नियच्छति (हर्ष० पृ० ७ हर्षसङ्केते शङ्करमिश्रेणोद्धृतं वात्स्यायनवचनम्) । **उक्तोऽर्थः** । परायणं पाण्डवानां नियच्छामि जनार्दनम् (भा० उ० ८८।१३) । **नियच्छामि बध्नामि** । गले यावत्स तं पाशं नियच्छति (कथा० ६०।७५) । **उक्तोऽर्थः** । तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां लोको नियम्यत इव दशान्तरेषु (शा० ४।२) । **नियम्यते धार्यतेऽवलम्ब्यते** । न घा वसुर्नियमते दानं वाजस्य गोमतः (ऋ० ६।४५।२३) । **न नियमते=न नियच्छति=न प्रत्याख्याति, न प्रत्याचष्टे** । न कथं चन दुर्योनिः प्रकृतिं स्वां नियच्छति । (मनु० १०।५६) । **न नियच्छति गोपायितुं न शक्नोति** । दुहितृत्वं च मे गच्छ तत एनमहं शरम् । नियच्छेयं त्वद्वधार्थमुद्यतं घोरदर्शनम् (हरि० १।६।७) ॥ **नियच्छेयं प्रतिसंहरेयम्** । यथा पञ्चसु भूतेषु संभूतत्वं नियच्छति (भा० आश्व० १७।२१) । **अनन्तरोदित एवार्थः** । मध्यदेशे नियच्छति (समिधम्) (भा० श्रौ० ६।१२।२) । **नमयतीत्यर्थः** । सुते नियच्छ तन्वम् (ऋ० ३।५१।११) । **नियच्छ रुन्द्धि, अवस्थापय** । तनूषु विश्वा भुवना नि येमिरे (ऋ० १०।५६।५) । **अन्तर्निविष्टानि चक्रुरित्यर्थः** । **विश्वेदेवाः कर्तारः** । नियमयसि विमार्गप्रस्थितानात्तदण्डः (शा० ५।८) । **नियमयसि नियन्त्रयसि, रुणत्सि, वारयसि** । वृक्षे वृक्षे नियता मीमयद्गौः (ऋ० १०।२७।२२) । **नियता बद्धा** । पशूनां त्रिशतं त्वासीद्यूपेषु नियतं तदा (रा० १।१३।३३) । **उक्तोऽर्थः** । अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता (कारिका० १।१६) । **नियताऽव्यभिचारिणी** । नियतैकपतिव्रतानि पश्चात्तरुमूलानि गृही भवन्ति तेषाम् । (शा० ७।२०) । **नियतं नियमेनाचरितम्** । वाच्यर्था नियताः सर्वे वाङ्मूला वाग्विनिःसृताः (मनु० ४।२५६) । **नियता बद्धा आयत्ताः** । नियतेर्नियोगात् (शिशु० ४।३४) । **नियतिर्दिष्टं दैवं विधिः** । नियतिः कारणं लोके नियतिः कर्मसाधनम् । नियतिः सर्वभूतानां नियोगेष्विह कारणम् (रा० ४।२५।४) ॥ **नियतिः शास्त्रविहितं कर्म, विधिर्विधेयं कर्तव्यं वा** । नियम्य पृष्ठे तु तलाङ्गुलित्रवान् शरैः सम्पूर्णाविषुधी परन्तपः (रा० २।८७।२३) । **नियम्य बद्ध्वा** । नियन्तव्यश्च राजभिः (मनु० ६।४१३) । **दण्डयितव्य इत्यर्थः** । लोकप्रसिद्धमेवैतद् वारि वह्नेर्नियामकम् (का० नी० सा० ११।४६) । **नियामकं शमकम्** । नियन्तरि व्याकुलमुक्तरज्जुके । (शिशु० १२।२४) । **नियन्ता सारथिः** । न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः (रघु० १।१७) । **नियन्तुः शासितुः** । धर्मस्याव्यभिचारार्थमधर्मनियमाय च (मनु० ८।१२२) ।

**अधर्मनियमाय अधर्मवारणाय।** मधुरो वाचि नियमः। (उत्तर० २।२)। **वाक्संयमः, विषये प्रवर्तनमविषयान्निवर्तनम्।** नायमेकान्ततो नियमः (ब्र० सू० शां० भा०)। **नियमो नैयत्यम्, विधिः।** कुसुमसुकुमारमूर्तिर्दधती नियमेन तनुतरं मध्यम् (रत्ना० १।२०)। **नियमेन नैयत्येन, अव्यभिचारेण।** शौचमिज्या तपोदानं स्वाध्यायोपस्थनिग्रहः। व्रतमौनोपवासं च स्नानं च नियमा दश (अत्रि०)॥ **नियमा व्रतानि।** नियमविघ्नकारिणी (शा० १)। **नियमस्तपश्चर्या।** मन्त्रस्य नियमं कुर्याः (भा० उ० १४१।२०)। **नियमो गोपनम्।**

—**या** (या प्रापणे)। त्वं तमिन्द्र मर्त्यममित्रयन्तमद्रिवः। सर्वरथा शतक्रतो नियाहि शवसस्पते (ऋ० ५।३५।५)॥ **नियाहि (रथचक्रेण) अतिक्राम, पादाक्रान्तं कुरु।** य ओहते रक्षसो देववीतावचक्रेभिस्तं मरुतो नि यात (ऋ० ५।४२।१०)। **उक्तोऽर्थः।** विभिश्च्यवानमश्विना नि याथः (ऋ० ५।७५।५)। **नियाथोऽभियाथः।** माऽहं पौत्रमघं नियाम् (आश्व० गृ० १।१३।७)। **मा नियां मा नियासिषम्। मा प्रापम्।** कृष्णं नियानं हरयः सुपर्णाः (ऋ० १।१६४।४७, अथर्व० ६।२२।१)। **नियमेन याति गच्छति अत्र ज्योतिश्चक्रमिति नियानम् अन्तरिक्षम् इति सायणः।** यत्ते नियानं रजसं मृत्यो अनवधर्ष्यम् (अथर्व० ८।२।१०)। **नियान्त्यत्रेति नियानं मार्गः।** यन्नियानं न्ययनं संज्ञानं यत्परायणम् (ऋ० १०।१९।४)। **नियानं गोष्ठम्, व्रजः।** इदं पूर्वमपरं नियानं येना ते पूर्वे पितरः परेताः (अथर्व० १८।४।४४)। **नियानं मार्गः।**

—**यु** (यु मिश्रणामिश्रणयोः)। भोजनं न्यत्रये युयोतम्। (ऋ० ७।६८।५)। **नियुयोतम् प्रापयतम् (अत्रिम्)।** रयिं नि वाजं श्रुत्यं युवस्व (ऋ० ७।५।९)। **उक्तोऽर्थः।** तस्मै शत्रून् नि स्वष्ट्रान्युवति हन्ति वृत्रम् भ्रातृव्यस्य पशून्नियुवते (तै० सं० २।६।२।३)। **नियुवते वशे करोति।** नि नो रयिं सुभोजसं युवस्व। नि वीरं गव्यमश्व्यं च राधः (वा० सं० २७।२७)। **नियुवस्व नियुहि देहि। निपूर्वो यौतिर्दानार्थ इत्युवटः।** विपो न द्युम्ना नि युवे जनानाम् (ऋ० ८।१९।३३)। रशनया नियूय (ऋ० १०।७०।१०)। **नियूय=नियुत्य, बद्ध्वा।**

—**युज्** (युजिर् योगे)। पाशे स बद्धो दुरिते नि युज्यताम् (अथर्व० २।१२।२, वा० सं० ६।९)। **नियुज्यतां बध्यताम्।** परिधौ पशुं नियुञ्जन्ति (आश्व० गृ० ९।२।४)। **नियुञ्जन्ति बध्नन्ति।** षट् शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि (सां० का० २ इत्यत्र गौडपादेनोद्धृतं वचनम्)। यन्मां विधेयविषये स भवान्नियुङ्क्ते (मालती० १।९)। **नियुङ्क्तेऽधिकरोति, व्यापारयति।** असाधुदर्शी तत्र भवान् काश्यपः, य इमामाश्रमधर्मे नियुङ्क्ते (शा० १)।

**उक्तोऽर्थः** । यदस्ति यस्येप्सितसाधनं धनं स तन्नियुङ्क्तेऽर्थिसमागमोत्सवे (अवदा० जा० ६।३०) । **नियुङ्क्ते विनियुङ्क्ते** । तत किं कर्मणि घोरे मां नियोजयसि केशव (गीता ३।१) । **नियोजयसि प्रेरयसि, प्रवर्तयसि, प्रयुङ्क्षे** । स्मरं स्वेन वपुषा नियोजयिष्यति (कु० ४।४२) । **संगमयिष्यतीत्यर्थः** । उत्तमाधममध्यानि बुद्ध्वा कार्याणि पार्थिवः । उत्तमाधममध्येषु पुरुषेषु नियोजयेत् ॥ **नियोजयेत् अर्पयेत्, न्यस्येत्** । नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः (रा० १।१।३४) । **नियुज्यमानः प्रेर्यमाणः** । नियुक्तः क्षत्रियो द्रव्ये खड्गं दर्शयेद् ध्रुवम् (हितोप० २।६५) । **नियुक्तोऽधिकृतः, अधिकारं प्रापितः** । भर्तुः समीपं गच्छेति नियुक्ता च पुनः पुनः (हरि० १।६।१६) । **नियुक्ताऽऽदिष्टा** । पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः (मनु० ५।१६) । **नियुक्तौ विहितौ** । तां (गाम्) नियुक्तामदीनात्मा सत्त्वस्थः संयमे रतः (भा० शां० २६८।७) । **नियुक्तां हन्तुं पुरस्कृताम्** । तस्मै दीयते नियुक्तम् (पा० ४।४।६६) । **नियुक्तं नियोगेनाऽव्यभिचारेण नित्यमिति वा** । देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ् नियुक्तया । प्रजेप्सिताऽधिगन्तव्या सन्तानस्य परिक्षये (मनु० ६।५६) ॥ **नियुक्ता विधिवत्सम्बन्धं कारिता, संवेशं लम्भिता** । नियुक्ता यत्र वा दृष्टिर्न सज्जति निरीक्षताम् (भा० उ० ३३।६०) । **नियुक्ता व्यापारिता** । स्थानेष्वेव नियोक्तव्या भृत्याश्चाभरणानि च (पञ्चत० १।७२) । **नियोक्तव्या व्यापारणीयाः, न्यसनीयानि (आभरणानि)**। न स राज्ञा नियोक्तव्यो न निक्षेप्तुश्च बन्धुभिः (मनु० ८।१८६) । **नियोक्तव्यः प्रष्टव्योऽनुयोक्तव्यः** । सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः संभावनागुणमवेहि तमीश्वराणाम् (शा० ७।४) । **नियोज्या भृत्याः** । नाहं युधि नियोक्तव्यो नाप्याचार्यः कथंचन (भा० भीष्म० ८८।४१) । गुरुकार्याणि सर्वाणि नियुज्य कुशिकात्मजे (रा० १।२४।२२) । **नियुज्य समर्प्य** । इदमेव कर्तव्यमिति कार्यनियोगः (सुश्रुत० २।५६०) । पितुर्नियोगे स्थातव्यम् (रा० २।२१।४८) । **नियोग आदेशः** । एष ते प्रथमः कृष्ण नियोगो गोषु यः कृतः (हरि० २।१६।७१) । **नियोगः पालनव्यापारः** । नियोगपाशैरासक्तैः स्कन्धाभ्यां शुभलक्षणौ (हरि० २।१४।४) । **नियोगपाशैरन्नशिक्यैः** । न कर्ता कस्यचित्कश्चित् नियोगेनापि चेश्वरः (रा० ४।२५।१) । अलघुनि बहु मेनिरे च ताः स्वं कुलिशभृता विहितं पदे नियोगम् (कि० १०।१६) । **नियोगोऽधिकारः** । तत् सिषेवे नियोगेन स विकल्पपराङ्मुखः (रघु० १७।४६) । **नियोगेन नियमेन, अवश्यकर्तव्यबुद्ध्या** । न चैव नियोगो वृत्तिपक्षे नित्यः समास इति (मी० १०।६।५ शा० भा०) । **नियोगो नियमः** । न च स्वभावो नियोगमर्यनुयोगमर्हति । एवं

भवत मैवं भूतेति वा, कस्मान्नैवमिति चेति (योगभाष्ये)। **नियोग आदेशः। पर्यनुयोगः पृच्छा।** यः सावज्ञो माधवश्रीनियोगे (माल० ५।८)। **नियोग आदेशः शासनम्। मनो नियोगक्रिययोत्सुकं मे** (रघु० ५।११)। **नियोगक्रिया=आज्ञापालनम्।** अथवा नियोगः खल्वीदृशो मन्दभाग्यस्य (उत्तर० १)। **नियोग आचर्यमनुष्ठेयं कर्म।** आज्ञापयतु को नियोगोऽनुष्ठीयताम् (शा० १)। **नियोग आदेशः।** स्वं नियोगमशून्यं कुरु। **नियुज्यतेऽत्रेति नियोगो नियुक्तिस्थानं प्रतीहारादि, तदशून्यं स्वेनाधिष्ठितं कुरु। तत्र याहीत्युक्तं भवति।** एवे चानियोगे (पा० ६।१।०४ इत्यत्र वा०)। **नियोगोऽवधारणम्। कुलस्य क्षयो मा भूदिति प्रयुक्ताया अनपत्याया विधवाया देवरेणान्येन सपिण्डेन वा संभवो नियोग इति क्षत्रियाणामभ्यनुज्ञातः स्मृत्याचारः।** वि ते मुञ्चामि रशनां वि योक्त्रं वि नियोजनम् (अथर्व० ७।८३।१)। **नीचीनं बन्धनसाधनं नियोजनम्।**

**—युध् (युध सम्प्रहारे)।** ये च केचिन्नियोत्स्यन्ति समाजेषु नियोधकाः (भा० वि० २।७)। **नियोत्स्यन्ति नियोत्स्यन्ते सन्निकृष्य संप्रहरिष्यन्ते। बाहूबाहवि योत्स्यन्त इत्यर्थः।** द्वन्द्वयुद्धेन च मया साकमेव नियुध्यते (कथा० ३८।१३२)। **उक्तोऽर्थः।** तिष्ठेदानीं सुसन्नद्धो नियुद्धे नास्ति मत्समः (मध्यम०)। **नियुद्धं द्वन्द्वं मल्लयुद्धम्।** नियोधकाश्च देशेभ्यः समेष्यन्ति महाबलाः (भा० आदि० १८४।१३)। **नियोधका मल्लाः।**

—रम् (रमु क्रीडायाम्)। मा वो दात्रान्मरुतो नि रराम (ऋ० ७।५६।२१)। **हे मरुतो मा वो दानाद् विरंसिष्म। छन्दसि निपूर्वो रमिर्गतिनिवृत्तौ दृष्टः। तेन युष्माकं रातेर्निवृत्ता मा भूमेत्युक्तं भवति।** वास्तोष्पते नि रमय मय्येवास्तु मयि श्रुतम् (अथर्व० १।१।२)। **निरमय निरन्तरं सुखयेति सायणः। स्थिरय, स्थापयेत्यर्थस्तु मम भाति। उत्तरत्र वाचस्पति र्नियच्छतु मय्येवास्तु मयि श्रुतम् इति श्रवणात्।** निर्ऋति निरमणात् (नि० २।७।३)। **निविष्टानि रमन्तेऽस्यां भूतानीति निर्ऋतिः पृथिवी।** आश्रावयन्तो नि विषे रमध्वम् (अथर्व० ५।१३।५)। **निरमध्वं विरमत तिष्ठत, विश्राम्यत।** न्यश्विना हृत्सु कामा अरंसत (अथर्व० १४।२।५)। **न्यरंसत न्यविशन्त।** निरामय जरितः सोम इन्द्रम् (ऋ० १०।४२।१)। **निरामय निरुन्द्धि, अवस्थापय।** मो पु त्वा वाघतश्चनारे अस्मन्नि रीरमन् (ऋ० ७।३२।१)। **मा निरीरमन् मा रुधन्।**

**—री (री गतिरेषणयोः)।** ममत्त येन निरिणासि शत्रून् (ऋ० १०।

११६।३) । निरिणासि निर्गमयसि पराणुदसि ।' उषा हस्रेव नि रिणीते अप्सः (ऋ० १।१२४।७) । निरिणीते । नितरां रिणीते गमयति प्रकाशयति ।

—रुध् (रुधिर् आवरणे) । युगे युगे भवन्त्येते सर्वे दक्षादयो नृप । पुनश्चैव निरुध्यन्ते विद्वांस्तत्र न मुह्यति (हरि० १।२।५५, वि० पु० १।१५।८३) । निरुध्यन्ते प्रलीयन्ते, अभावं यान्ति । विप्रदुष्टां स्त्रियं भर्ता निरुन्ध्यादेकवेश्मनि (मनु० ११।१७६) । निरुन्ध्यात् अवरुन्ध्यात्, अन्तरगारं नियच्छेत् । निरुन्धानाः सतां मार्गम् (का० नी० सा० ४।१२) । परिपन्थिनो भवन्त इत्यर्थः । श्रुतरथे प्रियरथे दधानाः सद्यः पुष्टिं निरुन्धानासो अग्मन् (ऋ० १।१२२।७) । निरुन्धानासोऽवरुन्धाना अस्मास्वेव स्थापयन्तः । निरुद्धं गगनं सर्वं शुभ्रं मेघैः समन्ततः (भा० अनु० ३२।२६) । निरुद्धमाच्छन्नम् । दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः (ऋ० १।३२।११) । निरुद्धाः परिक्षिप्ता वेष्टिता बद्धाः । उत्पत्तिसमनन्तरं निरुद्धानामवयवानां वस्तुभूतसमुदायाभावात् (वा० प० ३।८।४ इत्यत्र हेलाराजः) । निरुद्धानां विनष्टानाम् । उत्पत्तिश्च निरोधश्च नित्यौ भूतेषु सर्वदा (वि० पु० १।१५।८२) । निरोधो विनाशः । न निरोधो न चोत्पत्तिः (ब्रह्मबिन्दूप०) । उक्तोऽर्थः । नीते रत्ने भाजने को निरोधः । (प्रतिज्ञा० ४।११) । निरोधो विरोधः । भौमं हत्वा तन्निरोधादाहृताश्चारुदर्शनाः (भा० पु० १०।५८।५८) । निरोधः कारा । निरुध्यतेऽत्रेति । निरोधाज्जायते वायुः (व० घ० २५।६) । निरोध आकाशः । उत्पत्तिश्च निरोधश्च नित्यौ भूतेषु पार्थिव (हरि० १।२।५४-५५) । भूतेषु पश्वादिषूत्पत्तिर्नित्या स्वाभाविकी सापिण्ड्यनियमं विना प्रजोत्पादनं स्वाभाविकं तथा मनुष्येषु निरोधो नित्यः, असपिण्डां समुद्वहेदिति नियमः स्वाभाविक इति नीलकण्ठः । अत्र स्वीकृतो निरोधशब्दार्थो नान्तरेण क्लिष्टकल्पनां लभ्यः । उत्पत्तिनिरोधौ जननमरणे इति तु ऋजुरर्थः शब्दमर्यादया सुलभः । जन्मनिरोधं प्रवदन्ति यस्य (श्वेताश्व० उप० ३।२१) । निरोधो नाशोऽभावः । निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः (भा० पु० २।१०।६) । निरोधो लयः ।

—रुह् (रुह बीजजन्मनि) । द्यो र्न काचिदथवास्ति निरूढा सैव सा चलति यत्र हि चित्तम् (नै० ५।५७) । नृप विद्यासु निरूढिमागता (मतिः) (कि० २।६) । निरूढिः प्रसिद्धिः ।

—रूपय् (रूपय् दर्शने) । दिग्दन्तिनां दन्तभूमिं स च कस्मान्निरूपितः (वि० पु० १।१६।६) । निरूपितो दर्शितः । यद् देवेन वाराणसी नाम नगरी राजधानी निरूपिता (प्र० च०) । निरूपिता व्यवसिता, निर्धारिता । तत्राटवी-

राज्येभिषेक्तुं भवान्सर्वस्वामिगुणोपेतो निरूपितः (हितोप०)। **उक्तोऽर्थः।** न च महावने पन्था निरूपितः (काद० १२०)। **निरूपितो दृष्टः, उपलब्धः, अन्विष्य विलोकितः।** निरूपिता शम्बरेण सा सूपौदनसाधने (भा० पु० १०।५५।८)। **निरूपिता नियुक्ता।** निरूपितो बालक एव योगिनां शुश्रूषणे (भा० पु० १।५।२३)। **शब्दमर्यादया दुरापोऽर्थः कवेरस्य व्यवहारं प्रत्यनादरस्य लक्षकः।** केदारकर्मणि निरूपितः (भा० पु० ५।९।११)। **अत्राप्युदितपूर्व एवार्थोऽभिप्रेतः कवेः।** अस्त्राण्यमोघमहिमानि निरूपितानि न पस्पृशुर्हरिदासमिवासुराणि (भा० पु० १।१५।१६)। **निरूपितानि लक्ष्यं प्रत्यभिमुखीकृतानि, लक्ष्यं प्रति विसृष्टानि मुक्तानि प्रास्तानि। अत्रापि पूर्ववद् अर्थग्रहे व्यवहारोपेक्षाऽनितरसाधारणी।**

**—लिप् (लिप उपदेहे)।** तद्धोतौष्ठयो र्निलिम्पते (श० ब्रा० १।८।१।१५)। **ओष्ठौ घृतेन म्रक्षयतीत्यर्थः।** (वज्रेण) तेनाहममूं सेनां निलिम्पामि (अथर्व० ११।१०।१३)। **निलिम्पामि छिनद्मीति सायणः। अभावमापादयामि, अदृश्यां करोमीत्यन्ये।** नि केतवो जनानां न्यदृष्टा अलिप्सत (ऋ० १।१९१।४)। न्यलिप्सत। **लिपे र्लुङि प्रथमपुरुषबहुवचने रूपम्।**

**—ली (लीङ् श्लेषणे)।** ध्वजेषु निलीयन्ते वायसाः (भा० वि० १४६२)। **ध्वजानाश्रयन्ते, ध्वजेषु निषीदन्ति इत्यर्थः।** नीचैर्गृध्रा निलीयन्ते भारतानां चमूं प्रति (भा० भीष्म० २।६)। **निलीयन्ते अवपतन्ति, अवतरन्ति।** निलिल्ये मूर्ध्नि गृध्रोऽस्य (भट्टि० १४।७६)। **निलिल्ये संशिश्रिये।** मातु र्निलीयते कृष्णः (सि० कौ०)। **अन्तर्धत्त इत्यर्थः।** सा भीषा निलिल्ये (श० ब्रा० १।२।३।१)। **अन्तर्दधे, तिरोऽभूव।** पूर्वमेव हि जन्तूनां योऽधिवासो निलीयते (राज० ३।४२६)। **निलीयते निश्चीयते नियम्यते। अयमपि क्वचिदर्थकल्पनायां भागवतकारमनुकरोति कलया।** स्नुषा श्वशुराल्लज्जमाना निलीयमानैति (ऐ० ब्रा० ३।२२)। **निलीयमाना=आत्मानं गोपायन्ती। तिरोभवन्तीत्यर्थः।** निलीना मक्षिका मूर्ध्नि (व० बृ० सं० ९५।५८)। **निलीना संश्रिता निषण्णा।** उतास्मिन्नल्प उदके निलीनः (अथर्व० ४।१६।३)। **निलीनस्तिरोहितः।** पुष्पैः सरोजैश्च निलीनभृङ्गैः (भट्टि० २।५)। **अन्तःस्थितद्विरेफैः।** सन्ध्याकाले निलीनानां निद्रार्थं श्रूयते ध्वनिः (रा० १।११९।४)। **निलीनानां निलयमावासमागतानाम्।** तावेवास्तां निलयनं तावातायनमेव च (भा० द्रोण० १८७।२३)। **निलयनमाश्रयः। तौ द्रोणार्जुनौ।**

**—वच् (वच परिभाषणे)।** दुर्योधनं नैकृतिकं न्यवोचत् (भा० शल्य०

५६।१२) । **न्यवोचत् न्यगर्हत । आक्रोशत्, अपावदत् ।** अवोचाम निवचनान्यस्मिन् (ऋ० १।१८६।८) । **निन्दावचनान्यवोचामेत्यर्थः ।** मध्येपदे निवचने च (पा० १।४।७६) । **वचनस्याभावो निवचनम् ।**

**—वद् (वद व्यक्तायां वाचि) ।** तत्र भेरीसहस्राणि शङ्खानामयुतानि च न्यवादयन्त (भा० उ० १९६।३५) । **अभ्यघ्नन्, न्यनादयन् इत्यर्थः ।**

**—वप् (डुवप बीजसन्ताने, बीजसन्तानं क्षेत्रे विकरणं गर्भाधानं च) ।** पानं करवाथ खादं निवपाथ (श० ब्रा० १३।४।१।१७) । **निवपतिरिह दाने वर्तते ।** धिष्ण्या न्युप्यन्ते (श० ब्रा० ३।६।२।२१) । **न्युप्यन्ते उपसमाधीयन्ते निचीयन्ते ।** निवपेः सहकारमञ्जरीः (कु० ४।३८) । सभाया मध्येऽधिदेवनमुद्धत्यावेक्ष्याक्षान्निवपेत् (आप० ध० २।२५।२०) । **निवपेत्=निक्षिपेत्, निखनेत् ।** अन्यं ते अस्मन्नि वपन्तु सेनाः (ऋ० २।३३।११) । **भूमाववपातयन्त्वित्याह ।** यावत्येव निवप्स्यन्स्यात्तावदुद्धन्यात् (श० ब्रा० १३।१।८।२०) । **निवप्स्यन् निवापं चिकीर्षुः ।** न्युप्य पिण्डांस्ततः (मनु० ३।२१६) । **न्युप्य दत्त्वा ।** न्युप्य चैव निवापं तं भूतेभ्योपि (गोरे० सं० रा० २।५६।२८) । **उक्तोऽर्थः ।** न्युप्य चर्मण्यानुडहे सोमम् (का० श्रौ० ७।६।१) । **न्युप्य निक्षिप्य धृत्वा ।** ऐङ्गुदं बदरोन्मिश्रं पिण्याकं दर्भसंस्तरे । न्युप्य......(गो० रा० २।१११।३५) । **उक्तोऽर्थः ।** स्तोतव्या चेह पृथिवी निवापस्य चेह धारिणी (भा० अनु० ९१। २५) । **निवापस्योप्तानां बीजानाम् ।** अवनिं प्रतदा गाश्च निवापं बहुवार्षिकम् । तत्ते विप्र प्रदास्यामि । (भा० ३।१७१८३) । **निवापो बीजसङ्ग्रहः ।**

**—वस् (वस आच्छादने, वस निवासे) ।** न्यवसिष्ट ततो द्रष्टुं रावणं, प्रावृतद् गृहाद् (भट्टि० १५।७) । **न्यवसिष्ट पूर्वनिवसितं वसनं त्यक्त्वाऽन्यद् वसनं परिदधाति स्म** (जयमङ्गला) । पीतैर्निवासिता वस्त्रैः (गो० सं० रा० ५।२७।२२) । **निवासिता आच्छादिता ।** रोहिणीं निवसति (सोमः) (भा० शल्य० ३५।५५) । **निवसति संविशति ।** योऽसौ माहिष्मतीं पुरीं निवासयामास (वि० पु० ४।११।९) । **निवासयामास निवेशयामास ।**

**—वह् (वह प्रापणे) ।** यावर्भगाय विमदाय जायां सेनाजुवा न्यूहतू रथेन (ऋ० १।११६।१) । **यौ नासत्यौ जायां न्यूहतुः प्रापयाञ्चक्रतुः ।** षड्रसा निवहन्त्येता गुडकुल्याः (भा० शां० २८४।४३) । **निवहन्ति प्रवहन्ति, स्यन्दन्ते ।** वेदानुद्धरते जगन्निवहते (गी० गो० १) । **निवहते धरते, अवलम्बमानाय । अवष्टभ्नते ।** राजपुत्रनिवहः (भर्तृ० ३।३७) । **निवहः समूहः, समुदायः ।**

**—वा (वा गतिगन्धनयोः) ।** प्रचारे वा निवाते वा बुधो नोद्वेजयेद् गाः (भा० अनु० ६९।१०) । **निवाते कठिनोपवेशन इति नीलकण्ठः ।** निवाते

वातत्राणे (पा० ६।२।८)। **कुटीनिवातम्। शमीनिवातम्। वातस्याभावो निवातः, निरुद्धो वातोऽस्मिन्निति वा निवातः।** राजनिवाते निवसति। **राजपार्श्व इत्यर्थः।** सुखं मातृनिवातम्। **मातृसान्निध्यमित्यर्थः। निवातावाश्रयावातावित्यमरः।**

**—विद् (विद ज्ञाने)।** इति नम्रं निवेदयामः। **विज्ञापयाम इत्यर्थः।** बीभत्सुश्च महातेजा निवेदयति ते गृहान् (भा० आश्रम० १३।३)। **निवेदयति गृहा गृह्यन्तामिति निवेदयति, उपहरति।** राज्यं चन्द्रापीडाय न्यवेदयत् (काद० ३६७)। ऊरीकृत्यात्मनो देहं राज्यमस्मै न्यवेदयत् (रघु० १५।७०)। कथमिदानीमात्मानं निवेदयामि (शा० १)। **स्वं प्रकाशयामि, आत्मनो नामधेयं निर्दिशामीत्याह।** उपस्थितां होमवेलां गुरवे निवेदयामि (शा० ४)। **निवेदयामि शंसामि।** दिगम्बरत्वेन निवेदितं वसु (कु० ५।७१)। **निवेदितं सूचितम्, आख्यातम्।** दर्शितं कृपणत्वं च कृष्णेऽर्घस्य निवेदनात् (भा० सभा० ३७।१।२४)। **अर्घस्य निवेदनात् पूजोपहारात्।** सकुण्डलानां पततां शिरसां धरणीतले। पद्मानामिव सङ्घातैः पार्थश्चक्रे निवेदनम् (भा० द्रोण० ६०। ११)॥ **निवेदनमुपहारम्।** निवेद्यमत्रात्ययिकं हि मेऽस्ति (भा० उ० ३२।४)। इहस्थश्च न निवेद्योस्मि कर्हिचित् (भा० वन० १५१।५)। **निवेद्यो विज्ञाप्यः।**

**—विश् (विश प्रवेशने)।** करिष्ये वः प्रियं कामं निवेक्ष्येऽहमसंशयम् (भा० आदि० ४६।७)। **दारान् करिष्यामि गृही भविष्यामीत्यर्थः।** उग्रे तपसि वर्तन्ते पितरश्चोदयन्ति माम्। निविशस्वेति दुःखार्ताः (भा० आदि० ४६।१५)। **उक्तोऽर्थः।** सत्त्वे निविशतेऽपैति⋯सोऽसत्त्वप्रकृतिर्गुणः (पा० ४।१।४४ इत्यत्र भाष्ये श्लोकवार्तिकम्)। **निविशते प्रविशति, आगच्छति, उपैति।** त्वय्युदिते प्रेरते चित्रभानो तव व्रते निविशन्ते जनासः (अथर्व० ४।२५।३)। **निविशन्ते नियमेन वर्तन्ते, तिष्ठन्ति।** स तदेव प्रतिवेशो निविविशे (श० ब्रा० ४।१।५।२)। **तत्रैव वसतिं चकारेत्यर्थः।** नि गावो गोष्ठे असदन् नि मृगासो अविक्षत (अथर्व० ६।५२।२)। **न्यविक्षत निविष्टाः, व्यश्राम्यन्।** नि वो नु मन्युर्विशताम् (ऋ० १०।३४।१४)। **मन्युः क्रोधः शाम्यत्वित्याह।** यस्य ते विश्वा भुवनानि केतुना प्रचेरते नि च विशन्ते अक्तुभिः (ऋ० १०।३७।६)। **निविशन्ते विश्राम्यन्ति। स्वपन्तीत्यर्थः।** प्रचेरते=प्र च ईरते। सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि (ऋ० १०।१२७।४)। नि ग्रामासो अविक्षत नि पद्वन्तो नि पक्षिणः (ऋ० १०।१२७।५)। **उक्तोऽर्थः।** मयि गोष्ठे निविशध्वम् (आश्व० गृ० २।१०।६)। **विश्राम्यत अवतिष्ठध्वम्**

**इत्यर्थः**। पद्मेन चैव व्यूहेन निविशेत (मनु० ७।१८८)। **सेनासंनिवेशं कुर्यात्, व्यूहेत्सेनाम् इत्याह**। न ये शेकुर्यज्ञियां नावमारुहम् ईर्मैव ते न्यविशन्त केपयः (ऋ० १०।४४।६)। **न्यमज्जन्नित्यर्थः**। नवाम्बुदश्यामवपुर्न्यविक्षत (ग्रासने)। **न्यविक्षत ग्रासिष्ट, उपाविक्षत्**। श्रुतिप्रामाण्यतो विद्वान्स्वधर्मे निविशेत वै (मनु० २।८)। **निविशेत = ग्रवतिष्ठेत, निरतः स्यात्**। ग्रन्तरिक्षे पथिभिरीयमानो न निविशते कतमच्चनाह। (तदेतदृचाभ्युक्तम् इत्यपोद्धृत्य गो० ब्रा० पूर्व० २।८ इत्यत्रोक्तम्)। **न निविशते न विश्राम्यति, न तिष्ठति, न विरमति**। कालेनोदेति सूर्यः काले निविशते पुनः (　　　)। **निविशते निम्लोचति, ग्रस्तमयते**। यथा मधुकरराजं मक्षिका उत्पतन्तमनूत्पतन्ति निविशमानमनु निविशन्ते तथेन्द्रियाणि चित्तनिरोधे निरुद्धानि······(यो० भा० २।५४)। **उक्तोऽर्थः**। विश्वमन्यन्नि विशते यद् एजति (ऋ० १०।३७।२)। **निविशते निवेशयति विरतगतिकं करोति, निवृत्तचेष्टं करोति**। पुनर्निविशेत तां चैवोपयच्छेत् (व० धर्मशा० २०।८)। न्यवेशयन्नामभिः स्वैस्ते देशांश्च पुराणि च (भा० ग्रादि० ६३।३२)। रम्यां निवेशयामास पुरीं वाराणसीं पुनः (हरि० १।१६।७७)। **उक्तोऽर्थः**। भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन निवेशयेत् (कौ० ग्र० १।२१।१६)। **निवेशयेत् वासयेत्**। तत्ते विलपितं सर्वं राजन्मया निशामितम्। ग्रर्थे निविशमानस्य विषमिश्रं यथा मधु (भा० द्रोण० ८६।१०)॥ **ग्रर्थे निविशमानस्य = ग्रभिनिविशमानस्य, साभिनिवेशस्य, ग्रभिनिविष्टस्य, साग्रहस्य**। ज्येष्ठेऽनिविष्टे कनीयान् निविशमानः परिवेत्ता भवति (याज्ञ० ३।२६५ मिताक्षरायां हारीतवचनम्)। **निविशमानो दारान्कुर्वाणः**। समुद्रज्येष्ठाः सलिलस्य मध्यात् पुनाना यन्त्यनिविशमानाः (ऋ० ७।४९।१)। **ग्रनिविशमाना ग्रविश्राम्यन्त्यः**। द्वारवत्यां निविशन्त्याम् (भा० ग्रनु० ७२।३)। **वास्यमानायाम् इत्यर्थः**। निवेशयन्नमृतं मर्त्यं च (ऋ० १।३५।२)। **विश्रमं लम्भयन्नित्यर्थः**। ग्रद्रीणां निविशतां भारैः (भा० पु० ८।११।३४)। **निविशतां = निविशमानानाम् = न्यञ्चतां निमज्जताम्**। ग्रतिष्ठन्तीनामनिवेशनानाम् (ऋ० १।३२।१०)। ग्रनिवेशनानाम् ग्रनिविशमानानाम् (नि० २।१६।१)। धान्यपशुहिरण्यादि निविशमानाय दद्यात् (कौ० ग्र० ५।९२)। **नवं कुलं स्थापयते इत्याह**। भर्तुरङ्के निविशतीं भयात् (रघु० १२।३८)। **ग्रालिङ्गन्तीमित्यर्थः**। जगाम स दमयन्त्या निवेशनम् (नै० १३।३)। **निवेशनं गृहम्**। समुद्रस्य निवेशनम् (ग्रथर्व० ६।१०६।२)। **उक्तोऽर्थः**। ग्रभ्यनुज्ञाप्य सीतां च ययौ स्वं च निवेशनम् (रा० २।४।४५)। **ग्रनन्तरोदीरित एवार्थः**। संप्रविष्टेषु गृहं निवेशनं वा (ग्राश्व० गृ० ४।६)। **निवेशनं शयनस्थानम्**। (सविता) प्रसवीता निवेशनो जगतः स्थातुरुभयस्य

यो वशी (ऋ० ४।५३।६) । **निवेशन एकत्रावस्थापयिता, विश्रमयिता** स्योना पृथिवि भवानृक्षरा निवेशनी (ऋ० १।२२।१५)। **निवेशनी गृहस्य प्रकल्पयित्री, विश्रमस्य दात्री ।** ह्वयामि रात्रीं जगतो निवेशनीम् (ऋ० १।३५। १)। **निवेशनीं विश्रमयित्रीं विरमयित्रीम् ।** निवेशं चक्रिरे सर्वे पुराणां नृवरास्तदा (रा० १।३४।५)। **निवेशं चक्रिरे निवेशयामासुः, वासयामासुः (पुराणि) ।** ततो निवेशाय तदा स विप्रः संशितव्रतः । महीं चचार दारार्थी न च दारानविन्दत (भा० आदि० १४।१)। **निवेशाय गृहाश्रमप्रवेशाय, गृहित्वाप्तये ।** राजन्निवेशे बुद्धिर्मे वर्तते पुत्रकारणात् (भा० वन० ६७।२)। **निवेशो विवाहः ।** निवेशे वृत्ते संवत्सरे संवत्सरे द्वौ द्वौ मासौ समाहित आचार्यकुले वसेद् भूयः श्रुतिमिच्छन्निति श्वेतकेतुः (आप० ध० १।१३।१६)। **निवेशो दारकर्म, विवाहः ।** परिवार्य गिरिं सर्वे निवेशायोपचक्रमुः (हरि० २।४२।१२)। **निवेशाय कञ्चित्कालं गतिनिरोधपूर्वकं वासाय, एवंस्थितस्य सैन्यस्य स्कन्धावार इति शिविरमिति वा समाख्या ।** निवेशाय भ्युपायामः सायाह्ने रुधिरोक्षिताः । **निवेशाय संवेशाय ।** निवेशाय ययौ वेश्म विदुरस्य महात्मनः (भा० उ० ६१।३४)। **उक्तोऽर्थः ।** अहं चाप्यनिविष्टो वै भीमसेनश्च पाण्डवः (भा० आदि० १६४।२४)। **अनिविष्टोऽकृतदारः, अकृतोद्वाहः ।** निविष्टमुदधेः कूले तं प्रपेदे बिभीषणः (रघु० १२।६८)। **निविष्टं कृतशिविरस्थितिम् ।** धिग्भोः स्वर्गं भीतदेवैर्निविष्टम् (प्रतिमा० ६।१७)। **निविष्टमध्युषितम् ।** भागः पुनः पाण्डवानां निविष्टस्तं नः कस्मादाददीरन्परे वै (भा० उ० २६।३४)। **निविष्टो न्यासरूपेण स्थितः ।** समृद्धमतिरम्यं च पुलस्त्येन निवेशितम् (पुरम्) (वि० पु० २।१५।६)। **निवेशितं वासितम् ।** निवेष्टुकामोस्मि नरेन्द्र कन्याम् (वि० पु० ४।२।७७)। **वोढुकामोस्मीत्याह ।** निवेष्टुकामस्तु पुरा अष्टावक्रो महातपाः । ऋषेरथ वदान्यस्य कन्यां वव्रे महात्मनः (भा० अनु० १६।११)॥ **निवेष्टुकामो दारैरर्थी ।** निवेष्टुकामो रोगार्तो यियक्षुर्व्यसने स्थितः (ना० मनु० सं० १।४५)। दौःष्यन्तिमप्रतिरथं तनयं निवेश्य (शा० ४।२०)। **निवेश्य परिणाय्य, गृहिलामुपनीय ।** संभाव्य पुत्रान्कालेन यौवनस्थान्निवेश्य च (भा० शां० २८८।८)। **निवेश्य दारैः संयोज्य, गृहस्थाश्रमं प्रवेश्य ।** खलीनान्यथ योक्त्राणि (भा० भीष्म० ५४।५६)। **खलीनानि निवेश्यानीति नीलकण्ठः ।** स निवेश्य कुशावत्यां रिपुनागाङ्कुशं कुशम् (रघु० १५।६७)। **निवेश्य प्रतिष्ठाप्य ।** निवेश्यं तु पुनस्तेन सदा तारयता पितॄन् (भा० शां० ३५।२८)। **निवेश्यं गृहिणा भवितव्यम् ।** भवान्निवेश्यः प्रथमं ततोऽयं भीमो महाबाहुरचिन्त्यकर्मा (भा० आदि० १६१।८)। **निवेश्यः=निवेशार्हः, विवाह्यः ।**

पूजयित्वा कुरुश्रेष्ठो दैवतानि निवेश्य च (भा० सभा० ४।६)। **निवेश्य द्वारादिषु स्थानेषु स्थापयित्वा।** नैवेशिकं स्वर्णधुर्यं दत्त्वा…(याज्ञ० १।२१०)। **निवेशनार्थं गार्हस्थ्यार्थम् भवतीति नैवेशिकम्।** नैवेशिकानि च ततः श्रोत्रियेभ्यो गृहाणि च (याज्ञ० १।३३३)। **नैवेशिकानि विवाहोपयोगीनि कन्यालङ्कारादीनि।** महाकुले निवेष्टव्यम् (भा० १०४।१३६)। **विवाहं कुर्यादित्यर्थः।** द्वावम्भसि निवेष्टव्यौ गले बद्ध्वा दृढां शिलाम् (भा० उ० ३३।६०)। **निवेष्टव्यौ निवेशयितव्यौ मज्जयितव्यौ।** नैवेशिकं चाभिमतं ददतां या गतिः शुभा (भा० द्रोण० ७८।२४)। **नैवेशिकं सोपकरणं गृहम्। नैवेशिकायेति पाठे तु गृहाश्रमोन्मुखायेत्यर्थ इति नीलकण्ठः।**

**—वृ (वृञ् वरणे)।** शरवर्षेण निववार रणे हरिम् (रा० ७।७।२५)। **निववार प्रतिबिबेध, अपाकरोत्।** षट् त्रिंशद्धरिकोटयश्च निवव्रुर्वानराधिपम् (भट्टि० १४।२९)। **निवव्रुः परिचिक्षिपुः, वेष्टयामासुः।** तन्माता कीर्तिसेनाया दासीः पार्श्वान्न्यवारयत् (कथा० २९।८४)। **न्यवारयात् अपासेधत्, अपागमयत्।** निवारयामासुर्देवापेरभिषेचनम् (भा० उ० ५०६२)। **प्रतिषिषिधुरित्यर्थः।** शरीरस्य स्रोतांसि निवारयाञ्चकार (नि० २।१६)। **निवारयाञ्चकार रुरोध।** न्यवारयत वादित्राणि कंसः सव्येन पाणिना (हरि० २।३०।७)। **प्रत्यषेधदित्यर्थः।** पापान्निवारयति योजयते हिताय (भर्तृ० २।७२)। **उक्तोऽर्थः।** अवासृजो निवृताः सर्तवा अपः (ऋ० १।५७।६)। **निवृता रुद्धाः।** परिक्षिप्तं तु निवृतम् इत्यमरः। शॄ वायुवर्णनिवृतेषु (पा० ३।३।२१ सू० वा०)। **शारो नीशारो निवृतम्।**

**—वृज् (वृजी वर्जने)।** षष्टिं सहस्रा नवतिं नव श्रुतो नि चक्रेण रथ्या दुष्पदावृणक्। (ऋ० १।५३।९)। **न्यवृणक् = न्यभुजः, अवानमयः।** समक्षमेनं गृणते निवृङ्धि (ऋ० १०।८७।११)। **निगृह्य वर्जय इत्यर्थः।**

**—वृत् (वृतु वर्तने)।** निवर्तध्वं माऽनुगात (ऋ० १०।१९।१)। **निवर्तध्वं प्रतियात।** निवर्तस्व हृदयं तप्यते मे (ऋ० १०।९५।१७)। **उक्तोऽर्थः। व्रजन्ति** न निवर्तन्ते स्रोतांसि सरितां यथा। आयुरादाय मर्त्यानां तथा रात्र्यहनी सदा॥ यायिन्यो न निवर्तन्ते सतां मैत्र्यः सरित्समाः। **निवर्तन्ते पश्चाद् यान्ति, पृष्ठतो गच्छन्ति, प्रतीपं यन्ति।** न सामि निवर्तेत (श० ब्रा० २।३।२।१४)। **कार्यमध्ये न विरमेत्, प्राक् परिणामान् न विरामं कुर्यात्।** न्यवर्तन्तातपत्राणि राज्ञामपगतोष्मणाम् (कथा० १८।७१)। **अनुपयोगीन्यभवन्नित्यर्थः।** यक्षिण्योत्सादितं सर्वम् अद्यापि न निवर्तते (वनम्) (रा० १।२४।३२)। **अद्यापि न निवर्तते =**

**अद्यापि न परिवर्तते, अवस्थान्तरं न गतम्। उत्सादकृता समवस्था वर्तत इत्यर्थः।** त्रयो धर्मा निवर्तन्ते ब्राह्मणात् क्षत्रियं प्रति। अध्यापनं याजनं च तृतीयश्च प्रतिग्रहः (मनु० १०।७७)॥ **निवर्तन्ते न सङ्क्रामन्ति, क्षत्रियं प्रति न यान्तीत्यर्थः। द्विजत्वात्प्राप्तानि भवन्ति वार्यन्ते।** निवर्तेरंश्च तस्मात्तु संभाषासहासने। दायाद्यस्य प्रदानं च यात्रा चैव हि लौकिकी (मनु० ११।१८४)॥ **निवर्तेरन् निवृत्तानि भवन्ति। नासौ पतितः सपिण्डस्तानि भजते, तानि लभत इत्यर्थः।** यतो वाचो निवर्तन्ते (तै० उ० २।४)। **यद्वाग्विषयो न भवतीत्याह।** न च निम्नादिव सलिलं निवर्तते मे ततो हृदयम् (शिशु० ३।२)। **निवर्तते व्यपवर्तते।** प्रसमीक्ष्य निवर्तेत सर्वमांसस्य भक्षणात् (मनु० ५।४९)। **मांसस्य भक्षणं परिहरेदित्यर्थः, मांसस्य भक्षणादात्मानं परिहरेदिति वा।** रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्। पुरुषस्यात्मानं प्रकाश्य निवर्तते तथा प्रकृतिः (सां० का० १५९)॥ **निवर्तते निवृत्तक्रिया भवति। प्रवृत्तिरस्या अवसिता भवति।** अथवा ते मतिस्तत्र राजपुत्रि निवर्तते (भा०)। **निवर्तते निष्ठिता वर्तते। दृढं सक्ता वर्तत इत्यर्थः।** एवं तस्य तदा बुद्धिर्दमयन्त्यां न्यवर्तत (भा० वन० ६२।१५)। अत्यङ्कुशमिवोद्दामं गजं मदजलोद्धतम्। प्रधावितमहं दैवं पौरुषेण निवर्तये (रा० २।२३।२०)॥ **निवर्तये पराङ्मुखी करोमि।** निवर्त्यतां परीहासः प्रस्तुतं वर्त्यतामिति (बृ० श्लो० सं० ५।१९४)। **निवर्त्यतां विरम्यताम्।** स वै न्येव वर्तयते केशान् न वपते (श० ब्रा० ५।५।३।६)। **निवर्तयतेऽवकृन्तति, कर्तित्वा ह्रसयति।** केशान् निवर्तयीत श्मश्रूणि वापयीत (आश्व० श्रौ० २।१३।२३)। **उक्तोऽर्थः।** लौहेन च क्षुरेणौदुम्बरेण नि केशान्वर्तयते वापयते श्मश्रूणि (आप० श्रौ० ८।१४।१)। **उक्तोऽर्थः।** निवृत्तश्च दिवाकरः (भा० वन० १६८२१)। **निम्लुक्तः, अस्तं गत इत्यर्थः।** पिता यस्य निवृत्तः स्यात् (मनु० २।२२१)। **निवृत्तो वृत्त उपरतो मृतः।** तस्मान्निवृत्तदक्षिणां न प्रतिगृह्णीयात् (श० ब्रा० ३।५।१।२५)। **निवृत्ता प्रत्यर्पिता, प्रतिदत्ता।** निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते (मनु० १२।८९)। **निवृत्तमिति कर्मसंज्ञोक्ता।** त्वया समुद्यतो दातुं कथं सोऽर्घो निर्वर्तितः (मार्क० पु० ६९।५१)। **निर्वर्तितः प्रत्याख्यातः। निरस्तः।** समाहूतश्च राजेन्द्रो न शक्ष्यति निवर्तितुम् (भा० सभा० ४८।१९)। **द्यूतं प्रत्याख्यातुं न क्षमिष्यत इत्यर्थः।** पञ्चनिवर्तना मदीया भूमिः (याज्ञ० २।६५० मिताक्षरायाम्)। **निवर्तनं क्षेत्रपरिमाणविशेषः।** षडेव निवर्तनानि निरुपहतानि करोति (बौ० ध० ३।२।२।२) **निवर्तनं नाम भूम्याः कर्षणं कृषीवलानां प्रसिद्धम्—इयदेकं निवर्तनमिति इति गोविन्दस्वामी। प्रत्ययोधयन्।** प्रार्थयाना यशो दीप्तं मृत्युं कृत्वा निवर्तनम् (भा० भीष्म०

५७।३)। मृत्युरेव निवर्तनहेतुर्नान्य इत्यर्थः। निवर्तनं च तत्रास्य त्रीणि पद्मानि वै विभुः (भा० अनु० १०७।१६)। निवर्तनं नियमेन वर्तनं वृत्तिः। आवर्तनं निवर्तनं यो गोपा अपि तं हुवे (ऋ० १०।१६।४)। निवर्तनं प्रत्यागमनम्। नीवृज्जनपदौ देशे (अमरः)। नियतं वर्ततेऽस्मिन्निति तद्व्युत्पत्तिरिति स्वामी।

—व्यध् (व्यध ताडने)। तद्यत्रैनं निविध्यन्ति पशुम् (श० ब्रा० ३।८।१। १६)। निविध्यन्ति निपातयन्ति। तं च भूयो न्यविध्यत (भा० कर्ण० २५।५)।

—व्रश्च् (ओ व्रश्चू छेदने)। पव्येव राजन्नघशंसमजर नीचा नि वृश्च (ऋ० ६।८।५)। निवृश्च छिन्धि छित्वा निपातय।

—शम् (शमु उपशमे, शम लक्ष आलोचने)। निशम्य च बहून्वाला-न्कृष्णान्पुच्छसमाश्रितान् (भा० आदि० २३।३)। निशम्य दृष्ट्वा। अन्यत्र प्रायशो निशामयतिः श्रवणे प्रसिद्धः। क्रीडतो बालकस्येव तस्य निशामय (वि० पु० १।२।१८)। निशामय जानीहि। चक्षुर्ददानि ते पुत्र युद्धं तत्र निशामय (भा० भीष्म० २।६)। निशामय पश्य। अग्निष्टे निशमयतु यदि ते मन उद्यतम् (अथर्व० ६।१११।१)। नितरां शान्तं करोत्वित्याह। आगच्छता महाराज वाहीकेषु निशामितम (भा० कर्ण० ४५।५)। निशामितं श्रुतम्।

—शास् (शासु अनुशिष्टौ)। यस्ते भरादन्नियते चिदन्नं निशिषत् (ऋ० ४।२।७)। निशिषत् न्यशिषत् उपाहरत् अदाशत्।

—शुम्भ् (शुभ शुम्भ भाषणे, भासन इत्येके, हिंसायामित्यन्ये)। आजासः पूषणं रथे निशुम्भास्ते जनश्रियं देवं वहन्तु बिभ्रतः (ऋ० ६।५५।६)। निशुम्भाः स्थिरं धीरं क्रामन्त इत्यर्थः।

—शो (शो तनूकरणे)। विवृत्य दूरमधरौ दन्तान्तेनापि निश्यति (बृ० श्लो० सं ७।४१)। निश्यति दशतीत्यर्थः। यज्ञस्य वा निशितिं वोदितिं वा (ऋ० ६।१५।११)। निशितिः संस्कारः। आनट् इत्यनुषङ्गः।

—श्लिष् (श्लिष आलिङ्गने)। ता प्रणिज्य निश्लेषयेत् (श० ब्रा० २।५।२।१५)। संसक्ताः कुर्यात् इत्याह।

—ष्ट्यै (ष्ट्यै शब्दसङ्घातयोः)। यैव दिव्या शुग्या गायत्र्यां हविर्धान इति सा त आप्यायतां निष्ट्यायताम् (श० ब्रा० १४।३।)। निष्ट्यायतां स्थिरी भवतु।

—सञ्ज् (षञ्ज सङ्गे)। तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोरित्यमरः। निषङ्गः पत्तिवाह्यस्तूण इति (भा० उ० १५५।३) इत्यत्र नीलकण्ठः। जनयति

हि निषङ्गादेकधैवाशु नाशम् (का० नी० सा० १५।६७) निश्चितः सङ्गो निषङ्गः ।

—सद् (षद्लृ विशरणगत्यवसादनेषु) । उत पोता निषीदति (ऋ० ४।६।३) । निषीदत्युपविशति । नालम्बते दैष्टिकतां न निषीदति पौरुषे (शिशु० २।८६) । न निषीदति न तिष्ठति । पौरुषमात्रावष्टम्भो न भवतीत्यर्थः । यन्निषीदति तद्गुरु (पा० ३।२।१२६) सूत्रे वृत्तौ गुणलक्षणे धातोः शता नेति प्रत्युदाहरणं स्थितम् । निषीदति न्यञ्चति मज्जतीत्यर्थः । निषेदुषीमासनवन्धधीरः (रघु० २।६) । निषेदुषी निषण्णा, निपद्यमाना, प्रवणमासीना । अष्टावक्रं पितुरङ्के निषण्णमपाकर्षद् गृह्य पाणौ रुदन्तम् (भा० वन० १३२।१८) । उक्तोऽर्थः । हस्त्यारोहा निषादिनः (अमरः) । निर्याणनिर्यदसृजं चलितं (दन्तिनम्) निषादी (शिशु० ५।४१) । निषादः पञ्चमो वर्णः । निषण्णः संश्रितो देहोऽस्य सः । यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च । गृणन्ति नित्यकर्म्माणम् .....(भा० शां० ४७।२६) ॥ निषत्सु कर्माङ्गाद्यवबद्धदेवतादिज्ञानवाक्येषु । निक्रमणं निषदनं विवर्तनं यच्च पड्वीशमर्वतः (ऋ० १।१६२।१४) निषदनमासिका । निषद्वरस्तु जम्बाल इत्यमरः । निषद्वरः कलिलम् । निषद्वरो निषीदतां वेद्यामासीनानां वर इत्यर्थे (वा० सं० २८।४ इत्यत्र) प्रयोगः । शां० श्रौ० १५।१६।१ सूत्रे मन्दोऽव्यापारस्थित इत्यस्मिन्नर्थे प्रयोगः । आपणस्तु निषद्यायाम् इत्यमरः । केचिद् गुर्वीमित्य संयन्निषद्यां क्रीणन्ति स्म प्राणमूल्यैर्यशांसि (शिशु० १८।१५) । उक्तोऽर्थः ।

—सिच् (षिच क्षरणे) । यस्य त्वया व्रणविरोपणमिङ्गुदीनां तैलं न्यषिच्यत मुखे कुशसूचिविद्धे (शा० ४।१६) । न्यषिच्यत अक्षार्यत । सौवर्णं राजतं चापि यथा भाण्डं निषिच्यते (भा० शां० २६०।११) । ताम्रादिमयं पात्रं सौवर्णेन राजतेन वा रसेन निषिच्यत इत्यर्थः । निषिञ्चन्माधवीमेतां लतां कौन्दीं च नर्तयन् विक्रम० २।४) । निषिञ्चन् प्रजनं प्रजननं कारयन् । मधुबिन्दुभिरभिवर्षन्निति च । निषेकादिः श्मशानान्तो मन्त्रैर्यस्योदितो विधिः (मनु० २।१६) । निषेको गर्भाधानम् । प्रजानिषेकं मयि वर्तमानं सूनोरनुध्यायत चेतसेति (रघु० १४।६०) । निषिच्यत इति निषेकः । मातरि रेतःसेकः । योषित्सु तद्वीर्यनिषेकभूमिः (कु० ३।१६) । उक्तोऽर्थः । सुखसलिलनिषेकः (ऋतु० १।२८) । तैलनिषेकबिन्दुना (रघु० ८।३८) । तैलस्य निषेकः क्षारणं निपातः । निषेचनं बहिष्टे अस्तु (अथर्व० १।३।१) । निषेचनं प्रस्रावः । ग्लायन्नुदपात्रं निषिच्य (का० श्रौ० ६।१०।४) । निषिच्य निनीय, आवर्ज्य ।

—सिध् (षिध गत्याम्)। न्यषेधत् पावकास्त्रेण रामस्तद् (आसुरमस्त्रम्) (भट्टि० १७।८७)। **न्यषेधत् अपारुणत्।** न्यषेधि शेषोऽप्यनुयायिवर्गः (रघु० २।४)। **अनुगमनान्निवारित इत्यर्थः।** न कश्चन भ्रातृषु तेषु शक्तो निषेद्धुमासीदनुवर्तितुं वा (रघु० १४।४३)। **निषेद्धुं विरोद्धुं प्रतिवदितुम्।** निषिद्धशत्रुः (रघु० १८।१)। **निवारितरिपुरित्यर्थः।** निषिद्धो भाषमाणस्तु सुवर्णं दण्डमर्हति (मनु० ८।३६१)। **निषिद्धो वारितः।**

—सिव् (षिवु तन्तुसन्ताने)। तस्मिन्त्सर्वाणि यज्ञरूपाणि निष्यूतानि भवन्ति (श० ब्रा० ५।३।५।२०)। **निष्यूतानि अनुस्यूतानि सम्बद्धानि अनुषक्तानि।** अभि शुक्लानि च कृष्णानि च लोमानि निष्यूतो भवति (रुक्मपाशः) (श० ब्रा०)। **निष्यूतोऽनुविद्धः। कृतसीवनः।**

—सृज् (सृज विसर्गे)। पराच्यो निसृजेयुः (आश्व० गृ० ४।७।१२)। **पराङ्मुख्यस्तत्स्थानान्निर्गच्छेयुरित्यर्थः।** निसृष्टशुष्काशनिगर्जितं धनुः (पञ्चत० ३।१६)। **निसृष्टं सृष्टम्। निशब्दो विशेषकृन्न।** स्वयम्भूस्तानुवाचेदं निसृष्टोऽत्र विधिर्मया (भा० शां० २०६।१२)। **निसृष्टः सृष्टो रचितः प्रणीतः।** निसृष्ट इव कालेन युगान्ते ज्वलनो महान् (भा० वन० ८६।११)। **उत्पादितः।** पञ्चालराजेन सुता निसृष्टा (भा० आदि० १६३।२३)। **निसृष्टा दत्ता।** अग्निर्निसृष्टो दत्तश्च गरो दाराश्च दूषिताः (भा० पु० १।१३।२३)। **अग्निर्दत्त इत्यर्थः।** अनिसृष्टानि गुरुणा (ज्येष्ठभ्रात्रा) फलानि मनुजर्षभ। भक्षितानि ······(भा० शां० २३।३२)॥ **अनिसृष्टानि अदत्तानि।** न स्वामिना निसृष्टोपि शूद्रो दास्याद् विमुच्यते (मनु० ८।४१४)। **निसृष्टस्त्यक्तः।** सत्यप्रतिज्ञ मन्ये त्वं काममेकं निसृष्टवान् (भा० वन० २७७।२१)। **वरमेकं दत्तवानित्याह। न्यस्तनिसृष्टे इति पर्यायौ पठत्यमरः।** सवज्रमथ फेनं तं क्षिप्रं वृत्रे निसृष्टवान् (भा० उ० १०।३६)। **निसृष्टवान् क्षिप्तवान्।** निसृष्टं पापं हि परपरिग्रहमभीप्सता (भा० शां० ७।४१)। **निसृष्टं चरितम्।** धर्मराजेन निसृष्टस्तु सिंहः क्षुद्रमृगानिव। धार्तराष्ट्रानिमान्पापान्निष्पिषेयं तलासिभिः (भा० सभा० ७०।१७)॥ **निसृष्टोऽनुज्ञातः।** ते निसृष्टाः कुमारेण धीमता वालिसूनुना (रा० ५।६१।१३)। **उक्तोर्थः।** निसृष्टेषु त्वया राजन् पाण्डवेषु महात्मसु (भा० आदि० २०६।२६)। **उक्तोऽर्थः।** अनिसृष्टोसि निष्क्रान्तो गृहात्ताभ्यामनिन्दितः (भा० वन० २१५।७) **उक्तचर एवार्थः।** निसृष्टार्थो मितार्थश्च तथा शासनहारकः (दूतः) (का० नी० सा० १३।३)। **यथाकामेन निसृष्टो न्यस्तः सन्ध्यादिरर्थो यस्मिन्सः।** यः स्वामिना नियुक्तोपि धनायव्यय-

पालने । कुसीदकृषिवाणिज्ये निसृष्टार्थस्तु स स्मृतः (बृहस्पतिः) ॥ द्यूतेऽद्वितीयः शकुनिर्नरेषु कुन्तीसुतस्तेन निसृष्टकामः (भा० सभा० ६७।४६)। **निसृष्टकामः सम्पादितेच्छः, सकामः कृतः । द्रौपद्याः पणीकरणे प्रेरितः ।** एवं स्वभावं ज्ञात्वा प्रजापतिनिसर्गजम् (मनु० ६।१६) **हिरण्यगर्भसृष्टिकालजनितमित्यर्थः ।** पूर्वे प्रजापतिनिसर्गे च दक्षमाहुः प्रजापतिम् (भा० भीष्म० ६८।६)। **निसर्गः सर्गः । निशब्दो विशेषकृन्न ।** पितामहनिसर्गेण तुष्टा ह्येतद् ब्रवीमि ते (भा० वन० २६३।१८)। **निसर्गेण आज्ञया । प्रसादेनेति संस्कृतशार्मण्यकोषः ।** देव्या वरनिसर्गेण तस्या भर्ता विनिर्मितः (हरि० १००३३)। **वरनिसर्गो वरप्रदानम् ।** अनुमान्य ददौ तेषां निसर्गं मधुभक्षणे (रा० ५।६१।१२) । **निसर्गोऽभ्यनुज्ञा ।** निसर्गे पायुरिन्द्रियम् (भा० शां० २१।२१)। **निसर्गो विसर्गः, मलत्यागः ।** न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः (मनु० ८।१४३)। **निसर्गोऽन्यस्मै दानम् ।** स्त्रियो हि नाम खल्वेता निसर्गादेव पण्डिताः (मृच्छ० ४।१६)। **निसर्गेण स्वभावेन ।** निसर्गशालीनः स्त्रीजनः (माल० ४)। **उक्तोऽर्थः ।** निसर्गः स हि धीराणां यदापद्यधिकं दृढाः (कथा० २०।३१)। **निसर्गः प्रकृतिः ।** सर्वत्रात्मनिसर्गं गुणं ब्रूयात् (कौ० अ० ७।१५।२६)। **निसर्ग आत्मसमर्पणम् ।** निसर्गाद् ब्रह्मणश्चापि वरुणो यादसां पतिः । जग्राह वै भृगुं पूर्वमपत्यं सूर्यवर्चसम् (भा० अनु० ८५।२३) ॥ **निसर्गो वरदानम् ।**

—सेव् (षेवृ सेवने) । निषेवते श्रान्तमना विविक्तम् (शा० ५।५)। **निषेवते सेवते भजते । निर्विशतीत्यर्थः ।** कौलिको विष्णुरूपेण राजकन्यां निषेवते (पञ्चत० १।१०२)। **निषेवते भुङ्क्ते ।** विपत्प्रतीकारपरेण मङ्गलं निषेव्यते भूतिसमुत्सुकेन वा (कु० ५।७६)। **निषेव्यते प्रचर्यते, आचर्यते । वैखानसं** किमनया व्रतमा प्रदानाद् व्यापाररोधि मदनस्य निषेवितव्यम् (शा० १।२७)। **निषेवितव्यं जोषणीयम्, आचरणीयम् ।**

—स्था (ष्ठा गतिनिवृत्तौ)। निष्ठिते सायमाशप्रातराशे (गो० गृ० १।३।१६)। **निष्ठिते सम्पन्ने निष्पन्ने । निष्ठानिष्पत्तिनाशान्ताः इत्यमरः ।** अथानिष्ठित एवास्मिन्नालापे पूरिताम्बरः (बृ० श्लो० सं० ४।४०)। **अनिष्ठितेऽनवसितेऽसमाप्ते ।** ब्राह्मणावसथाश्चैव कर्तव्याः सुनिष्ठिताः (रा० १।१३।१०) । **सुनिष्ठिताः सुप्रतिष्ठिताः** (कतकः)। दिवि ते तूलमोषधे पृथिव्यामसि निष्ठितः (अथर्व० १६।३२।३)। **निष्ठितो बद्धमूलः स्थितः । ओषधिरिह पुमान्, लोके तु स्त्रियां नियतः ।** तां निष्ठितां बद्धकटां दृष्ट्वा रामः सुदर्शनाम् (पर्णशालाम्) (रा० २।५६।२१)। **अन्तर्बहिः काष्ठभित्त्या सुप्रतिष्ठापितामु इत्याह ।** सर्गाः पुनरन्ये त्वनिष्ठिताः (यो० वा० ६(२)

१२८।४१)। **अनिष्ठिता अव्यवस्थिताः।** लोकेस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ (गीता ३।३)। **निष्ठा निश्चितं दर्शनम्, सिद्धान्तः।** या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः (मनु० १२।९५)॥ **तमोनिष्ठा नरकफलाः।** यद्वा तपसि ते निष्ठा (भा० पु० ३।९।३८)। **निष्ठा श्रद्धा भक्तिः।** कालेनाल्पेनाथ निष्ठां गतां तां सभाम् (भा० सभा० ५६।२०)। **निष्ठां गतां समाप्तिमुपेताम्, समाप्तनिर्माणाम्।** सेतुः स्वल्पेन कालेन निष्ठां प्राप्तोऽभवत्तथा (रा० ५।६५।४०)। विविधेषु यदा निष्ठां ज्ञानेपूपजगाम सः (गो० सं० रा० १।८०।१३)। अत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा (शा० प्रक्षिप्तः श्लोकः)। **अपभ्रंशनिष्ठा पतनान्ता।** भूमौ जायन्ति पुरुषा भूमौ निष्ठां व्रजन्ति हि (भा० अनु० ६२।४६)। **निष्ठा मृत्युः।** निष्ठामापत्स्यते मूढः क्रुद्धे गाण्डीवधन्वनि (भा० उ० ५।१०)। पुनर्द्रष्टासि कर्णस्य निष्ठामेतां तथात्मनः (भा० द्रोण० १७४।४२)। **घटोत्कचस्य दुर्योधनं प्रत्युक्तिः।** (शृणु) चरितं पार्थिवेन्द्रस्य यथा निष्ठां गतश्च सः (भा० आदि० ४९।६)। इयं च निष्ठा नियतं प्रजानाम् (बुद्ध० ३।६१)। **निष्ठाऽन्तः।** पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्। तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे (मनु० ८।२२७)॥ **निष्ठा पूर्त्तिः।** घ्राणं जिह्वा च चक्षुश्च त्वक् श्रोत्रं मन एव च। निष्ठां नाधिगच्छन्ति बुद्धिस्तामधिगच्छति (भा० आश्व० २२।१२)॥ **निष्ठा निश्चयः।** ततः सञ्जायते निष्ठा जन्मैतत् सप्तधा विदुः (भा० आश्व० २०।२७)। **निष्ठा निश्चयात्मिका बुद्धिः।** त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा (आप० ध० २।२३।६)। **निष्ठा निर्णयः।** निष्ठा कृता तेन (गुरुणा) यदा सहः स्यात् (भा० शां० ८३।५४)। **निष्ठा सिद्धान्तः। सहः =ऐकमत्ययुतः।** निष्ठां नयत तावत्तु ततो मां द्रष्टुमर्हति (रा० ३।५।२२)। **निष्ठां स्थानं स्वर्गमिति यावत्।** तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः (गीता १७।१)। **निष्ठा स्थितिः, अवस्थितिः।** मनो निष्ठाशून्यं भ्रमति च किमप्यालिखति च (मालती० १।३१)। **निष्ठा स्थैर्यम्।** आसीन्निष्ठानको घोरो निर्घातश्च महानभूत् (भा० सभा० ८१।२२)। **निष्ठानकः प्रलयदुन्दुभिश्चण्डवात इत्यर्थ इति नीलकण्ठः।** आजैश्चापि वाराहैर्निष्ठानवरसंचयैः (रा० २।९१।६७)। **निष्ठानं व्यञ्जनं ज्ञेयमिति हलायुधः। स्यात्तेमनं तु निष्ठानम् इत्यमरः। नितिष्ठत्यन्नमनेनेति निष्ठानम्। नितिष्ठतीति निष्ठुरः। मद्गुरादयश्चेति निपातितम्।** स एवात्मनिष्ठ आत्मप्रतिष्ठ आत्मानं क्षेमं नयति

(बौ० ध० २।१०।१८।११)। आत्मनिष्ठः=यथाविध्यात्मोपासकः। निष्ठाप्य वैष्णवमसीत्यालभते (का० श्रौ० ८।५।२२)। निष्ठाप्य (पूर्णं हविर्धानं) निष्पाद्य। तस्यामर्थं निष्ठाप्य (श० ब्रा० १४।६।७।८)। निष्ठाप्य अवस्थाप्य। अर्थं शिश्नम्।

—स्ना (ष्णा शौचे)। शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि (भा० पु० ११।११।१८)। न निष्णायात् कौशलं नाप्नुयात्। निष्णातोपि च वेदान्ते साधुत्वं नैति दुर्जनः (भा० वि० १।८७)। निष्णातः कुशलः। शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति। उक्तोऽर्थः। तत्र तत्र च निष्णाताध्यक्षान्कुशलाञ्शुचीन् (याज्ञ० १।३२२)। निष्णातान् अनन्यव्यापारान् इति मिताक्षरा। यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम् (याज्ञ० २।८४)। निष्णात इयता कालेनैतावद् देयमियती च वृद्धिः प्रतिमासं देयेत्येवं व्यवस्थितः। निष्णातश्च समागमोपि विहितस्त्वत्प्रेयसः कान्तया (मालती० १०।२४)। निष्णातः साकल्येन निर्वृत्तः।

—स्वप् (ञिष्वप शये)। नि जनान् स्वापयामसि (अथर्व० ४।५।१)। निस्वापयामसि गाढनिद्रान्कुर्म इत्यर्थः।

—हन् (हन हिंसागत्योः)। सं घोषः शृण्वेऽवमैरमित्रैर्जही न्येष्वशनिं तपिष्ठाम् (ऋ० ३।३०।१६)। एषु तपिष्ठामशनिं निजहीत्यन्वयः। निजहि प्रहर, प्रक्षिप, उत्सृज। तिग्मं तस्मिन्नि जहि वज्रमिन्द्र (ऋ० ७।१८।१८)। उक्तोऽर्थः। यथा पुंसो वृषण्यतः स्त्रियां निहन्यते मनः। एवा ते अघ्न्ये मनोधि वत्से निहन्यताम् (अथर्व० ६।७०।१)॥ निहन्यते प्रह्वी भवतीति सायणः। निहन्यते निखन्यत इति तु वयम्। तच्छङ्कुं निहन्ति सोऽन्तः पातः (श० ब्रा० ३।५।१।१)। निहन्ति निखनति। त्रिषु प्रक्रमेषु शङ्कुं निहन्ति (का० श्रौ० ८।३।७)। उक्तोऽर्थः। निहन्यते खल्वाख्यातमुपसर्गाणां तुष्ठये (वा० प्रा० ८।५७)। निहन्यते नीचैरुच्चार्यते, अनुदात्तः क्रियते, निघातोऽस्य क्रियते। अत्र हन्तिरुच्चारणक्रियो यथा ब्राह्मणं आहतमित्यत्र। देवयजीन्निहन्मः (भट्टि० २।३४)। निहन्मो घातयामः, निषूदयामः, निबर्हामः। तानेव सामर्षतया निजघ्नुः (रघु० ७।४४)। प्रजह्रुः, ताडयामासुः। कोणैर्भेयो निजघ्निरे (भट्टि० १४।२)। निजघ्निरे ताडयाम्बभूविरे अभ्यहन्यन्त। बद्धां बद्धां भित्तिशङ्कामुष्मिन्नावानावान्मातरिश्वा निहन्ति (कि० ५।३६)। निहन्ति निवर्तयति। उद्यम्य न्यवधीद्भूमौ मयं विष्णुरिवाहवे (भा० द्रोण० १७६।३६)। न्यवधीत् न्यपातयत्। वचसैव तयोर्वाक्यमस्त्रमस्त्रेण निघ्नतोः (रघु० १२।९२)।

**निघ्नतोर्बाधमानयोः**, मोघीकुर्वतोः । निहतं पदम् । **अनुदात्तमित्यर्थः ।** सकृदपि हि पारिक्षेपिकं निहतं निहतमाहुः । (चरक० वि० ८।२०) । समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः (८।१।१९ सू० वा०) । **निघातः सर्वानुदात्तता ।** ज्यानिघातकठिनत्वचः (रघु० ११।४०) । **निघात आघातः । दैवं** निहत्य कुरु पौरुषमात्मशक्त्या (पञ्चत०) । **निहत्य अभिभूय, बाधित्वा ।** निघातिकाताडनादिना दीनारादिषु यद्रूपमुत्पद्यते तदाहतमित्युच्यते (पा० ५।२।१२० सूत्रे काशिका) । **निघातिकाऽऽयसो दण्डः ।**

—हा (ओहाक् त्यागे) । नि ष हीयतां तन्वा तना च (ऋ० ७।१०४।१०, अथर्व० ८।४।१०) । **निहीयतां नियतं हीयताम् ।** नि हीयतामतियाजस्य यष्टा (ऋ० ६।५२।१) । **उक्तोऽर्थः ।** निहीयते येन यशोऽर्थसिद्ध्या (अवदा० जा० २१,३०) । **निहीयते क्षीयते ।** मुख्यानमात्यान्यो हित्वा निहीनान्कुरुते प्रियान् (भा० शां० ९३।३२) । **निहीनोऽपसदः ।**

—हृ (हृञ् हरणे) । जीवा जीवेभ्यो नि हराम एनत् (ऋणम्) (अथर्व० ६।११७।२) । **निहरामो नितरां नियमेन वाऽपाकुर्मः ।** देहि मे ददामि ते नि मे धेहि नि ते दधे । निहारं च निहरासि मे निहारं निहराणि ते स्वाहा (वा० सं० ३।५०) । **निहारं निहरासि उपहारमाहरेत्याह । निहरासीति लेटि रूपम् । नितरां ह्रियत इति निहारो मूल्येन क्रेतव्यं पदार्थं ब्रूते, उत्तरो निहारशब्दो मूल्यमाचष्टे ।** निहृते दोषे पुनः कृत्स्नं कर्म (आप० श्रौ० ९।१।१।६) । **निहृते ऽपनीते ।**

—हृष् (हृष तुष्टौ) । अथ यदुच्च हृष्यति नि च हृष्यति तदस्य मैत्रावरुणं रूपम् (ऐ० ब्रा० ३।४) । **निहृष्यति अधो गच्छति । ज्वलतोऽग्नेरौन्नत्यमुद्धर्षः । ज्वालाशान्त्या नीचत्वं निहर्ष इति सायणः ।**

—ह्नु (ह्नुङ् अपनयने) । ते निह्नुवते (श० ब्रा० ३।४।३।२१) । **प्रायश्चित्तं कुर्वन्तीत्यर्थः ।** अथ निह्नुते...नमो वः पितरः शूषायेति (गो० गृ० ४।३।१७) । **उक्तोऽर्थः ।** एते वै यज्ञमवन्ति ये ब्राह्मणाः, तदु तेभ्यो निह्नुते (श० ब्रा०) । **तान्प्रसादयतीत्यर्थः, तान्क्षमयतीति वा ।** यज्ञो वै विष्णुस्तस्मा एवैतन्निह्नुते मा त्वाऽवक्रमिषम् (श० ब्रा० १।४।५।२) । **तद्व्यतिक्रमं निष्करोतीत्यर्थः ।** नमो दिवे नमः पृथिव्या इति प्रस्तरे निह्नुवते (ऐ० ब्रा० १।२६) । **निह्नवः प्रस्तरे पाण्योर्निधानमिति वै विदुरिति षड्गुरुशिष्यः ।** प्रत्येत्य प्रस्तरे निह्नुवते (का० श्रौ० ८।२।८) । **उक्तोऽर्थः ।** यस्य त्वेषामग्रतः सिध्येत् स निह्नुतमेवाग्नौ हुत्वा ...(गो० गृ० १।४।२५) । **निह्नुतं तूष्णीम् ।**

तस्यैव व्यभिचारस्य निह्नवः सम्यगुच्यते (मनु० ९।२१)। **निह्नवः पापापनोदनं शोधनं प्रायश्चित्तम्। अनुपचरितो धात्वर्थ इहाश्रितः।** निह्नवे भावितो दद्याद् धनम् (याज्ञ० २।११)। **निह्नवोऽपलापः।** सूक्ष्मत्वान्न स (धर्मः) विज्ञातुं शक्यते बहुनिह्नवः (भा० शां० २६३।३६)। **बहुनिह्नवो बहुतिरोहितार्थः। बह्वनुक्तार्थ इति यावत्।** न निह्नवं मन्त्रगतस्य गच्छेत् (भा० उ० ३७।२६)। **मन्त्रस्यापहारं न गच्छेत्, मन्त्रं न दूषयेदित्यर्थः। अविश्वासेऽपह्नवे निकृतावपि निह्नव इत्यमरः।**

—ह्वे (ह्वेञ् स्पर्धायां शब्दे च)। त्वेषं रूपं नमसा निह्वयामहे (ऋ० १।११४।५)।

## न्याङ् (नि+आङ्)

—कृ (डुकृञ् करणे)। पुनरेना निवर्तय पुनरेना न्याकुरु (ऋ० १०।१९।२)। **न्याकुरु पृष्ठतो नियच्छ।**

—धा (डुधाञ् धारणपोषणयोः)। यं देवासो मर्त्येष्वादधुः (ऋ० ८।७३।२)।

—धृ (धृञ् धारणे)। न्यस्मिन्दध्र आ मनः (ऋ० ८।१७।१३)। **न्यादध्रे न्यक्षिपत् प्रासञ्जयत्।**

## निप्र (नि+प्र)

—हन् (हन हिंसागत्योः)। जासिनिप्रहणनाटक्राथपिषां हिंसायाम् (पा० २।३।५६)। **चौरस्य निप्रहन्ति। चौरस्य प्रणिहन्ति। चौरं घातयतीत्यर्थः। नार्थः प्रनिभ्याम्।**

## निसु (नि+सु)

—स्वप् (ञिष्वप शये)। किमस्मान्दुच्छुनायसे नि षु स्वप (ऋ० ७।५५।४)। **नीचैः सुस्वपिहीत्याह। निशब्दोऽधोऽर्थे। सुः सौष्ठवे।**

# अधि

—अञ्ज् (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु)। प्रतिचीन आङ्गिरसोऽध्यक्तो नः पुरोहितः (अथर्व० १०।१।६)। **अध्यक्तः सज्जः सन्नद्धः। अध्यक्ष इति पाठान्तरम्।**

—अश् (अश भोजने)। विरुद्धाध्यशनाजीर्णैस्तथैवात्यशनादपि (का० सं० खिल० अन्तर्वत्नी० श्लो० ६७)। **प्राग्भुक्तमन्नं यावन्न जीर्यति तावदशनमध्यशनम्।** साजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते (सुश्रुते)।

—अस् (असु क्षेपे) । तयोश्छदिरध्यस्यति (का० श्रौ० ८।३।२३) । उपरिष्टान्न्यस्यति । छदिः क्लीबम् । पाणिनीये लिङ्गानुशासने तु छदिः स्त्रियाम् इति सूत्रम् । अन्यत्रापि वैदिके साहित्ये च्छदिः क्लीबं दृष्टम् । सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति । बाह्यधर्मानात्मन्यध्यस्यति (शङ्करः) । अध्यस्यति मिथ्याऽऽरोपयति । शुक्तौ रजतमध्यस्तम् । ब्रह्मणि जगदध्यस्तम् । उक्तोऽर्थः । अतस्मिंस्तद्बुद्धिरध्यासो मिथ्याज्ञानम् । स्मृतिरूपः परत्र पूर्वदृष्टावभासोऽध्यास इति च शङ्करः (ब्र० सू० शां० भा० १।१) । प्रतिषिद्धांस्तथाऽऽचारान् अध्यस्यापि पुनः पुनः (बौ० ध० ४।२।२।९) । अध्यवसाय, निश्चित्य ।

—आस् (आस उपवेशने) । सप्तमे मन्त्रमध्यासीत (कौ० अ० १।१६।१६) । मन्त्रार्थं (विविक्ते) आसीतेत्यर्थः । अये सिंहासनमध्यास्ते वृषलः (मुद्रा० ३) । सिंहासनमधितिष्ठतीत्यर्थः । अध्यास्स्व चिररात्राय पितृपैतामहं पदम् (भा० वन०) । अध्यास्स्व = अधितिष्ठ । एवमाकुलतां यातः श्रुत्वाध्यास्यामहे वयम् (भा० शल्य० ४३।१०) । अध्यास्यामहे निश्चेष्यामहे । यस्मादसाविमान् विप्रानध्यास्ते प्रतिलोमजः (भा० पु० १०।७८।२४) । विप्रापेक्षयोच्चैस्तरमासनमध्यास्ते इतीममर्थं विवक्षति पुराणकारः । वेदा ये अध्यासते (ऋ० १।२५।९) । अध्यासते प्रशासति तान् वरुणो वेदेत्याह । वेदा इत्यत्र सांहितिको दीर्घः । यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते (कु० ६।५६) । अध्यासितमध्युषितं सेवितम् । धेन्वा तदध्यासितकातराक्ष्या (रघु० २।५२) । तदध्यासिता तेन सिंहेनाध्यासिताऽऽक्रान्ताऽऽरूढा । श्रूयते हि पुराणेपि जटिला नाम गौतमी । ऋषीनध्यासितवती सप्त धर्मभृतां वरा (भा० आदि १९६।१४) ॥ अध्यासितवती विवाहसम्बन्धेन तैः सहोषितवतीत्यर्थः । पर्णशालामध्यास्य (रघु० १।९५) । अध्यास्य अध्युष्येत्यर्थः । पादुके अध्यास्य (कथा० ३।५२) । तयोश्चरणन्यासं कृत्वा । भगवत्या प्राश्निकपदमध्यासितव्यम् (माल० १) । प्राश्निकासन आसितव्यम्, प्राश्निकाधिकारो ग्रहीतव्य इत्यर्थः । द्वितीयमाश्रममध्यासितुं समयः (विक्रम० ५) अध्यासितुं प्रवेष्टुम् ।

—इ (इक् स्मरणे) । यदि सुतस्य मरुतोऽधीथ (ऋ० ७।५६।१५) । सुतस्याभिषुतस्य सोमस्य स्मरथेत्याह । कियत् स्विदिन्द्रो अध्येति मातुः कियत् पितुः (ऋ० ४।१७।१२) । अध्येति स्मरति । अथ यद्यध्वर्योरन्तेवासी वा ब्रह्मचारी वैतद् यजुरधीयात् (श० ब्रा० ५।१।५।१७) । अधीयात् विद्यात्, कण्ठगतं विजानीयात् । स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय

मह्यम् (कठ० उ० १।१३)। **अध्येषि वेत्सि।** येषामध्येति प्रवसन् (अथर्व० ७।६२।३)। **अध्येति स्मरति। येषां गृहाणाम्।** अधीतीरध्यगादयम् (अथर्व० २।६।३)। **प्रागधीतान्वेदान् स्मर्तव्यान्पदार्थान्वाऽस्मार्षीत्।** अधीयन्त्युपकाराणाम् (भट्टि०     )। **उक्तोऽर्थः**

**—इ (इण् गतौ)।** सोऽवस्त्रतामात्मनश्च तस्याश्चाप्येकवस्त्रताम्। चिन्तयित्वाध्यगाद्राजा वस्त्रार्धस्यावकर्तनम् (भा० वन० ६२।१६)॥ **अध्यगाद् अवाधारयत्, अवास्यत्, निरचिनोत्।** विश्वामित्रोऽध्यगाद्यत्र ब्राह्मणत्वम् (भा० ३।८३०९)। **अध्यगात् प्रापत्।** शिशुरेवाध्यगात् सर्वं परं ब्रह्म सनातनम् (भा० अनु० १२१)। **अध्यगात् अवेदीत्। अज्ञासीत्, अध्यगीष्ट।** अध्यगा नैष्ठिकीं बुद्धिम् (भा० शां० २६२।३)। **प्राप्तवानसीत्यर्थः।**

**—इ (इङ् अध्ययने)।** श्लोकं सोऽधीत्य पुत्रेभ्यः कृतकृत्य इवाभवत् (हरि० १।२४।१५)। आ चन त्वा चिकित्सामोऽधि चन त्वा नेमसि (ऋ० ८।९१।३)। **न अधीमसि=नाधीमहे। नावदध्महे, न विजानीमः, न विद्मः।**

**—इष् (इष इच्छायाम्)।** अतस्त्वं समर्थो धर्मान्वक्तुमतोऽधिकृतः सन् अधीष्यसे ब्रूहीति (मनु० १।२ इत्यत्र मेधातिथिः)। **अधीष्यसे प्रार्थ्यसे, सत्कारपूर्वं व्यापार्यसे इत्यर्थः।** अधीच्छामो भवन्तं भवान्माणवकमुपनयेत (पा० ३।३।१६१ सूत्रे वृत्तिः)। **अधीच्छामः प्रार्थयामहे।** धीरधिषणावधूताध्येषणाः (हर्ष० १)। **अध्येषणा याच्ञा।** मासमधीष्टो मासिकोऽध्यापकः (पा० ५।१।८० सूत्रे वृत्तिः)। **मासं यावत्सत्कारपूर्वकं व्यापारित इत्यर्थः॥** अधीष्टं सत्कारपूर्वको व्यापारः (काशिका)। **अधीष्ट इति पुंसि पाठो वृत्तौ च कौमुद्यां च। पुंस्त्वं चानुपपन्नम् इति पश्यामः।** उपनयतां भवान् इमं माणवकमधीष्ट इत्यादिषूपपन्नं नाम पुंस्त्वम्।

**—ईक्ष् (ईक्ष दर्शने)।** कुहकचकितो लोकः सत्येऽप्यायमधीक्षते (हितोप० ४।१०१)। **उत्प्रेक्षत इत्यर्थः। एकाक्षरमधिकं वृत्ते।**

**—ऊह् (ऊह वितर्के)।** अथोत्तरां जुहूमध्यूहति। यजमानमेवैतद् द्विषति भ्रातृव्येऽध्यूहति (श० ब्रा० १।५।३।२०)। **अध्यूहति उपरि धत्ते।** अथाङ्गारमध्यूहति (श० ब्रा० १।२।१।६)। **अङ्गारस्योपरि निदधाति।** अत्र पत्नीशिरसि कुम्बकुरीरमध्यूहते (आप० श्रौ० १०।३।६।२१)। **उपरि क्षिपतीत्यर्थः।** सं ब्रह्मणा पृच्यस्वेति वेदेन पुरोडाशे साङ्गारं भस्माध्यूहति (आप० श्रौ० १।८।२५।१२)। **अधिवासयतीत्यर्थं इति धूर्तस्वामी।** मेधां को अस्मिन्नध्यौहत् (अथर्व० १०।२।१७)। **अध्यौहत् आवपत्, अध्यारोपयत्।** क्षत्र-

भेवैतद् विश्यध्यूहति (श० ब्रा० ३।६।३।३) । तथोपरि निधत्ते यथा विश आधारतामापद्यन्ते । तासामुपर्युच्छ्रयति । यथा धुरमध्यूहेत् । अध्युह्य हि धुर्यं युञ्जन्ति (श० ब्रा० १।४।४।१३) । अध्यूहेत् संवस्त्रयेत् ।

—कृ (डुकृञ् करणे) । तेषां प्रायश्चित्तानि वक्ष्यन्नादित आत्मज्ञानं तदुपयोगिनश्च योगानधिकुरुते (आप० ध० १।२२।१) । अधिकुरुते प्रस्तौति । नैवाध्यकारिष्महि वेदवृत्ते (भट्टि० २।३४) । वेदवृत्ते नोऽधिकारो न, अनर्हा वयं वेदवृत्तमित्याह । अस्माकं तत्रार्हत्त्वं नास्ति । अर्थी समर्थः शास्त्रेणापर्युदस्तो धिक्रियते । अधिकारवान्भवति । एतानि ब्राह्मणोऽधिकुरुते । स च वृत्ति दर्शयतीतरेषामिति शङ्क इति याज्ञ० १।३ मिताक्षरायाम् । एषु ब्राह्मणस्याधिकारोस्तीत्याह । अधेः प्रसहने (पा० १।३।३३) । तमधिचक्रे । तमभिबभूव, तेन न पराजित इति वेति वृत्तिः । अधिचक्रे न यं हरिः (भट्टि० ८।२०) । न प्रसेहे । महानसे तथाऽधिकुर्याः । महानसमधीक्षस्व । अपि चैताः स्त्रियो बालाः स्वाध्यायमधिकुर्वते (भा० वन० ३३।८२) । श्वदृतौ क्षीरम् (८१) इत्यादिश्लोकं स्त्रियो नित्यं वेदववनवत् पठन्तीति नीलकण्ठः । भवादृशाश्चेदधिकुर्वते रतिं निराश्रया हन्त हता मनस्विता (कि० १।४३) । अधिकुर्वते स्वीकुर्वते । अभिज्ञानशाकुन्तलं नाम नाटकं प्रयोगेणाधिक्रियताम् (श० १) । प्रयोग विषयतां नीयतामित्यर्थः । अव्यक्तोऽहः सङ्घातो दशरात्रमधिकुर्वीत (शां० श्रौ० १६।२०।३) । पत्रभङ्गशोषणाधिकृतश्रवणपल्लवानिलम् (दशकु० पृ० २१०) । अधिकृतो व्यापृतः । दृप्तविनयाधिकृतः (रघु० ६।६२) । अधिकृतो नियुक्तः । पाण्डवेन ह्यहं तात अश्वेष्वधिकृतः पुरा (भा० वि० ३।६) । अधिष्ठातृत्वेन नियुक्तः । संभावना ह्यधिकृतस्य तनोति तेजः (कि० ६।४६) । अधिकृतस्य नियुक्तस्य कार्यनिरूढौ । तत्त्वजिज्ञासायां सम्यक् श्रद्धयाऽधिकृताधिकाराः । अधिकृतः स्वीकृतः । प्रज्ञा तु मन्त्रेऽधिकृता न शौर्यम् (भट्टौ १२।२२) । अधिकृता समर्था, प्रियङ्करत्वार्हा । गुणाः प्रियत्वेऽधिकृता न संस्तवः (कि० ४।२५) । उक्तोऽर्थः । अहं तेऽधिकृता पत्नी (भा० पु० १०।५५।१२) । अधिकृता स्वीकृता विधिवदूढा । अधिकृत्य कृते ग्रन्थे (पा० ४।३।८७) । अधिकृत्य विषयीकृत्य । ताभ्यामुभाभ्यां संभूय प्रमदामधिकृत्य ताम् (रा० ३।१६।१८) । अधिकृत्य निमित्तीकृत्य । अथशब्दस्याधिकारोऽर्थः । अधिकारश्चाधिक्येन प्राधान्येनारम्भणम् (सां० सूत्रे० १।३ । विज्ञानभिक्षुः) । अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते (भाष्यम्) । अधिकारः प्रस्तावः । यः पौरवेण राज्ञा धर्माधिकारे नियुक्तः (शा० १) । धर्माधिकारे धर्मविक्षणे । निर्णयाधिकारे

ब्रवीमि (माल० १)। **निर्णायकपदे स्थितेत्यर्थः।** स्वाधिकारभूमौ वर्तिष्यते (शा० ७)। **अधिकारः प्रशासनम्।** स्वाधिकारात्प्रमत्तः (मेघ० १)। **अधिकारो नियोगः। वत्सेऽधिकारः स्थितः** (महावीर० ४।३८)। **अधिकारः स्वाम्यम्।** अधिकारः फले स्वाम्यमधिकारी च तत्प्रभुः (सा० द०)। महत्खलु पुरुषाधिकारं ज्योतिः (माल० १)। **पुरुषाधिकरणमित्याह।** अविरतोऽयं लोकतन्त्राधिकारः (शा० ५)। **अधिकारो नियोगः कृत्यम्।** महत्यधिकारे मम पुत्रको नियुक्तः (माल० १)। **महत्यधिकारे गुरुणि कार्ये।** निषेकादिः श्मशानान्तो मन्त्रैर्यस्योदितो विधिः। तस्य शास्त्रेऽधिकारोऽस्मिञ्ज्ञेयो नान्यस्य कस्यचित् (मनु० २।१६)॥ **अधिकारस्तदर्हता।** राघवस्तत्र तदा प्रलापाञ्शुश्राव लोकस्य समागतस्य। आत्माधिकारा विविधाश्च वाचः··· (रा० २।१७।४३)॥ **आत्माधिकारा आत्मानमधिकृत्य प्रवृत्ताः।** कथा विचित्राः पूतनाधिकाराः (भा०)। **उक्तोऽर्थः। व्याकरणशास्त्रेऽधिकारो नाम विधिविशेषो यस्य विधेयार्थो वक्ष्यमाणानि विध्यन्तराणि व्याप्नोति। स च त्रेधा स्मर्यते**—सिंहावलोकितं चैव मण्डूकप्लुतमेव च। गङ्गाप्रवाहवच्चापि अधिकारस्त्रिधा मतः॥ रामाधिकरणाः कथाः (रा०)। **रामविषयिण्यः।** स्वान् दोषान्कथयन्ति नाधिकरणे (मृच्छ० ६।३)। **अधिकरणमक्षदर्शकस्याऽऽस्थानम्।** शास्त्रविभागविशेषश्चाप्यधिकरणं भवति। तच्च षडवयवात्मकम्। विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्। निर्णयश्चेति सिद्धान्तः शास्त्रेऽधिकरणं स्मृतम्॥ आधारोऽधिकरणम् (पा० १।४।४५)। विप्रतिषिद्धं चानधिकरणवाचि (पा० २।४।१३)। **अधिकरणं द्रव्यम्।** तत्पुरुषः समानाधिकरणः कर्मधारयः (१।२।४२)। **अधिकरणं कारकम्, अभिधेयं च।** प्रत्यक्षाश्च परोक्षाश्च सर्वाधिकरणेष्वथ। वृत्तेर्भरतशार्दूल नित्यं चैवान्ववेक्षणम् (भा० शां० ५९।६८)॥ **अधिकरणेषु जनोपवेशनस्थानेषु चत्वरादिषु।**

**—क्रम् (क्रमु पादविक्षेपे)।** सहस्राक्षनियोगात्स पार्थः शक्रासनं गतः। अध्यक्रामदमेयात्मा द्वितीय इव वासवः (भा० वन० ४३।२२)। **अध्यक्रामत् आरोहत्।**

**— क्षि (क्षि निवासगत्योः)।** यस्य विक्रमणेष्वधिक्षियन्ति भुवनानि (ऋ० १।१५४।२)। **अधिक्षियन्ति अन्तर् वसन्ति।** अन्धसी अधिक्षियन्ति पूरवः (ऋ० ७।९६।२)। **अधिक्षियन्ति अधिगच्छन्ति।**

**—क्षिप् (क्षिप प्रेरणे)।** किं मां संभृतदोषैरधिक्षिपथ (शा० ५)।

**निन्दयेत्यर्थः**। न मे पादरजसा तुल्य इत्यधिक्षिप्तः (माल० १) **अधिक्षिप्तोऽवमानितः**। श्रीनिकेतम्...अधिक्षिपत् (वदनारविन्दम्) (भा० पु० ३।२८।३०)। **अधिक्षिपत् उपहसत्, न्यक्कुर्वत्, अधरयत्**। दोषमधिक्षिपेत् (सुश्रुत० २।३३७।८)। **अधिक्षिपेत्, अपनयेत् पराकुर्यात्**। तस्मादेतैरधिक्षिप्तः सहेतासंज्वरः सदा (मनु० ४।१८५)। **अधिक्षिप्त आक्रुष्ट उपक्रुष्टोऽवज्ञातोऽवमानितः। अधिक्षिप्तः प्रणिहित इति मेदिनी**। अधिक्षिप्तः कृष्णशकुनिना (कौ० सू० ४४)। **अधिक्षिप्तोऽधः क्षिप्तः**। भवत्यधिक्षेप इवानुशासनम् (कि० १।२८)। **अधिक्षेपोऽवज्ञा तिरस्कारः**।

**—गण् (गण संख्याने)**। को वीर्याण्यधिगणयेत् सहस्रजिह्वः (भा० पु० ५।२५।१२)। **अधिगणयेद् अधिकं गणयेत्**।

**—गम् (गम्लृ गतौ)**। अधि वा अगन्न त्वभिपत्तुं शक्नुमः (श० ब्रा० ६।५।१।६)। **अध्यगन्=अध्यगमन् प्राप्नुवन्**। गुणालयोप्यसन्मन्त्री नृपतिर्नाधिगम्यते (पञ्चत० १।४२८)। **नाधिगम्यते नाधिगम्यो भवति, अभिगम्यो न भवति, उपसर्पणीयो न भवतीत्यर्थः**। कच्चिन्मित्राणि भजते मित्रैर्वाप्यधिगम्यते (रा० ५।३३।४३)। **मित्रैः सन्निधिरते प्राप्यत इत्याह**। यथा खनन् खनित्रेण नरो वार्यधिगच्छति। तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति (मनु० २।२१८)॥ **अधिगच्छति विन्दति, लभते**। यत्स्वप्ने अन्नमश्नामि न प्रातरधिगम्यते (अथर्व० २।६।३)। **अधिगम्यते प्राप्यते**। अपि धन्वन्नपोधिगच्छेत् (श० ब्रा० १४।१।१।८)। **उक्तोऽर्थः**। अथ परा, यया तदक्षरमधिगम्यते (मुं० उ०)। **अधिगम्यतेऽवगम्यते**। विचिन्त्य नाधिगच्छामि गमनाय इतरस्य वा (भा० वन० २३८।७)। **नाधिगच्छामि न व्यवस्यामि नावधारयामि, न निश्चिनोमि**। वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च (याज्ञ० १।६६)। **अधिगच्छेत्, विद्यात्, विजानीयात्**। धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः (भ० शां० )। **अधिगतोऽधीतः**। किमित्येवं पृच्छस्यनधिगतरामायण इव (उत्तर० ६।३०)। **उक्तोऽर्थः**। अधिगतमखिलसखीभिरिदं तव वपुः (गी० गो० ११७)। **अधिगतं परिगतं परिक्षिप्तं परिवेष्टितम्**। तेभ्योऽधिगन्तुं निगमान्तविद्यां वाल्मीकिपार्श्वादिह पर्यटामि (उत्तर० २।३)। **अधिगन्तुं प्रतिपत्तुम् अवगन्तुं शिक्षितुं ग्रहीतुम्**। कार्यं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव (माल० १।६)। **अधिगन्तुं प्राप्तुम्, निर्वर्तयितुम्**। श्रेयांसि सर्वाण्यधिजग्मुषस्ते (रघु० ५।३४)। **प्राप्तवत इत्यर्थः**। न च कश्चिदप्यनधिगमनीयो नामास्त्यापदाम् (पञ्चत०)। **अनधिगमनीयोऽनुपगन्तव्यः, अनासाद्यः**। येनाक्षरसमाम्नायमधिगम्य महेश्वरात् (पा० शिक्षा)।